श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# तत्त्वसङ्ख्यानम्

[ द्वितीयभागात्मकम् ]

श्रीमज्जयतीर्थ(टीकाकृत्पाद)कृत 'विवरण' ाख्यया

टीकया

अपूर्वाभिः षट्टिप्पणीभिश्च

उद्बोधितम्

श्रीमन्मध्वसिद्धान्ताभिवृद्धिकारिणीसभाऽध्यक्षाणां

श्री१००८श्रीमत्सत्यप्रमोदतीर्थश्रीचरणानाम्

आज्ञानुसारेण

दिवाण उत्तरादिमठ इत्येतेषां कृते

'पूर्णप्रज्ञप्रकाशनम्'

इतिनामकसंस्थायाः सञ्चालकेन

भीमसेन बाळाचार्य वरखेडकर

इत्यनेन

प्रद्युम्नाचार्य-नरसिंहाचार्य-स्मारकसमितेः

नैकविदुषां साहाय्येन सम्पाद्य संशोध्य च

तिरुमल-तिरुपति-देवस्थानस्य आर्थिकसहाय्येन

पण्ढरपुरे, हैद्राबादे, बेङ्गळूरे च

प्रकाशितम्

पूर्णप्रज्ञप्रकाशनम्

अस्याः संस्थायाः कार्यालयाः –

प्रधानकार्यालयः

उत्तरादिमठ पो· पण्ढरपूर ( ४१३३०४ ) महाराष्ट्र

उपकार्यालयाः

१) सुधामुद्रणमन्दिरम्, उत्तरादिमठीयावारः बसवनगुडी,
पो· बेङ्गळूर (५६०००४ ) कर्नाटक

२) ४-२-४७ चौधरीबाग सुलतानबझार
पो. हैद्राबाद ( ५००००१ ) आन्ध्र

३ ) १०२/२ गोखलेनगरवसतिः, रामन्थापुरम्,
पो. हैद्राबाद ( ५०००९१ ) आन्ध्र

---

अयं ग्रन्थः

धनञ्जय बाळाचार्य वरखेडकर

इत्यस्य

सुधामुद्रणमन्दिरम्

उत्तरादिमठीयावारः, बसवनगुडी, बेङ्गळूर–४.

इत्यस्मिन्मुद्रणालये मुद्रितः

# तत्त्वसङ्ख्यानम्

( टीकया टिप्पणीषट्केन च संवलितम् )



द्वितीयो भागः

( १७ टी. विषयः– १. 'द्विधेतरत्'इतिमूलाद्यपद्ये 'द्विधा'इतिवचन-सूचितार्थकथनम् । २. अभावस्य भावापेक्षया आदौ निरूपणे प्रयोजनम् ॥ ३. 'प्राक्'इत्यादिपादद्वयस्य विग्रहशेषपूरणाभ्यां सह वाक्ययोजना । )

**टी०—'द्विधा' इत्युक्त्या भावाभावयोरवान्तरभेदोऽस्तीति सूचितम् । तत्र[1] भावनिरूपणात् अभावनिरूपणस्य अल्पत्वात् सूचीकटाह-न्यायेन पश्चादुद्दिष्टमप्यभावम् आदौ विभागेन उद्दिशति 'प्राक्' इति ।**

( ४ त. विषयः– अभावत्रैविध्यम् । )

**तत्त्वसङ्ख्यानम्–**

## प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ॥ १½ ॥

**टी०—प्राक्त्वेन, प्रध्वंसत्वेन सदात्वेन (च) उपलक्षितोऽभावः, त्रिविधः, इष्यते । 'प्रामाणिकैः' इति शेषः ।**

( १७ स. विषयः– १. विभागक्रमानुपपत्त्या 'तत्र'इत्यादिवाक्यस्य-अवतरणम् । २. सूचीकटाहन्यायोदाहरणप्रयोजनम् । ३ क) 'प्राक्त्वेन'-इत्यादिवाक्यस्य शङ्कोत्तराभिप्रायपूर्वकमवतरणम्, ख) 'उपलक्षित'पदाभिप्रायः । ४. शेषपूरणप्रयोजनम् । )

ननु उत्तरत्र अभावविभागः क्रियते, सोऽनुपपन्नः, उद्देशानुसारेण भावस्यैवादौ विभजनीयत्वात्; इत्यत आह **तत्रेति** ।

नन्वस्तु अभावनिरूपणस्य भावनिरूपणादल्पत्वम्, तथाप्यादौ तन्निरूपणं कुतः? इत्यत आह **सूचीकटाहेति** ॥

---

१. केशवभट्टीटिपण्यां प्रतीकग्रहणम् 'अत्रेति' इति ।

नन्वभावत्रैविध्यं प्रतिज्ञाय एकविधत्वोक्तौ तदनुपपन्नम्, इत्यतो द्वन्द्वान्ते श्रूयमाणस्त्वप्रत्ययः प्रत्येकं सम्बध्यत इति नानुपपत्तिरित्यभिप्रेत्याह **प्राक्त्वेनेति** ॥ करणत्वकर्तृत्वयोरभावेन तृतीया इत्थंभूतलक्षणे इत्याह **उपलक्षित इति** ।

अप्रामाणिकाङ्गीकारस्य उक्तविभागसमर्थकत्वाभावादाह **प्रामाणिकैरिति** ।

(१७ **के.** विषयः– १. सूचितावान्तरभेदप्रकारप्रदर्शनस्थलनिर्देशः । २क. उद्देशक्रमाद्व्यत्यस्तक्रमेण विभजने प्रयोजनप्रश्नेन 'अत्र'इत्यादिवाक्यस्यावतरणम् । ख) भावनिरूपणादभावनिरूपणस्य प्राथम्ये नियामकप्रश्नेन 'सूची'इत्यादिन्यायस्यावतरणम् । ग) 'विभागेनोद्दिशति'इतिपदस्यार्थः । ३. 'प्राक्त्वेन'इत्यादिवाक्यस्य शङ्कोत्तराशयपूर्वकमवतरणम् । ४. 'उपलक्षितः' इतिपदस्याभिप्रायः प्रकारद्वयेन । ५. शेषपूरणप्रयोजनञ्च । )

**सूचितमिति** । तत्प्रकारश्च तत्त्वविभागव्युत्पादनावसरे प्रदर्शितो द्रष्टव्यः ।

ननु यथोद्देशं भावो विभजनीयस्तत्कुतो व्यत्यासः? इत्यत आह– **अत्रेति** ॥ ननु अभावनिरूपणस्य भावनिरूपणाल्पत्वेऽपि कुतः प्राथम्यम्, नियामकानुपलब्धेः; इत्यत आह **सूचीकटाहन्यायेनेति** ॥ **विभागेनोद्दिशति**= विभागपूर्वकमुद्दिशतीर्थः ॥

ननु च अभावस्य त्रैविध्यं प्रतिज्ञाय विधात्रयमुद्दिष्टं भवति, एकविधामात्रप्रदर्शनं तु अनुचितम्; इत्यतो द्वन्द्वान्ते श्रूयमाणस्य 'त्व'प्रत्ययस्य प्रत्येकमभिधानान्न दोषः इत्याशयेनाह **प्राक्त्वेनेति** ॥ कर्तृत्वकारणत्वयोरसंभवात् कथं प्राक्प्रध्वंससदात्वेनेति तृतीया[1] ? इत्यतः इत्थंभूतलक्षणे तृतीया, इत्याह **उपलक्षित इति** । प्राक्त्वादेः[2] कालवृत्तित्वेन अभाववृत्तित्वाभावात् कथं तेन रूपेण अभावविभागः ? इत्यतः **सदात्वोपलक्षित इति**; इत्यप्याहुः ।

तेन रूपेण अप्रामाणिकाङ्गीकारस्य स्वोक्तविभागासमर्थकत्वादाह **प्रामाणिकैरिति शेष इति** ।

---

१. तृतीयेत्यत आह । इत्थंपूर्वभूतलक्षणम् । २. प्राक्त्वादेव ।

( १७ **वि.** विषयः– **१क.** प्रागित्यादिमूलावतरणस्य प्रारम्भस्थलं 'द्विधेत्युक्त्या' इति, **ख.** द्विधेत्यादिवाक्यस्य प्रतिपदार्थः तदर्थज्ञापकेन सहितः । **२क.** निरूपणक्रमव्यत्यासशङ्कया 'तत्र' इत्यादिवाक्यस्य अवतरणम् , **ख.** पदार्थश्च । **३क.** अभिप्रायवाक्ययोजनाभ्यां सह 'प्राक्त्वेन' इत्यादिवाक्यस्यावतरणम्, **ख.** पदार्थश्च । **४क.** निवर्त्यशङ्काप्रदर्शनेन 'प्रामाणिकैः' इतिपदस्यावतरणम् , **ख.** अर्थश्च । **५.** त्रयाणामप्यभावाना-मुद्देशक्रमबीजानि । )

उत्तरवाक्यमवतारयति **द्विधेत्युक्त्येति** । अस्वतन्त्रं भावोऽभावश्चेति द्विधेत्युक्त्या; भावाभावयोरवान्तरभेदः= भावे भावविभाजकधर्मप्रयुक्तो भेदः, अभावे अभावविभाजकधर्मप्रयुक्तो भेदः च; अस्तीति, सूचितम्=अर्थाज्ज्ञा-पितम् ; इत्यर्थः । अन्यथा भावोऽभावश्चेति द्वे अस्वतन्त्रतत्त्वे इत्येव ब्रूयादिति भावः ।

ननु तथापि प्रथमोद्दिष्टत्वाद्भावस्यैवादौ निरूपणं कार्यम् न[3] तु पश्चात् उद्दिष्टस्याभावस्य; इत्यत आह **तत्रेति** । भावाभावयोर्मध्ये, भावनिरूपणात्= विभक्ततया भावस्वरूपकथनात् , अभावनिरूपणस्य= विभक्ततया अभावस्वरूप-कथनस्य; इत्यर्थः ॥ विभागेनोद्दिशति=विभागेन सह नाममात्रेण कीर्तयतीत्यर्थः॥

प्राक्प्रध्वंससदात्वेनेत्यत्र द्वन्द्वान्ते श्रूयमाणः 'त्व'प्रत्ययः प्रत्येकमभिसम्ब-ध्यते इत्यभिप्रेत्य अस्य पदस्य अर्थं वदन् वाक्यं योजयति **प्राक्त्वेनेति** । प्राग-भावत्वेन, प्रध्वंसत्वेन= विनाशत्वेन, सदाऽऽभावत्वेन, व्यावर्तकधर्मेण; उप-लक्षितो= व्यावृत्तो, अभावः, त्रिविधः=प्रागभावप्रध्वंससदाभावभेदेन त्रिविधः इत्यर्थः ।

'इष्यते' इत्यस्य वैयर्थ्यशङ्कानिरासायाह **प्रामाणिकैरिति** । प्रमाण-सिद्धार्थाङ्गीकारिभिरित्यर्थः ।

---

१, २) द्विविधेत्युक्त्या ३) न तु यद्वा उद्दिष्टस्य

नन्वभावत्रैविध्यं प्रतिज्ञाय एकविधत्वोक्तौ तदनुपपन्नम्, इत्यतो द्वन्द्वान्ते श्रूयमाणस्त्वप्रत्ययः प्रत्येकं सम्बध्यत इति नानुपपत्तिरित्यभिप्रेत्याह **प्राक्त्वेनेति** ॥ करणत्वकर्तृत्वयोरभावेन तृतीया इत्थंभूतलक्षणे इत्याह **उपलक्षित इति** ।

अप्रामाणिकाङ्गीकारस्य उक्तविभागसमर्थकत्वाभावादाह **प्रामाणिकैरिति** ।

(१७ **के**. विषयः— १. सूचितावान्तरभेदप्रकारप्रदर्शनस्थलनिर्देशः । २क. उद्देशक्रमाद्व्यत्यस्तक्रमेण विभजने प्रयोजनप्रश्नेन 'अत्र' इत्यादिवाक्यस्यावतरणम् । ख) भावनिरूपणादभावनिरूपणस्य प्राथम्ये नियामकप्रश्नेन 'सूची' इत्यादिन्यायस्यावतरणम् । ग) 'विभागेनोद्दिशति' इतिपदस्यार्थः । ३. 'प्राक्त्वेन' इत्यादिवाक्यस्य शङ्कोत्तराशयपूर्वकमवतरणम् । ४. 'उपलक्षितः' इतिपदस्याभिप्रायः प्रकारद्वयेन । ५. शेषपूरणप्रयोजनञ्च । )

**सूचितमिति** । तत्प्रकारश्च तत्त्वविभागव्युत्पादनावसरे प्रदर्शितो द्रष्टव्यः ।

ननु यथोद्देशं भावो विभजनीयस्तत्कुतो व्यत्यासः? इत्यत आह— **अत्रेति** ॥ ननु अभावनिरूपणस्य भावनिरूपणाल्पत्वेऽपि कुतः प्राथम्यम्, नियामकानुपलब्धेः; इत्यत आह **सूचीकटाहन्यायेनेति** ॥ **विभागेनोद्दिशति**= विभागपूर्वकमुद्दिशतीर्थः ॥

ननु च अभावस्य त्रैविध्यं प्रतिज्ञाय विधात्रयमुद्दिष्टं भवति, एकविधामात्रप्रदर्शनं तु अनुचितम्; इत्यतो द्वन्द्वान्ते श्रूयमाणस्य 'त्व' प्रत्ययस्य प्रत्येकमभिधानान्न दोषः इत्याशयेनाह **प्राक्त्वेनेति** ॥ कर्तृत्वकारणत्वयोरसंभवात् कथं प्राक्प्रध्वंससदात्वेनेति तृतीया[1]? इत्यतः इत्थंभूतलक्षणे तृतीया, इत्याह **उपलक्षित इति** । प्राक्त्वादेः[2] कालवृत्तित्वेन अभाववृत्तित्वाभावात् कथं तेन रूपेण अभावविभागः? इत्यतः **सदात्वोपलक्षित इति**; इत्यप्याहुः ।

तेन रूपेण अप्रामाणिकाङ्गीकारस्य स्वोक्तविभागासमर्थकत्वादाह **प्रामाणिकैरिति शेष इति** ।

---

१. तृतीयेत्यत आह । इत्थंपूर्वभूतलक्षणम् । २. प्राक्त्वादेव ।

( १७ **वि.** विषयः– **१क.** प्रागित्यादिमूलावतरणस्य प्रारम्भस्थलं 'द्विधेत्युक्त्या' इति, **ख.** द्विधेत्यादिवाक्यस्य प्रतिपदार्थः तदर्थज्ञापकेन सहितः । **२क.** निरूपणक्रमव्यत्यासशङ्कया 'तत्र' इत्यादिवाक्यस्य अवतरणम् , **ख.** पदार्थश्च । **३क.** अभिप्रायवाक्ययोजनाभ्यां सह 'प्राक्त्वेन' इत्यादिवाक्यस्यावतरणम् , **ख.** पदार्थश्च । **४क.** निवर्त्यशङ्काप्रदर्शनेन 'प्रामाणिकैः' इतिपदस्यावतरणम् , **ख.** अर्थश्च । **५.** त्रयाणामप्यभावाना-मुद्देशक्रमबीजानि । )

उत्तरवाक्यमवतारयति **द्विधेत्युक्त्येति** । अस्वतन्त्रं भावोऽभावश्चेति द्विधेत्युक्त्या[1]; भावाभावयोरवान्तरभेदः= भावे भावविभाजकधर्मप्रयुक्तो भेदः, अभावे अभावविभाजकधर्मप्रयुक्तो भेदः च; अस्तीति, सूचितम्=अर्थाज्ज्ञा-पितम् ; इत्यर्थः । अन्यथा भावोऽभावश्चेति द्वे अस्वतन्त्रतत्त्वे इत्येव ब्रूयादिति भावः ।

ननु तथापि प्रथमोद्दिष्टत्वाद्भावस्यैवादौ निरूपणं कार्यम् न[3] तु पश्चात् उद्दिष्टस्याभावस्य; इत्यत आह **तत्रेति** । भावाभावयोर्मध्ये, भावनिरूपणात्= विभक्ततया भावस्वरूपकथनात् , अभावनिरूपणस्य= विभक्ततया अभावस्वरूप-कथनस्य; इत्यर्थः ॥ विभागेनोद्दिशति=विभागेन सह नाममात्रेण कीर्तयतीत्यर्थः॥

प्राक्प्रध्वंससदात्वेनेत्यत्र द्वन्द्वान्ते श्रूयमाणः 'त्व'प्रत्ययः प्रत्येकमभिसम्ब-ध्यते इत्यभिप्रेत्य अस्य पदस्य अर्थं वदन् वाक्यं योजयति **प्राक्त्वेनेति** । प्राग-भावत्वेन, प्रध्वंसत्वेन= विनाशत्वेन, सदाऽऽभावत्वेन, व्यावर्तकधर्मेण; उप-लक्षितो= व्यावृत्तो, अभावः, त्रिविधः=प्रागभावप्रध्वंससदाभावभेदेन त्रिविधः इत्यर्थः ।

'इष्यते' इत्यस्य वैयर्थ्यशङ्कानिरासायाह **प्रामाणिकैरिति** । प्रमाण-सिद्धार्थाङ्गीकारिभिरित्यर्थः ।

---

१, २) द्विविधेत्युक्त्या ३) न तु यद्वा उद्दिष्टस्य

प्रामाणिकप्रतियोगिकत्वात्प्रागभावप्रध्वंसाभावयोः अप्रामाणिकप्रतियोगिकसदाभावापेक्षया प्रथममुद्देशः कृतः। तत्रापि प्रागभावस्य पूर्वभावित्वात् प्रध्वंसापेक्षया प्रथममुद्देशः कृतः। अवशिष्टस्यान्ते निर्देशः।

( १७ मु. विषयः— १. षड्डापत्तिभिः द्विधेत्यादिवाक्यद्वयस्य-अवतरणम्। २. भ्रान्तान्वयशङ्कया 'प्राक्त्वेन'इत्यादिवाक्यस्यावतरणम्। ३. 'उपलक्षितः'इतिपदस्य स्पष्टार्थः। ४. उपलक्षितस्य विशेषणस्य हेतु-गर्भस्य प्रवृत्तिः। ५. 'प्रामाणिकैः'इतिपदस्य अवतरणम्, भावश्च।)

"प्राक्प्रध्वंसेतिमूले 'भावः' इति पदच्छेदेन 'भावः प्रतिपाद्यते'इति प्रतीयते; तदयुक्तम्, उत्तरमूलेन पौनरुक्त्यापत्तेः। न च वाच्यम् 'अभाव'-इति पदच्छेदेन न दोष इति; अप्राप्तत्वेन, त्रैविध्यानुवादेन अभावत्वविधानायोगात्॥ न च वाच्यम् अभावानुवादेन त्रैविध्यविधानमिति, प्रागित्यादेर्वैयर्थ्यात्। न च वाच्यम् विशेषोद्देशोऽयमिति, अभावस्य पश्चादुद्दिष्टत्वेन आदौ विभागेन उद्देशायोगात्। न च वाच्यम् भावापेक्षया अभावस्य अल्पनिरूपणवत्तया आदौ प्रतिपाद्यते, अल्पनिरूपणत्वबहुनिरूपणत्वयोः पौर्वापर्यनिमित्ततायाः क्वाप्यदृष्टत्वेन असम्भवादिति। न च सूचीकटाहन्यायेन[2] सम्भव इति, तथाप्यनाकाङ्क्षितत्वेन अवक्तव्यत्वात्। न च आकाङ्क्षायामेव निरूप्यत इति, बीजाभावेन आकाङ्क्षाया एवायोगात्॥" इतीमाः शङ्काः परिहरन्नवतारयति द्विधेत्यादिना[3]॥

प्रागित्यादेरेकप्रकारत्वभ्रान्तिम्[4]; तथा प्राक्त्वसदात्वयोः कालनिष्ठत्वेन प्रध्वंसत्वस्य (च) विनाशजनकव्यापारनिष्ठत्वेन (तेषां) अभावनिष्ठत्वा-

१. इदं वाक्यं ग्रन्थान्तरे नास्ति। २. न्यायेनासम्भव इति।
३. द्विविधेत्यादिना। ४. भ्रान्तितया।
(.) कंसचिह्नाङ्कितं उपलब्धलिपिषु नास्ति; परम् आवश्यकं भाति।

भावात्, अभावे साक्षात्तदाधारत्वप्रतीत्या[1] त्रिविधोऽभाव इति यथाश्रुतान्वयभ्रान्तिम्; वारयितुं व्याचष्टे **प्राक्त्वेनेत्यादिना** ।

**उपलक्षित इति** । अभावस्य; कालद्वारा प्राक्त्वसदात्वाधिकरणत्वेन, प्रध्वंसानन्तरत्वेन प्रध्वंसद्वारा प्रध्वंसत्वाधिकरणत्वेन, परम्परासम्बन्धः; इत्यर्थः ।

ननु प्राक्त्वेनोपलक्षिताभावस्य त्रैविध्ये नवविधत्वदोषप्रसङ्गः; इति चेत् न; भावानवबोधात्; 'अभावस्य त्रैविध्यं न सम्भवति प्रातिस्विकानन्तप्रकारत्वात्' इत्याशङ्कायाम्, अवच्छेदकत्रयेण क्रोडीकृतस्याभावस्य त्रैविध्यं नासम्भवि, इत्यभिप्रायेण प्राक्प्रध्वंससदात्वेनोपलक्षितस्य **विशेषणस्य हेतुगर्भस्य प्रवृत्तत्वात्** इति ।

यदर्थ इष्यत इत्युदितं तदाह **प्रामाणिकैरिति** । कर्तृसामान्यस्य बाधितत्वादिति भावः ।

( १७ **का.** विषयः– १. उत्तरमूलस्यावतरणप्रारम्भो 'द्विधा'इत्यनेन । २. अवान्तरभेदसूचनाज्ञापकम् । ३. 'सूचितम्'इत्यनन्तरं शेषपूरणम् । ४. क्रमोल्लङ्घनकारणप्रश्नेन 'तत्र'इत्यादिवाक्यस्य अवतरणम् । ५. 'तत्र'-पदस्य प्रकारद्वयेनार्थः, सम्बन्धश्च । ६. 'सूचीकटाह'इयुक्तेर्नियम्यप्रदर्शनम् । ७. भावार्थेन 'प्राक्त्वेन'इत्यादिवाक्यस्यावतरणम् । ८क. तृतीयान्तानाम् अभावे अन्वयस्य प्रयोजनम् । ख. 'प्राक्' इत्यादीनां गूढार्थकथनेन प्राक्त्वसदात्वयोः अभावेऽनन्वयशङ्कापुरःसरं तयोर्गूढार्थकथनेन तन्निरासश्च । )

उत्तरमूलमवतारयति **द्विधेति** ।

अन्यथा द्वावित्यवक्ष्यत् इति ।

**सूचितमित्यनन्तरं** 'अतो भावाभावविभागो वक्तव्यः' इति पूरणीयम् ।

तथापि क्रमोल्लङ्घनं कुत इत्यत आह **तत्रेति** ।

---

१, प्रतीतित्रिविधोभाव ।

**तत्रेति** । भावाभावनिरूपणयोर्मध्ये इत्यर्थः, भावाभावयोर्मध्ये इति वाऽर्थः ॥ अभावमित्यनेन सम्बन्धः ।

अल्पत्वस्य प्राथम्यनियामकत्वयुक्तिः **सूचीति** ॥

द्वन्द्वात्परप्रत्ययस्य प्रत्येकमभिसम्बन्धः, इति भावेनाह **प्राक्त्वेनेति** ।

अत्र **प्राक्त्वादेः** अभेदेन विधान्वयसम्भवेऽपि प्राक्त्वादिविशिष्टाभावत्वस्य प्रागभावादिलक्षणत्वलाभाय उपलक्षित इत्यनेन **अभावे अन्वयः** उक्तः । न च प्राक्त्वसदात्वयोः कालधर्मत्वात्कथमभावविशेषणत्वमिति वाच्यम्, प्रागित्यादेः प्राक्तनादिपरत्वात् ।

१७भ.- ×

( १८. टी. विषयः- १. प्रागभावलक्षणम् ।
२. लक्षणोक्तार्थस्य मूलारूढता । )

**टी०— उत्तरैकावधिरभावः प्रागभावः । प्रतियोग्युत्पत्तेः प्रागेवास्ति, उत्पन्ने तु नास्ति; इति कृत्वा ।**

(१८ **स.** विषयः- **१.** प्रागभावलक्षणोक्तेरवतरणम् । २. लक्षणोक्तेः खण्डार्थः, शेषः, अखण्डार्थश्च । ३. लक्षणे क. अविद्यमानाभावः, ख. प्रतियोग्युत्पत्त्युत्तरमारभ्य, ग) अभावः, घ) उत्पत्तिः, इतिपदानां कृत्यानि । ४. प्रकारान्तरेण लक्षणोक्तेः अर्थः । ५. प्रकारान्तरेण लक्षणे क. उत्तरैकावधिः, ख) अभावः, ग) एकः, इतिपदानां कृत्यानि । ६. संग्रहेण पदत्रयनिरसनीयातिव्याप्तित्रयस्थलप्रदर्शनम् । )

प्रथमोद्दिष्टं प्रागभावं लक्षयति **उत्तरैकावधिरिति** ।

**उत्तरः**= उत्तरकालः, प्रतियोग्युत्पत्तेरिति शेषः; स **एव अवधिः**= अविद्यमानत्वस्य समयो, **यस्य**; इत्यर्थः ॥ प्रतियोग्युत्पत्त्युत्तरमारभ्यैव अविद्यमानाभावः प्रागभावः ॥

---

१. इदं प्रतीकमेव उपलब्धग्रन्थेषु नास्ति ।

अभावः प्रागभावः; इत्युक्ते अत्यन्ताभावे अतिव्याप्तिः । अतः 'अविद्यमानाभावः' इत्युक्तम् ।

तावत्युक्ते प्रध्वंसे अतिव्याप्तिः, तस्य च प्रतियोगिन इव तत्प्रागभावस्यापि विरोधित्वेन प्रतियोग्युत्पत्तेः पूर्वमविद्यमानत्वात्; अतः 'प्रतियोग्युत्पत्त्युत्तरमारभ्य' इति । तस्य च प्रतियोग्युत्पत्त्यनन्तरमपि सत्त्वान्नातिव्याप्तिः ।

भावरूपाविद्यादौ अतिव्याप्तिवारणाय 'अभाव'पदम् ।

अत्र 'उत्पत्ति'पदं उत्पादकसामग्रीपरम् । अतो भावाभावयोरेकदाविरुद्धत्वेन प्रतियोग्युत्पत्तिसमये तदभावस्याभावेन उक्तलक्षणस्याभावेऽपि प्रतियोग्युत्पादकसामग्र्युत्तरक्षण एव अविद्यमानत्वमस्त्येवेति नासम्भव इति ध्येयम् ॥

अथवा; उत्तरैकावधिः = उत्तरकाल एव एकः, अवधिः= अविद्यमानत्वस्य समयः, यस्य; इत्यर्थः । सोऽभावः प्रागभाव इति यावत् ।

अत्र प्रध्वंससदाभावयोरतिव्याप्तिवारणाय 'उत्तरैकावधिः' इति ।

भावरूपाविद्यादावतिव्याप्तिवारणाय 'अभाव'पदम् ।

ननु उत्तरावधिमत्त्वेनैव प्रध्वंससदाभावयोरतिव्याप्तिवारणात् 'एक'पदं व्यर्थम् ॥, अथ घटादिरूपे प्रागभावप्रध्वंसेऽतिव्याप्तिवारणाय एकपदम्; न चैवं घटादिरूपे प्रध्वंसप्रागभावेऽव्याप्तिः स्यात् इति वाच्यम्, भावभिन्नस्यैव प्रागभावस्य लक्ष्यत्वेन घटादिरूपस्य तस्यालक्ष्यत्वात्; इति चेत्, प्रध्वंसप्रागभावरूपे अविद्यादावतिव्याप्तेरभावपदेन निरसनाय, अभावपदस्य भावभिन्नाभावपरत्वस्यावश्यकत्वेन घटादिरूपे प्रागभावप्रध्वंसे अतिव्याप्तिशङ्काविरहात् ॥; इति चेत्. मैवम्; उत्तरपदस्य केवलार्थक–एकपदसमभिव्याहृतस्य पूर्वावधिनिषेधमात्रपरत्वे । उत्तरैकावधिपदस्य पूर्वावधिरहितत्वेसति अवधिमात्रार्थपरत्वात् ।

---

१. सान्ताभावः इत्येकः पाठः । २. उत्तरावधिरिति

एवं च पूर्वावधिरहितत्वेन प्रध्वंसाभावे, अवधिमत्त्वेन सदाभावे, अभावपदेन (च) अविद्यादौ अतिव्याप्तिनिरासान्न कस्यापि वैयर्थ्यमिति ॥

( १८. के. विषयः- १. अनुवाद्यप्रागभावलक्षणकथकनिर्देशपूर्वकं प्रागभावलक्षणानुवादकत्वेन 'उत्तर'इत्यादिवाक्यस्यावतरणम् । २ क विग्रह-शब्दार्थकथनपूर्वकमसम्भवपरिहरणम् । ख. लक्षणस्य फलितार्थ-कथनञ्च । ३. टीकोक्तिफलितलक्षणे क. अभावः, ख. असत्, ग. प्रति-योग्युत्पादकसकलकारणसमवधानानन्तरम्, घ. एव, ङ. प्रतियोगी, च. उत्पत्तिः, छ. अनन्तरम् इतिपदानां कृत्यानि । ४क. मूले लक्षणानुक्तिशङ्कापरिहाराभ्यां 'प्रतियोग्युत्पत्तेः' इत्यादिवाक्यस्य अवतरणम् । ख. तत्सूचितलक्षणञ्च । ५. मूलसूचितलक्षणे क. अभावः, ख. वस्तु, ग. उत्पत्तिः, घ. प्राक्, ङ. एव इतिपदानां कृत्यानि । )

लक्षणावतीकारोक्तं प्रागभावलक्षणमनुवदति **उत्तरेति** ।

उत्तरः- 'प्रतियोग्युत्पत्तेः इति शेषः ।, स एव, अवधिः= अविद्य-मानसमयः, यस्येत्यर्थः । 'उत्पत्ति'शब्दश्च सकलकारणसमवधानार्थ एव विव-क्षितो, न[2] तु असतः सत्तासम्बन्धार्थः; अतो न सत्तासम्बन्धदशायां प्राग-भावासम्भवादसम्भवः ॥ ततश्च प्रतियोग्युत्पादकसकलकारणसमवधानानन्तरमेव असन् अभावः प्रागभावः इति फलितोऽर्थः ॥

अत्र घटसामग्र्यामतिव्याप्तिपरिहारार्थम् 'अभाव'पदम् ।

अत्यन्ताभावनिवृत्त्यै 'असत्' इति । तस्य च सदातनत्वेन असत्त्वा-भावान्न तत्रातिव्याप्तिः ॥

असन् अभावो ध्वंसोऽपि; इति तत्रातिव्याप्तिनिवृत्त्यै 'प्रतियोग्यु-त्पादकसकलकारणसमवधानानन्तरम्' इत्युक्तम् ।

---

१, लक्षावति २. न तु असत्तासम्बन्धार्थः । न सत्तासम्बन्धायाम्

तावत्युक्ते ध्वंसेऽतिप्रसङ्ग एव, घटलक्षणप्रतियोग्युत्पादकसकलकारणसमवधानानन्तरं घटध्वंसस्यासत्त्वात्; अत 'एवं'[1]पदम्। ततश्च घटध्वंसस्य प्रतियोगिसत्त्वादशायामविद्यमानत्ववत्, तत्प्रागभावदशायामप्यविद्यमानत्वेन, प्रतियोग्युत्पादकसकलकारणसमवधानानन्तरमेव विद्यमानत्वाभावात्; न तत्रातिप्रसङ्गः। प्रतियोगिवत्तत्प्रागभावस्यापि ध्वंसविरोधित्वात्।

मृदाद्युत्पादकसकलकारणसमवधानानन्तरमपि वर्तमानत्वात् घटप्रागभावस्य[2], असम्भवो मा भूदिति 'प्रतियोगि'पदम्।

'उत्पत्ति'पदं तु 'प्रागभावस्योत्पत्तिपर्यन्तमनुवृत्तिः, न तु ततः प्राक्निवृत्तिः' इति दर्शयितुं, न तु लक्षणान्तर्गतम्[3]। न हि घटात्पूर्वभावी[4] घटोत्पत्त्यनन्तरम्[5] अभावी घटप्रागभावादन्यः कश्चिदभावोऽस्ति, यद्व्यावृत्तये उत्पत्तिपदमावश्यकं स्यात्।

'अनन्तर'पदाभावे तु प्रतियोग्युत्पादकसकलकारणसमवधानात्पूर्वमित्यप्यापद्येत' ततश्च ध्वंसेऽतिव्याप्तिः; तन्निवृत्त्यर्थम् 'अनन्तरम्' इत्युक्तम् इति सर्वं सार्थकम्॥

मूले लक्षणानुक्त्या न्यूनत्वं परिहर्तुम् उद्देशेनैव सूचितं[6] तल्लक्षणमाह प्रतियोग्युत्पत्तेरिति। अनेन योऽभावो वस्तूत्पत्तेः प्रागेवास्ति स प्रागभावः इति लक्षणं सूचितं भवति।

अत्रापि घटसामग्र्यादावतिव्याप्तिवारणाय 'अभाव'पदम्।

घटप्रागभावस्य मृदाद्युत्पत्त्यनन्तरमपि सत्त्वेन असम्भवो मा भूदिति प्रतियोगिपरं 'वस्तु'पदम्।

---

१. एकपदम्।

२. घटप्रसङ्गाभावस्य। ३. लक्षणान्तर्गतं। ४. घटात्पूर्वाभावी।

५. अनन्तरभावी, अन्तराभावी, पूर्वं भावी अनन्तरभावी च, अनन्तरं भावी, पूर्वाभावी अनन्तमभावइति पाठपञ्चकम्। ६. सूचितं भवति। तल्लक्षणमाह।

'उत्पत्ति'पदं तु प्रागत्र लक्षणान्तर्गतम् ।

'प्राक्'पदाभावे उत्पत्तेः इतिपञ्चमीबलात् 'परतः'इत्यप्यापद्येत । ततश्च ध्वंसेऽतिव्याप्तिस्तन्निवृत्त्यर्थं प्रागितिपदम् ।

घटप्रतियोगिकान्योन्याभावरूपे घटध्वंसे घटोत्पत्तेः पूर्वमपि विद्यमाने अतिव्याप्तिपरिहारार्थम् 'एव'इत्युक्तम् ॥

इति सकलमनवद्यम् ॥

( १८ वि. विषयः— १. क्रमाल्लक्षणोक्तित्वेन 'उत्तर'इत्यादिलक्षण-वाक्यस्य अवतरणम् । २. विग्रहपदार्थौ । ३. प्रागभावलक्षणे क) अवधिमान्, ख) उत्तरः, ग) अभावः, घ) एकः, ङ) अभावः, च) 'अभाव'पदस्य धर्मिभिन्नाभावपरत्वम्, छ) एकः, इतिदलानां कृत्यानि । ४. लक्षणसमन्वयप्रदर्शकत्वेन 'प्रतियोगी'इत्यादिवाक्यस्य अवतरणम् । ५. 'प्रतियोगी' इत्यादिवाक्यस्य विग्रहः, पदार्थः, अन्वयश्च । )

उद्देशक्रमेण तेषां लक्षणान्याह **उत्तरैकावधिरभाव इति** ।

**उत्तरः**= स्वाधारकालापेक्षया पश्चाद्भावी–प्रतियोग्युत्पत्तिक्षणः, एकः, **अवधिः**=मर्यादा, ततः कालो **यस्य**; सोऽभावः प्रागभावः; इत्यर्थः ॥

अभावः प्रागभावः इत्येवोक्ते अत्यन्ताभावे अतिव्याप्तिः; तन्निरासाय 'अवधिमान्' इति विशेषणम् ।

तावत्येवोक्ते प्रध्वंसेऽतिव्याप्तिः; तन्निरासाय 'उत्तर' इति पदम् ।

उत्तरावधिः प्रागभावः इत्युक्ते घटेऽतिव्याप्तिः; तत्परिहाराय 'अभाव'पदम् ।

तावत्येवोक्ते घटनिष्ठान्योन्याभावेऽतिव्याप्तिः तन्निरासाय 'एक'पदम् ।

---

१. परिहारेत्युक्तमपिसकलमनवद्यम् ।

उत्तरैकावधिरित्येवोक्ते प्रागभावनिष्ठे प्रमेयत्वाभिधेयत्वसत्त्वादावति-व्याप्तिवारणाय 'अभाव'पदम्। प्रागभावादिगतसत्त्वादिधर्मस्य निष्प्रतियोगि-कत्वेन [2]भावत्वात् अभावपदेन व्यवच्छेदः।

न च विशिष्टलक्षणस्यापि घटप्रागभावनिष्ठान्योन्याभावे अतिव्याप्तिरिति वाच्यम्; 'अभाव'पदस्य धर्म्यतिरिक्ताभावपरत्वेन अतिव्याप्त्यभावात्।

न चैवम् 'एक'पदं व्यर्थं स्यादिति वाच्यम्, तस्यात्यन्ताभाववैलक्षण्य-ज्ञापनाय स्वरूपकथनार्थत्वेन लक्षणशरीराप्रविष्टत्वादिति ॥

लक्ष्ये लक्षणं दर्शयति **प्रतियोग्युत्पत्तेरिति । प्रतियोगिनो**-घटादेः, **उत्पत्तेः**, [3]**प्रागेव**= पूर्वकाले एव; अभावः, **अस्ति**,= घटादिप्रागभावोऽस्ति; तस्मिन्= घटादौ प्रतियोगिनि, **उत्पन्ने** सति, **नास्ति**; इति कृत्वा; 'प्रागभावः उत्तरैकावधिः' इति पूर्वेणान्वयः ॥

( **१८ मु.** विषयः– १. निर्वचनलब्धलक्षणोक्तित्वेन 'उत्तर'इत्यादि वाक्यस्य अवतरणम्। २. लक्षणस्थसकलपदानां कृत्यप्रदर्शनपूर्वकम् 'एव'-पदस्य वैयर्थ्यशङ्का, स्वरूपकथकत्वेन तन्निरासश्च। ३. लक्षणे क) उत्तर, ख) एक, ग) अभाव, घ) अवधिमत्, ङ) उत्तर, इतिपदानां कृत्य-कथनपूर्वकम् च) 'एक'पदस्य वैयर्थ्यशङ्का, स्वरूपकथकत्वेन तन्निरासश्च। ४. एकपदस्य लक्षणघटितत्वसाधनप्रयत्नः तद्वैफल्यञ्च ५. प्रकारान्तरेण तात्पर्यकथनेन लक्षणवाक्यस्य वैयर्थ्यनिरसनम् ॥ ६क. लक्षणस्य निर्वचन-लब्धत्वोपपादकत्वेन 'प्रतियोगी'इत्यादिवाक्यस्य अवतरणम्। ख) अन्वयः ग) अर्थः, घ) निर्वचनलब्ध्युपसंहारश्च। ७. प्रकारान्तरेण लक्षणान्तरोक्ति-त्वेन 'प्रतियोगी'इत्यादिवाक्यस्य अवतरणम्। ८. तत्र 'प्रतियोग्युत्पत्तेः प्राक् यः अभावः', 'एव'इतिदलयोः कृत्ये ॥ )

न्यूनताशङ्कापरिहाराय निर्वचनलब्धं लक्षणमाह **उत्तरैकेति** ॥

---

१. सदावति। २. भाववदभावपदेन।
३. प्रागभावपूर्वकाले।

ननु अवधिमानित्युक्ते पुराणादौ प्रसङ्गः, तद्व्यावृत्त्यै 'उत्तर'इति; तावत्युक्ते घटादौ प्रसङ्गः, तन्निवृत्त्यै 'एक'इति; उत्तरैकावधिमानित्युक्ते अविद्यायामतिव्याप्तिः, तन्निवृत्त्यै अभावपदम्; एवं क्रमेण सर्वपदानां सार्थक्येऽपि; अभावः प्रागभावः इत्युक्ते सदाभावे प्रसङ्गः, तन्निवृत्त्यै अवधिमानिति; तावत्युक्ते प्रध्वंसगः, तन्निवृत्त्यै उत्तरेति; उत्तरावधिमानभावः प्रागभावः इत्युक्ते कुत्राप्यप्रसङ्गेन एकपदस्य अवक्तव्यतेति ।, **सत्यम्**; उत्तरावधिमत्त्वेन किं घटादिवत्पूर्वोत्तरावधित्वम्, अविद्यावदुत्तरैकावधित्वं वेति सन्देहात्, तत्परिहाराय 'एक'पदस्य स्वरूपकथनार्थत्वात् ।

ननु प्रागभावप्रध्वंसरूपे घटे अतिव्याप्तिपरिहाराय 'एकम्' ।, न च तथात्वे प्रध्वंसप्रागभावरूपे घटेऽव्याप्तिदोषः, भावभिन्नाभावस्य लक्ष्यत्वेन तस्यालक्ष्यत्वात्तत्राप्रयोगो न दोषाय; इति चेत्, न; लक्षणनिविष्टाभावपदस्य भावभिन्नपरत्वेन तत्रातिव्याप्तेरेवाभावात् । अन्यथा संपूर्णलक्षणस्य उत्तरैकावधिमत्त्यां प्रध्वंसप्रागभावरूपायामविद्यायामतिव्याप्तेः ।

अथवा पूर्वावधिशून्यत्वे सति अवधिमानभाव इत्यत्र तात्पर्याल्लक्षणवाक्यस्य न वैयर्थ्यमिति ॥

कथमिदं लक्षणं निर्वचनलब्धमित्यत आह **प्रतियोग्युत्पत्तेरिति** । 'कृत्वा'इत्यस्य पूर्ववाक्येनान्वयः । प्रागेव सन्, न तु उत्तरत्र; यः अभावः, स प्रागभावशब्दार्थः । तथाच निर्वचनलब्धं लक्षणमिति भावः ॥

यद्वा लक्षणान्तरमाह **प्रतियोगीति** ।

तत्र अभावः प्रागभाव इत्येवोक्ते प्रध्वंसे प्रसंगस्तन्निवृत्त्यै 'प्रतियोग्युत्पत्तेः प्राक् यः अभावः' इति ।

---

१. उत्तरैकावधित्वमितिसन्देहात् ।

तावत्युक्ते अत्यंताभावनिष्ठघटप्रतियोगिकान्योन्याभावस्य प्रतियोग्युत्पत्तेः प्रागपि सत्त्वेन अत्यन्ताभावरूपत्वेन भावभिन्नत्वाच्च तत्रातिव्याप्तिस्तदर्थं 'एव' इति । तस्याभावस्य प्रतियोग्युत्पत्त्यनन्तरं च सत्त्वेन तत्परिहारात् ;इति सार्थक्यम् ॥

(१८का. विषयः— १. प्राक्त्वस्य चतुर्धा विकल्पपूर्वकम् निष्कृष्टलक्षणोक्तित्वेन 'उत्तर' इत्यादिवाक्यस्य अवतरणम् । २. विग्रहः । ३. अवधिपदार्थः । ४. लक्षणे एक-अवधि-पदयोः लक्षणान्तरार्थत्वम् । ५. तस्मिन् लक्षणान्तरे क) सत्यन्तस्य, ख) सावधिकत्वस्य, ग) अभावत्वस्य, घ) पूर्वत्वोत्तरत्वयोः कालगताखण्डोपाधिविशेषत्वस्य च कृत्यानि । ६. लक्षणस्य निष्कर्षः । ७. घटात्मकस्य घटध्वंसप्रागभावस्य अलक्ष्यत्वेन न तत्र अव्याप्तिरतिव्याप्तिश्च ८. प्रकारद्वयेन अतीतकालविशिष्टात्यन्ताभावे अतिव्याप्तिपरिहारः । ९. उक्तलक्षणस्य उद्देशलब्धार्थव्यञ्जकत्वेन लक्ष्ये लक्षणसमन्वयोपपादकत्वेन च 'प्रतियोगी' इत्यादिवाक्यस्यावतरणम् । १०. अन्वयः । ११. तत्त्वविवेकटीकाविसंवादनिस्तारश्च । )

नन्वेवं किञ्चिदपेक्षया प्राक्तनत्वस्य प्रध्वंसादिसाधारणत्वादतिव्याप्तिः, प्रतियोगिप्राक्कालवृत्तित्वविवक्षायामपि प्रध्वंसादेः स्वात्मकस्वनिष्ठभेदप्रतियोगिभाविवस्तुप्राक्कालवृत्तित्वेन अतिव्याप्तेः, स्वप्रतियोगिप्राक्कालमात्रवृत्तित्वविवक्षणे च प्रागभावस्यापि स्वात्मकस्वनिष्ठभेदप्रतियोगिभूतवस्तूत्तरवृत्तित्वेनासम्भवात् , यत्किञ्चित्प्रतियोगिप्राक्कालमात्रवृत्तित्वविवक्षणे च गौरवम् ; इत्यतो निष्कृष्टं लक्षणमाह **उत्तरैकावधिरिति** ॥

उत्तरः काल एवावधिर्यस्यासौ तथा ।

अवधित्वं च स्वाव्यवहितपूर्वोत्तरकालसाधारणः स्वनिरूपको धर्मविशेषः ।

न च 'एकपदावधिपदयोर्वैयर्थ्यं, स्योत्तरत्वे सत्यभावत्वस्यैव सम्यक्त्वात् ;' इति वाच्यम् ; पूर्वावधिशून्यत्वे सति सावधिकाभावत्वरूपलक्षणान्तरलाभाय तदुपादानात् ।

प्रध्वंसवारणाय सत्यन्तनिवेशः ।

अत्यन्ताभाववारणाय सावधिकत्वम् ।

तावन्मात्रस्य घटादावतिव्याप्त्यभावेऽपि भावरूपाज्ञानादिवारणाय अभावत्वमुपात्तम् ।

न च पूर्वत्वस्य प्रागभावाधिकरणकालत्वरूपत्वादात्माश्रयः, एवमुत्तरत्वस्य ध्वंसाधिकरणकालत्वरूपत्वात् ध्वंसत्वस्य पूर्वत्वघटितत्वादन्योन्याश्रय इति वाच्यम् पूर्वत्वोत्तरत्वयोः कालगताखंडोपाधिविशेषत्वात् । यथोक्तमाचार्यैः 'स्वत एव काले विशेषाङ्गीकृतेश्च' ।

एवञ्च "उत्तरत्वनिरूपकाभावत्वं, पूर्वत्वानिरूपकत्वे सति अवधित्व-निरूपकाभावत्वं वा प्रागभावत्वम्"इति निष्कर्षः ।

न च घटात्मके घटध्वंस-प्रागभावेऽव्याप्तिः, घटप्रागभावात्मके घटभेदेऽतिव्याप्तिश्च इति वाच्यम् ; आद्यस्यालक्ष्यत्वात् , द्वितीयस्य लक्ष्यत्वात् ।

न चातीतकालविशिष्टात्यन्ताभावे अतिव्याप्तिः, विशेष्यस्य निरवधिकत्वेऽपि विशिष्टस्योत्तरैकावधित्वात् इति वाच्यम् ; विशिष्टस्य पदार्थान्तरत्वेनाभावत्वात् । अतीतकालविशिष्टात्यन्ताभावस्य वर्तमानकालविशिष्टात्यन्ताभाव प्रागभावतया लक्ष्यत्वमेव; इत्यप्याहुः ॥

एतल्लक्षणस्य यथाश्रुतोद्देशलब्धलक्षणनिष्कृष्टार्थत्वं व्यञ्जयन् लक्ष्ये लक्षणसत्त्वमुपपादयति **प्रतियोगीति** । पूर्वेणैवान्वयः ॥ एतेन 'योऽभावो वस्तूत्पत्तेः प्रागेवास्ति स प्रागभावः' इति तत्त्वविवेकटीकाविसंवादोऽपि निरस्तः; तस्य यथाश्रुतलक्षणत्वात् , अस्य च निष्कृष्टलक्षणत्वात् । एवमग्रेऽपि ।

---

१. त. वि. टी. पृ. ६४ २. योभावस्तूत्पत्तेः

[ १८ भ. विषयः- अस्वतन्त्रतत्त्वविभागे- अभावत्रैविध्ये- प्रागभावनिरूपणे-

अ) 'उत्तरैकावधिरभावः प्रागभावः'इत्यस्य विग्रहार्थौ ।

आ) उक्तार्थोपपादकतया 'प्रतियो...कृत्वा'इत्यस्य अवतरणम् ।

इ) एतट्टीकाभिप्रायकतया- १) निर्गलितं लक्षणम् । २) तत्र च - ' क) अभाव, ख) स्व...अवृत्ति, ग) मात्र, घ) अनन्तरतावच्छिन्न, ङ) स्वप्रतियोग्युत्पत्तिकाल, च) स्व'इतिपदानां कृत्यानि । ३) उक्तलक्षणोपपादने- क) 'अनादिः सान्तः प्रागभावः'इतिमतदूषणे- १. अविद्यादिषु अतिव्याप्तिः; २) तत्परिहारेऽपि प्रध्वंसप्रागभावरूपे घटादौ अतिव्याप्तिः; ३. घटादेः प्रध्वंसं प्रति प्रागभावत्वाभावसाधकानुमाननिरासपूर्वकं प्रागभावत्वसाधनम्; ४. उपसंहारः । ख) उक्तदोषस्य स्वपक्षे अलग्नकता । ग) एतदलग्नकत्वोपपादकतया 'उत्तरैकावधि'पदस्य नियमाभिप्रायः, सर्वथा प्राक्कालावधिकत्वाभावाभिप्रायाभावश्च । घ) लक्षणे प्रागभावसत्तायाः अनवधिकत्वनिवेशनाभावः । ङ) नियमाभिप्रायेण घटादेः सादिनोऽपि प्रध्वंसप्रागभावत्वोपपत्तिः । ४) सङ्ग्रहार्थः । ५) 'प्राक्'पदकृत्यविचारे- क) 'प्राक्'शब्दस्य स्वरूपसङ्कीर्तनार्थत्वम् । ख) अस्याः कल्पनायाः साम्प्रदायिकत्वम् । ग) अस्मिन्पक्षे यादुपत्यविरोधपरिहारः । घ) 'प्राक्'पदं विहाय लक्षणसिद्धिः । ङ) यादुपत्ये 'प्राक्'पदोपादानस्य औचित्यञ्च । ]

**उत्तरैकावधिरिति** । स्वापेक्षया उत्तरकालः, एव;= प्रतियोगिसत्ताऽवच्छिन्नकालः इति यावत्; अवधिः= परिच्छेदसमयः; यस्य अभावस्य; सः प्रागभावः; इत्यर्थः ।

इमम् एव अर्थम् उपपादयति **प्रतियोगीति** ।[1]

तथाच इदं लक्षणं निर्गलति स्वप्रतियोग्युत्पत्तिकालानन्तरतावच्छिन्नकालमात्रावृत्तिः अभावः प्रागभावः; इति ।[2]

---

१. 'इदञ्च लक्षणम् उद्देशेनैव लब्धम् इतिभावेन प्रागभावशब्दं निरुच्य दर्शयति **प्रतियोगीति**'इति ग्रन्थान्तरे ।

२. 'स्वप्रतियोग्युत्पत्त्यनन्तरयावत्कालावृत्तिः अभावः'इति ग्रन्थान्तरे ।

अत्र[३] 'अभावः'इत्यनुक्तौ स्वापत्याद्युत्पत्तिमात्रेण हते कुलीरादौ अतिव्याप्तिः; तस्यापि स्वकार्यभूत-अपत्यकुलीराद्युत्पत्तिकालानन्तरकालमात्रा-वृत्तित्वे सति तत्पूर्वकाले वृत्तित्वात् । न च 'अपत्यकुलीरादौ मातृकुलीरा-दिकं प्रति प्रतियोगित्वाभावात् 'स्वप्रतियोगी'इतिविशेषणासम्भवात्, नाति-व्याप्तिः तत्र'इति वाच्यम्; एवं सति 'अभाव'पदाऽऽदानवेलायां घटादेः प्रतियोगित्वेन व्यवहारस्यैव अनुपपत्त्या लक्षणस्य असम्भवापत्तेः ।,“ 'स्वप्र-तियोगि'पदेन विवक्षितं वस्तुमात्रं विवक्ष्यते, इति न असम्भवः''इति चेत्; तर्हि, 'अत्रापि तयैव विवक्षया अतिव्याप्तिः उद्भाविता'इति ज्ञातव्यम् ॥ अथवा घटप्रतियोगिकान्योन्याभावरूपे घटोत्पत्तिपूर्वकाले अतिव्याप्तिः; प्राक्का-लस्य अनन्तरकाले अविद्यमानत्वात् ।,

विशेषणानुक्तौ प्रध्वंसे अत्यन्ताभावे च अतिव्याप्तिः ।,

विशेषणे 'मात्र'शब्दानुक्तौ प्रध्वंसाभावे अतिव्याप्तिः; घटध्वंसाभावस्य ध्वंसानन्तरं सत्त्वेऽपि घटोत्पत्तिकालानन्तरतावच्छिन्न-घटस्थितिकालवृत्तित्वा-भावात् ।,

---

३. “अत्र 'अभावः'इत्यनुक्तौ प्रकाशनिवृत्ते तमसि अतिव्याप्तिः; तस्यापि स्वप्रतियोगिप्रकाशोत्पत्त्यनन्तरम् अवर्तमानत्वात् ।, अथवा घटप्रतियोगिका-न्योन्याभावरूपे घटोत्पत्तिपूर्वकाले अतिव्याप्तिः, प्राक्कालस्य अनन्तरकाले अवि-द्यमानत्वात् ।; अतः 'अभावः'इति । तमसो भावरूपत्वेन, घटोत्पत्तिप्राक्का-लस्य च घटान्योन्याभावरूपत्वेऽपि निषेधस्वरूपतारूप निरुक्ताभावरूपत्वाभावे; नातिव्याप्तिः ।''इति ग्रन्थान्तरे ।

४. “विशेषणे च 'यावत्'शब्दानुक्तौ पुनः ध्वंसे अतिव्याप्तिः; घटोत्पत्त्य-नन्तरं घटसत्ताकाले तस्य अभावात् ।,

'यावत्कालावृत्तिः'इत्येवोक्तौ असम्भवः । तद्वारणाय 'स्वप्रतियोग्यु-त्पत्त्यनन्तर'इति ।,

'स्वप्रतियोग्युत्पत्ति'इत्यनुक्तौ अपि पुनः असम्भवः एव; मृद्दण्डादि-सम्पत्त्यनन्तरमपि घटोत्पत्तेः प्राक् सत्त्वात् ।''इति ग्रन्थान्तरे ।

'कालमात्रावृत्तिः'इत्युक्तौ असम्भवः; तद्वारणाय 'अनन्तरतावच्छिन्न'-इति ।,

'स्वप्रतियोग्युत्पत्तिकाल'इत्यनुक्तौ अपि असम्भवः; मृद्दण्डादिसामग्र्यनन्तरकालेऽपि प्राक् घटोत्पत्तेः विद्यमानत्वात् घटप्रागभावस्य ।,

'स्व'पदादानेऽपि पुनः असम्भवः; पटाभावप्रतियोगिभूतपटोत्पत्तिकालानन्तरं जनिष्यमाणघटप्रागभावस्य सत्त्वात् । तद्दाने तु [5] पटस्य घटप्रागभावप्रतियोगित्वाभावेन न तदुत्पत्तिकालानन्तरं विद्यमानस्यापि अस्य असम्भवावकाशः ।;

अतः सर्वमपि सार्थकम् ।

ननु 'अनादिः सान्तः प्रागभावः'[6]इति केषांचित् मतम्; अतः तत्परित्यागेन किम् अत्र अपूर्वलक्षणकरणेन? इति चेत्; न, तल्लक्षणस्य दुष्टत्वात् । तथाहि—

अविद्यायां कामकर्मादिप्रवाहेषु अतिव्याप्तिः तावत् ।,

अभावत्वेन विशेषणात् अदोषः, इति चेत्; तथापि [7]प्रध्वंसप्रागभावरूपे प्रतियोगिनि घटादौ अव्याप्तिः, अनादित्वाभावात् ।,

[8]न च घटादेः प्रध्वंसं प्रति प्रागभावत्वाभावः, प्रमाणाभावात् । 'विमतो घटादिः प्रागभावरूपो न भवति भावत्वात् चेतनवत्'इति-अनुमानं मानम्, इति चेत्; न, अभावाभावस्य भावत्वनियमात्, घटादेः प्रध्वंसं प्रति प्रागभावत्वेऽपि भावत्वानुपपत्त्यभावात् ।,

---

५. " 'स्वप्रतियोगिपदेन घटस्यैव ग्राह्यत्वात् नासम्भवः ।"इति ग्रन्थान्तरे ।
६- तर्कसङ्ग्रहे अन्नम्भट्टाचार्याः । अथवा सर्वदर्शनसङ्ग्रहे अक्षपाददर्शने ।
७. स्वप्रध्वंस ८. न च घटादेः स्वप्रध्वंसप्रागभावत्वे विवदितव्यम्, अनवस्थापरिहारार्थम् अवश्याङ्गीकार्यतायाः अनुपदमेव वक्ष्यमाणत्वात्; अतः इदं लक्षणान्तरम् उक्तम् ।

कुतश्च अयं घटादेः प्रध्वंसप्रागभावरूपत्वानङ्गीकारः? किम् १) प्रमाणाभावात्? अथ २) बाधकसद्भावात्? यद्वा ३) विपक्षे बाधकाभावात्?

१) नाद्यः; घटवद्भूतलदर्शने 'अस्त्यत्र घटः' इति वत् 'नास्त्यत्र घटध्वंसः'- इतिप्रतीतिदर्शनात् ।,

२) न द्वितीयः; भावत्वानुपपत्तेः परिहृतत्वात्, बाधकान्तरस्य च अभावात् । 'लक्षणानुपपत्तिः बाधिका' इति चेत्; 'सिद्धे अनादिसान्ताभावत्वस्य लक्षणत्वे, सादिघटादौ तदभावेन प्रध्वंसप्रागभावत्वाभावसिद्धिः; तत्सिद्धौ, अव्याप्त्यभावेन अनादित्वघटितलक्षणसिद्धिः' इति अन्योन्याश्रयात् ।,

३) नापि तृतीयः; 'प्रध्वंसप्रागभावस्य प्रतियोगिभिन्नत्वे तत्प्रध्वंसोऽपि पृथक् अङ्गीकार्य एव, समानयोगक्षेमत्वात्; प्रध्वंसस्य च जन्यत्वात्, तत्प्रागभावः; तस्यापि पुनः प्रध्वंसान्तरम्' इति अनवस्थानस्य वक्ष्यमाणत्वात् ।;

अतः परोक्तलक्षणपरित्यागेन लक्षणान्तरम् इदम् उक्तम् ॥,

इदञ्च घटादिषु अपि वर्तते; स्वप्रतियोगिभूतप्रध्वंसोत्पत्तिकालानन्तर- तावच्छिन्नकालमात्रावृत्तित्वे सति प्रध्वंसं प्रति भावरूपत्वात् घटादीनाम् ॥,

अत एव " 'उत्तरैकावधिरभावः प्रागभावः' इत्युक्त्वा कथं तर्हि घटादेः प्रतीयोगिनः प्रध्वंसप्रागभावात्मकत्वम् अनुपदमेव वक्ष्यते; 'उत्तरैकावधिः' इत्यनेन प्रागभावस्य पूर्वकालानवधिकत्वोक्त्या अनादित्वस्यैव लाभात्, घटादेश्च अतादृशत्वात्?" इत्याशङ्क्य, यद्यपि प्रागभावस्य प्राक्कालावधिकत्वम्

---

९. "इदञ्च स्वप्रध्वंसप्रागभावरूपे घटादौ अपि वर्तते, स्वप्रतियोगिभूतप्रध्वंसोत्पत्त्यनन्तरं तत्प्रागभावरूपघटस्य सर्वथा अवस्थित्यभावात्; प्रध्वंसं प्रति अभावरूपत्वात् च । किञ्च न वयं प्रागभावस्य अनादित्वं निषेधामः; किन्तु तन्नियमम् ।

तथाच एवमुक्तं भवति ।—" इति ग्रन्थान्तरे ।

अपि अस्ति; तथापि न तन्नियमः, अनादिप्रागभावे अभावात्; उत्तरैकावधिकत्वं तु साधनाद्युभयप्रागभावनियतम्; अतः नियमाभिप्रायेणैव 'उत्तरैकावधिः'इत्युक्तम्; न तु 'सर्वथा प्राक्कालावधिकत्वाभावात्'इत्यभिप्रेत्य ॥,

'प्रतियोग्युत्पत्तेः प्रागेव अभावः अस्ति इति प्रतियोगिसत्तावच्छिन्नकालापेक्षया प्रागभावसत्तावच्छिन्नकालस्य प्राक्त्वनियममात्रम् उक्तम्, नतु तस्य अनवधिकत्वं निवेशितम्; इति ज्ञातव्यम् ॥,

एतेन; " 'उत्तरैकावधिः' इति प्रागभावस्य अनादित्वम् उक्त्वा कथम् उत्तरत्र घटादेः सादिनोऽपि प्रध्वंसप्रागभावत्वम् अभिधास्यते?"-इत्येतत् अपि निरस्तम्; नियमाभिप्रायेण एवम् उक्तत्वात्; इति ।

तथाच इदमुदितं भवति— प्रागभावो द्विविधः, भावप्रतियोगिकः अभावप्रतियोगिकश्च इति ॥ तत्र आद्यः अनादिः एव[10] । द्वितीयोऽपि द्विविधः अनादिप्रतियोगिकाभावप्रतियोगिकः, सादिप्रतियोगिकाभावप्रतियोगिकश्च इति ।, तत्र आद्यः अनादिः एव, यथा अविद्याप्रध्वंसप्रागभावरूपा स्वयम् एव अविद्या; द्वितीयस्तु सादिः, यथा घटप्रध्वंसप्रागभावरूपो घटः स्वयम् एव ॥ सति च एवम्, इदम् एव लक्षणम् यावल्लक्ष्यव्यापकम्; न परोक्तलक्षणम्; इति ।

"ननु एवं लक्षणपरिष्करणम् टीकाक्षराननुगुणम्; 'प्रतियोग्युत्पत्तेः प्रागेव अभावः अस्ति'इत्यत्र अवधारणलब्धस्य 'उत्पन्ने तु तस्मिन् नास्ति'-इत्युपपादितस्यैव अर्थस्य निवेशितत्वात्, 'प्राक्[11]'शब्दार्थस्य अप्रविष्टत्वात्; इति चेत्; सत्यम्, तथापि तावन्मात्रस्य अतिव्याप्त्यादिदोषाभावात् तावदेव [12]लक्षणतया उक्तम्; टीकायां तु 'प्राक्[13]'इत्युक्तिः स्वरूपसङ्कीर्तनार्था । नापि 'प्राक्'शब्दाप्रयोगे केवल'एव'शब्दप्रयोगः सम्भवति ।,

---

१०. यथा घटप्रागभावः ११. प्रागस्तीत्युक्तांशस्य १२. लक्षणं विवक्षितम्
१३. 'प्राक्'शब्दप्रयोगः; 'प्राक्'शब्दाभावे केवल'एव'शब्दप्रयोगायोगादेव ।

[14]न च एवं कल्पनम् असाम्प्रदायिकम्; 'स्वतन्त्रम्'इत्यत्र स्वमात्रतन्त्रविवक्षासद्भावेऽपि, 'स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्ये परानपेक्षं स्वतन्त्रम्'इति 'मात्र'पदलब्धस्यैव लक्षणीकृतत्वात् ।,

न च वाच्यम् "एवं सति स्फुटं [15]यादुपत्यविरोधः, तत्र ' 'प्राक्'इत्यनुक्तौ घटध्वंसे अतिव्याप्तिः 'इति 'प्राक्'शब्दार्थस्य लक्षणघटकतया निगदितत्वात्"[16]इति; 'प्रतियोग्युत्पत्तेः प्राक् एव अभावः अस्ति'इत्यत्र 'प्राक्'इत्यनुक्तौ 'प्रतियोग्युत्पत्तेः'इतिपञ्चमीबलात् 'परतः'इत्यस्यापि लाभसम्भवेन, एवकारसम्बन्धे ध्वंसे अतिव्याप्तिः प्रसज्ज्यते इति गुरुचरणानां विवक्षितत्वात् । एवञ्च 'प्राक्'पदाभावे, परिष्कृतलक्षणस्य यादुपत्योक्तलक्षणस्य च भिन्नरूपत्वेन; तत्र अतिव्याप्तिवारकतया 'प्राक्'पदार्थस्य लक्षणघटकतासम्भवेऽपि, नात्र तदभावेन तद्विरोधः शङ्कनीयः ।,

स्यादेतत्, यदि 'प्राक्'पदाभावे परिष्कृतं लक्षणं सिध्येत्; तदेव कथम्? इति चेत्; उच्यते— 'प्रागेव'इति सावधारणोक्त्या, प्रतियोग्युत्पत्तिपूर्वकालस्य अभावसत्ताऽवच्छिन्नत्वम् तदनन्तरसर्वकालस्यापि अनवच्छिन्नत्वञ्च लभ्यते ।, तत्र द्वितीयदलस्य 'एव'शब्दार्थत्वेन विवक्षितत्वात्; 'प्राक्'पदाभावे केवल'एव'शब्दस्य प्रयोक्तुम् अशक्यत्वेऽपि, तत्स्थाने विवक्षितार्थप्रतिपादकशब्दान्तरस्य प्रयोक्तव्यत्वेन, परिष्कृतलक्षणस्यैव लाभो भवति; इति ।,

एतेन एतदपि निरस्तम् यत् " 'एव'शब्दस्य प्रतियोग्युत्पत्त्यनन्तरसर्वकालावृत्तित्वार्थम् आदाय घटध्वंसे अतिव्याप्तेरेव अभावेन, कथं तत्परिहाराय 'प्राक्'पदोपादानं यादुपत्ये?"इति शङ्कनम्; तत्र 'एव'शब्दस्य उक्तार्थत्वासम्मतेः ।

---

१४. न च इदम् असाम्प्रदायिकम् 'चक्षुर्मात्रग्राह्यो गुणो रूपम्'इत्यादौ दृष्टत्वात् ॥ अतः सर्वमवदातम् ।

१५. पृ.१२

१६. इति ॥ मैवं ॥ प्रतियोग्युत्पत्तेः

[ १९ टी. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– प्रध्वंसाभावनिरूपणे–

अ) प्रध्वंसाभावस्य लक्षणम् ।

आ) उक्तलक्षणार्थोपपादने– १) स्पष्टीकरणम् । २) उक्तार्थबाधकनिरासे -- क) प्रागभावप्रध्वंसः, प्रध्वंसप्रागभावः, इतिप्रवाहप्रसङ्गनिराकरणम् । ख) घटवत् तत्ध्वंसस्यापि घटप्रागभावविरोधित्वम् । ]

**पूर्वैकावधिः अभावः प्रध्वंसाभावः । प्रतियोगिप्रध्वंसानन्तरम् एव अभावः, न तु प्राक् अस्ति; इति ॥**

**न च एवम् 'प्रागभावप्रध्वंसः, प्रध्वंसप्रागभावः' इतिप्रवाहौ प्रसज्ज्येते, प्रतियोगिन एव प्रागभावप्रध्वंसत्वेन प्रध्वंसप्रागभावत्वेन च अङ्गीकृतत्वात् ।**

**तर्हि घटप्रध्वंसो नाम 'प्रागभावनिवृत्तेः निवृत्तिः' इति प्रागभावोन्मज्जनप्रसङ्गः; इति चेत्; न, घटवत् तत्ध्वंसस्यापि तद्विरोधित्वात् ।**

[ १९ स. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– प्रध्वंसाभावनिरूपणे–

अ) 'पूर्वै...प्रध्वंसाभावः' इतिलक्षणोक्तेर्व्याख्याने– १) विग्रहार्थौ । २) तात्पर्यार्थः । ३) दलकृत्ये– क) एक, ख) अभाव, इत्यादिपदानां कृत्यानि ।

आ) प्रागभावप्रध्वंसाभावलक्षणयोः उत्तरपूर्वपदार्थयोः अन्योन्याश्रयत्वनिरासे– प्राक्कालादेः कालधर्मस्य स्वाभाविकत्वञ्च । ]

**पूर्वैकावधिरिति ।** पूर्वः= प्रध्वंससामग्रीकालः, एव=एकः, अवधिः = अविद्यमानत्वस्य समयः, यस्य; इत्यर्थः । प्रध्वंससामग्रीपर्यन्तम् एव अविद्यमानाभावः प्रध्वंसाभावः ।

प्रागभावस्यापि प्रध्वंसपर्यन्तम् अविद्यमानत्वेन, तत्र-अतिव्याप्तिवारणाय 'एक'पदम् । प्रागभावं प्रति च घटस्य इव तत्ध्वंसस्यापि विरोधित्वेन ध्वंसानन्तरम् अपि प्रागभावस्य असत्त्वात् न अतिव्याप्तिः ।,

अविद्यादौ अतिव्याप्तिवारणाय 'अभाव'पदम् ।,

प्रागभावलक्षणस्य इव व्याख्यानान्तरम् अत्र द्रष्टव्यम् ।

ननु 'उत्तरैकावधिः, पूर्वैकावधिः'इतिलक्षणद्वयेऽपि 'उत्तरत्वम्= ध्वंसावच्छिन्नसमयत्वम्, पूर्वत्वम्= प्रागभावावच्छिन्नसमयत्वम्'इति अन्योन्याश्रयः स्यात्, इति चेत्; न, प्राक्कालादेः कालधर्मस्य घटत्वादिवत् स्वाभाविकत्वाङ्गीकारात् । तदुक्तं भाष्ये 'स्वत एव काले विशेषाङ्गीकृतेश्च'इति ।

[ १९ के. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– प्रध्वंसाभावनिरूपणे–

अ) 'पूर्वै...प्रध्वंसाभावः'इत्यस्य व्याख्याने– १) लक्षणावतीकारोक्तलक्षणानुवादकत्वेन अवतरणम् । २) विग्रहार्थौ । ३) 'एक'इत्यादिदलानां कृत्यानि ।

आ) 'प्रतियोगि...अस्तीति'इत्यस्य व्याख्याने– १) अस्यापि लक्षणान्तरत्वम् । २) दलकृत्ये– 'क) परतः, ख) अभावः, ग) वस्तु, घ) प्रध्वंसस्य सादित्वम्'इत्येषां कृत्यानि ।

इ) मतान्तरानुवादे– १) प्राच्चमते प्राक्प्रध्वंसाभावयोः 'एक'पदकृत्यविचारः, लक्षणपरिष्कारश्च दलकृत्यसहितः । २) मतान्तरेण– क) प्रागभावलक्षणस्य फलितवाक्यार्थाभिप्रायपूर्वकं लक्ष्ये उपपादकतया 'प्रतियोग्युत्पत्तेः ...कृत्वा'इत्यस्य अवतरणम् । ख) प्रध्वंसाभावलक्षणस्य फलितवाक्यार्थाभिप्रायपूर्वकं लक्ष्ये उपपादकतया 'प्रतियोगिप्रध्वंसा...अस्तीति'इत्यस्य अवतरणम् । ग) एतदुभयोरपि फलितोपपादकपरत्वमेव । ३) मतान्तरेण– उभय-अभावलक्षणयोः अर्थौ ।

१. ब्र.सू. २-२-६-१२ भाष्ये.

ई) 'न चैवं...तद्विरोधात्'इत्यस्य व्याख्याने— परस्परप्रतियोगिक-ध्वंसप्राग-भावयोः प्रतियोग्यतिरिक्तत्वभ्रमनिवारकतया— १) अवतरणम् । २) 'न चैवं ...कृतत्वात्'इत्यस्य व्याख्याने— क) 'न चैवं...प्रसज्ज्येते'इत्यस्य अर्थः । ख) तत्र हेतुत्वेन 'प्रति...कृतत्वात्'इत्यस्य अवतरणम्, आशयश्च । ३) उक्तार्थे बाधकपरिहारकतया 'तर्हि...तद्विरोधित्वात्'इत्यस्य व्याख्याने— क) बाधक-परग्रन्थस्य— पदार्थः, तात्पर्यञ्च । ख) बाधकनिरासकतया भावकथनपूर्वकं 'घटवत्...तद्विरोधित्वात्'इत्यस्य व्याख्याने— १. अवतरणम्; २. आशयश्च । ]

तदुक्तम् एव ध्वंसलक्षणम् अनुवदति **पूर्वेति** ।

पूर्वः= प्रध्वंससामग्रीकालः, एव= एकः, अवधिः= अविद्यमानत्व-समयः, यस्य, सः अभाव प्रध्वंसाभावः; इत्यर्थः ।,

अत्र 'एक'पदानुक्तौ घटप्रागभावे अतिप्रसङ्गः, घटप्रागभावस्य प्रध्वंस-सामग्रीकाले अविद्यमानत्वात् । तत्परिहारार्थम् 'एक'इति । ततश्च घटप्राग-भावस्य प्रतियोगिध्वंससामग्रीकाले इव प्रतियोगिध्वंसकालेऽपि अविद्यमानत्वेन, प्रतियोगिध्वंससामग्रीसमये एव विद्यमानत्वाभावात् न अतिप्रसङ्गः ॥ अन्यत् समानम् ॥

**प्रतियोगिप्रध्वंसानन्तरमेवेति** । एतदपि पूर्ववत् लक्षणान्तरम् एव ।

तत्र प्रागभावे-अतिव्याप्तिपरिहारार्थम् 'परतः'इतिपदम् ।,

विनाशसामग्र्युत्तरकालादौ तत्परिहाराय 'अभाव'पदम् ।,

पूर्ववत् असम्भवपरिहाराय 'वस्तु'पदम् ।;

प्रध्वंसे 'सादिः'इत्यनेन च विनाशसामग्री लभ्यते । तच्च विनाशकालसामग्रीसमवधानानन्तरम् एव प्रध्वंसः'इति दर्शयितुम् एव लक्षणा-न्तर्गतम्; इति ध्येयम् ॥

---

१. 'अनन्तरम्'पदस्यायम् अर्थानुवादः अथवा 'प्रध्वंसात्परतः'इति पाठभेदोऽत्र इति ज्ञातव्यम् । २. अत्र 'प्रध्वंससादीत्यनेन'इत्यपि पाठः उपलब्धः । परं 'प्रध्वंससादित्वेन'इति पाठोऽत्र युक्तो भाति ।

प्राञ्चस्तु "ननु उत्तरावधित्वेनैव प्रध्वंसमदाभावयोः अतिव्याप्तिवारणात् 'एक'पदवैयर्थ्यम् ॥, न च 'घटादिरूपे प्रागभावप्रध्वंसे अतिव्याप्तिवारणात् 'एक'पदम्'इति वाच्यम्; तथा सति घटादिरूपे प्रध्वंसप्रागभावे अव्याप्त्यापातात् । न च 'प्रमेयान्तरस्यैव प्रागभावस्य लक्ष्यत्वेन, घटादिरूपस्य तस्य अलक्ष्यत्वात् न अव्याप्तिः'इति वाच्यम्; तथा सति प्रध्वंसप्रागभावे अविद्यादौ अतिव्याप्तेः, 'अभाव'पदेन तन्निरासाय अभावपदस्य प्रमेयान्तरभूत-अभावपरत्वस्य आवश्यकत्वे, घटादिरूपे प्रागभावप्रध्वंसे अतिव्याप्तिशङ्काऽनवकाशात् ।" इत्याशङ्क्य; 'उत्तरैकावधिः'इत्यस्य पूर्वावधिरहितत्वे सति अवधिमत्त्वम् अर्थः; 'उत्तर'पदस्य केवलार्थक'एक'पदसमभिव्याहृतस्य पूर्वावधिनिषेधमात्रपरत्वात्[3] ।, 'पूर्वैकावधिः'इत्यस्य च उत्तरावधिरहितत्वे सति अवधिमत्त्वम् अर्थः ॥ ततश्च 'पूर्वावधिरहितत्वे सति अवधिमदभावत्वम् प्रागभावत्वम्; उत्तरावधिरहितत्वे सति अवधिमदभावत्वम् प्रध्वंसाभावत्वम्' इति लक्षणम् इह विवक्षितम् । तत्र आद्ये लक्षणे; पूर्वावधिरहितत्वेन ध्वंसाभावस्य, अवधिमत्त्वेन सदाभावस्य, 'अभाव'पदेन च अविद्याया निरासः ।, द्वितीयलक्षणेऽपि; सत्यन्तेन प्रागभावस्य, अवधिमत्त्वेन सदाभावस्य, 'अभाव'पदेन च पुराणादेः व्यावृत्तिः । इति न कस्यापि वैयर्थ्यम् ॥ इत्याहुः ।

'उत्तरैकावधिः'इत्यस्य 'यः अभावः प्रतियोगिकालापेक्षया प्राक् एव अस्ति सः प्रागभावः'इति फलितं लक्षणवाक्यार्थम् अभिप्रेत्य, लक्ष्ये उपपादयति **प्रतियोग्युत्पत्तेरिति** ।, 'पूर्वैकावधिः'इत्यस्य 'यः अभावः प्रतियोगिकालापेक्षया उत्तरकाले एव अस्ति सः प्रध्वंसाभावः'इति फलितं लक्षणवाक्यार्थम् अभिप्रेत्य लक्ष्ये उपपादयति **प्रतियोगीति** । फलितोपपादकवाक्यम् एव एतद्द्वयम्; इत्यप्याहुः ।

---

३. अवधिनिषेध

'पूर्वस्य विनाश्यभावत्वम् अर्थः; उत्तरस्य प्रागभावप्रतियोग्यभावत्वम् अर्थः' इत्यपि केचित् ॥

'प्रागभावप्रतियोगिकध्वंसप्रतियोगिकौ ध्वंसप्रागभावौ प्रतियोग्यतिरिक्तौ' इतिसम्भ्रान्तः चोदयति **न चैवमिति** ।

'उत्पन्ने प्रतियोगिनि प्रागभावो नास्ति' इत्याद्युक्त्या, प्रतियोगिकाले प्रागभावनिवृत्तिरूपः प्रागभावप्रध्वंसः अङ्गीकृतः; तथा घटप्रागभावप्रतियोगिकप्रध्वंसस्यापि कार्यत्वेन, कार्ये प्रागभावप्रतियोगित्वस्य आवश्यकत्वात्, तत्प्रतियोगिकः प्रागभावः स्वीकृतः ।, पुनः उभयत्रापि एवमेव ।; इति " 'प्रागभावप्रध्वंसः, प्रध्वंसप्रागभावः' इतिप्रवाहौ प्रसज्ज्येते'' इति न च; इत्यर्थः ।,

कुतो न ? इत्यत आह **प्रतियोगिन एवेति** । अयमाशयः– भवेत् एतदेवम् यदि प्रागभावप्रध्वंसः घटातिरिक्तः घटसमानकालीनः अङ्गीकृतः, घटध्वंसप्रागभावः घटातिरिक्तः घटसमानकालीनः अङ्गीकृतः । न च एतत् अस्ति, गौरवेण अभावप्रतियोगिक-अभावान्तरानभ्युपगमात् ॥ तथाच नोक्तदोषः; इति ।

**तर्हीति** । यदि प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वं, तर्हि; इत्यर्थः ॥ **प्रागभावेति** । घटप्रागभाव-इत्यर्थः ॥ ॥ न च इष्टापत्तिः; उत्पन्नस्यापि यथापूर्वम् सामग्रीसत्त्वेन पुनः उत्पादप्रसक्तिः, इत्यत्र तात्पर्यात् ।;

' न प्रागभावस्य उन्मज्जनापत्तिः ।, यथा हि घटस्य घटाभावान्यकालीनत्वे प्रागभावविरोधित्वम्, तथा घटध्वंसस्यापि घटप्रागभावान्यकालत्वात् घटप्रागभावविरोधित्वेन; सति विरोधिनि तदुन्मज्जनानुपपत्तेः । ' इतिभावेन परिहरति **घटवदिति** । 'यथा घटस्य स्वप्रागभावेन घटसमवायिदेशवर्तिना

४. प्रागभावादिप्रति

दैशिकविरोधाभावेऽपि प्रागभावान्यकालरूपः कालिकविरोधः; तथा घट-ध्वंसस्यापि घटप्रागभावेन घटसमवायिदेशवर्तिना सह दैशिकविरोधाभावेऽपि घटप्रागभावान्यकालत्वरूप-कालिकविरोधात्, तस्य स्वसमानकालीनप्रागभावा-सहत्वम्' इत्याशयः ।

[ १९ वि. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये–प्रध्वंसाभावनिरूपणे–

अ) 'पूर्वै...प्रध्वंसाभावः' इत्यस्य व्याख्याने– १) विग्रहार्थौ । २) दलकृत्ये– ' क) अवधिमान्, ख) पूर्व, ग) अभाव, घ) अभाव, ङ) 'अभाव' पदस्य धर्म्यतिरिक्त-अभावपरत्वम्, च) 'एक' पदस्य स्वरूपकथन-परत्वम् ' इत्येतेषां कृत्यानि ।

आ) 'प्रतियोगि...अस्तीति' इत्यस्य व्याख्याने– १) लक्ष्ये-लक्षण-दर्शकतया अवतरणम् । २) पदार्थः । ३) शेषः । ४) अन्वयश्च ।

इ) 'न चैवं...तद्विरोधित्वात्' इत्यस्य व्याख्याने– १) न चैवं... प्रसज्ज्येते' इत्यस्य पदार्थः । २) 'प्रति...कृतत्वात्' इत्यस्य च अवतरणम् पदार्थश्च । ]

**पूर्वैकावधिरिति** । स्वाधारकालापेक्षया, पूर्वः= पूर्वभावी, एकः, अवधिः= मर्यादाभूतः प्रतियोग्याधारचरमक्षणरूपः कालः, यस्य; सः अभावः प्रध्वंसाभावः । प्रध्वंसरूपाभावः इत्यर्थः ।;

अत्यन्ताभावे-अतिव्याप्तिपरिहाराय 'अवधिमान्' इति विशेषणम् ।,

प्रागभावे–अतिव्याप्तिनिरासार्थं 'पूर्व' पदम् ।,

'पूर्वैकावधिः' इत्येवोक्ते घटे अतिव्याप्तिः; तद्वारणाय 'अभावः' इत्युक्तम् ।,

'पूर्वैकावधिः' इत्येवोक्ते ध्वंसगते प्रमेयत्व-अभिधेयत्व-सत्त्वादौ अति-व्याप्तिः तद्वारणाय 'अभाव' पदम् ।,

न च 'विशिष्टलक्षणस्यापि घटादिप्रध्वंसनिष्ठ-घटाद्यन्योन्याभावे अति-व्याप्तिः' इति वाच्यम्; 'अभाव' पदस्य धर्म्यतिरिक्त अभावपरत्वेन उक्तदोषा-भावात् ।,

'एक'पदं' पूर्ववत् स्वरूपकथनपरम् ।

लक्ष्ये लक्षणं दर्शयति **प्रतियोगिप्रध्वंसानन्तरमेवेति** । प्रतियोगिनः = घटादेः, ध्वंसः = प्रध्वंसजनकलक्षणः प्रतियोग्याधारचरमक्षणः इति यावत्, तदनन्तरम् एव अभावः अस्ति; न तु प्राक् अस्ति = स्वाधारकालात् प्राक् अस्ति; इत्यर्थः । 'इति'इत्यनन्तरं 'कृत्वा'इति शेषः । इति कृत्वा प्रध्वंसाभावः पूर्वैकावधिः; इत्यन्वयः ॥

**नचैवमिति** । ''एवम् प्रागभावप्रध्वंसाभावयोः उत्तरपूर्वावधिमत्तया नाशोत्पत्तिमत्त्वेन, 'प्रागभावस्य प्रध्वंसः, प्रध्वंसस्य प्रगभावः, तस्यापि प्रागभावस्य ध्वंसः, तस्यापि प्रध्वंसस्य प्रागभावः'इति, प्रवाहः= निरवधिकपरम्परा, प्रसज्ज्येते= स्यात्;'' इति, न च वाच्यम्; इत्यर्थः ।,

तत्र हेतुम् आह **प्रतियोगिन एवेति** प्रतियोगिनः= घटादेः, एव, स्वप्रागभावप्रध्वंसत्वेन, प्रध्वंसप्रागभावत्वेन च, अभ्युपगतत्वात्; इत्यर्थः ।

[ १९ **मु.** विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– प्रध्वंसाभावनिरूपणे–

अ) 'पूर्वै...अस्तीति'इत्यस्य व्याख्याने– १) पूर्वोक्तन्यायेनैव अस्यापि व्याख्येयत्वम् । २) दलकृत्यविशेषे– ' क) अभाव, ख) एव'इत्येतयोः कृत्ये ।

आ) 'न चैवं... तद्विरोधित्वात्'इत्यस्य व्याख्याने– १) 'न चैवं... प्रसज्ज्येते'इत्यस्य पदार्थः । २) 'तर्हि...चेत्'इत्यस्य व्याख्याने– क) शेषः । ख) भावः । ग) उपलक्षणञ्च । ३) 'घटवत् ...तद्विरोधित्वात्'इत्यस्य व्याख्याने– क) पूरणम् । ख) भावः । ४) विकल्पेन पूर्वपक्षाभिप्रायः । ]

अनेनैव न्यायेन पूर्वैकावधिः'इत्यादिवाक्यद्वयं व्याख्येयम् ।

''पुराणादौ अतिव्याप्तिपरिहाराय 'अभाव'पदम्''इतिशेषः ।,

अत्यन्ताभावनिष्ठ-घटप्रतियोगिकाभावे-अतिव्याप्तिपरिहाराय 'एव'-कारः; इति विशेषः ॥

**न चैवमिति** । प्रागभावस्य उत्तरावधित्वे प्रध्वंसस्य पूर्वावधित्वे, घटप्रागभावपुरःसरः तत्प्रध्वंसपुरःसरश्च प्रवाहः; प्रसज्ज्येते; इत्यर्थः ।

**तर्हीति** । 'यदि घटः प्रागभावनिवृत्तिरूपः' इति शेषः । स्वाभावाभावस्य च स्वत्वात् स्वव्याप्तत्वाद्वा; इति भावः ॥ उपलक्षणं च एतत् ।, 'घटस्य प्रध्वंसप्रागभावरूपत्वे घटप्रध्वंसस्य स्वप्रागभावप्रध्वंसयोः अभावे घटप्रागभाववेलायां घटप्रध्वंसस्य सत्त्वापत्तिः, पूर्वोक्तनियमादेव' इत्यपि ग्राह्यम् ।,

**घटवदिति** । प्रध्वंसस्य स्वप्रागभावात्मकघटवत् तत्प्रागभावस्यापि तद्विरोधित्वात्' इत्यपि ग्राह्यम्, नियमस्य प्रागभावप्रध्वंसव्यतिरिक्तविषयत्वनियमात्; इति भावः ।

यद्वा 'वस्तुप्रागभावप्रध्वंसानाधारकालस्य वस्त्वाधारत्वनियमात्' इति पूर्वपक्षाभिप्रायः ।

[ १९ का. विषयः— अस्वतन्त्रतत्त्वविभागे अभावत्रैविध्ये—प्रध्वंसाभावनिरूपणे——

अ) 'पूर्वं...अस्तीति' इत्यस्य व्याख्याने— १) 'पूर्वं...प्रध्वंसाभावः' इत्यस्य व्याख्याने- क) लक्षणस्य विकल्पेन द्विविधोऽर्थः । ख) दलकृत्यानाम् उक्तप्रायता च । २) 'प्रतियोगि प्रध्वंसा...अस्तीति' इत्यस्य व्याख्याने— क) अर्थः । ख) तात्पर्यञ्च ।

आ) 'न चैवं... तद्विरोधात्' इत्यस्य व्याख्याने— १) 'न चैवं... कृतत्वात्' इत्यस्य व्याख्याने— क) प्रागभावप्रध्वंसयो; अतिरिक्तत्वे अनवस्थानिवारकतया १. अवतरणम्; २. शङ्काग्रन्थस्य पदार्थे— क. 'एवम्' पदार्थः; ख. प्रवाहप्रदर्शनञ्च; ३. समाधानग्रन्थस्य भावश्च । २) 'तर्हि..तद्विरोधित्वात्'-इत्यस्य व्याख्याने— क) शङ्कात्वेन 'तर्हि...चेत्' इत्यस्य— १. अवतरणम्, २. पदार्थे— 'क. तर्हि, ख. प्रागभावोन्मज्जनप्रसङ्गः' इति पदयोरर्थौ; ३. भावः; ४. अस्य उपलक्षणत्वञ्च । ख) शङ्कानिवारकत्वेन 'न...तद्विरोधित्वात्' इत्यस्य व्याख्याने— १.अर्थ, २. भावश्च ।

इ) उक्तार्थोपपादने– १) सप्रयोजनं घटध्वंसस्यैव घटप्रागभावध्वंस-रूपत्वमपि । २) घटध्वंससमये घटप्रागभावध्वंसप्रतीत्यापत्तिनिरासः । ]

**पूर्वैकावधिरिति** । सपूर्वाभावत्वम् उत्तरावधिशून्यत्वे सति सावधि-काभावत्वं वा प्रध्वंसाभावत्वम् इत्यर्थः । व्यावृत्त्यादिकम् उक्तप्रायम् ।

**प्रध्वंसानन्तरमिति** । प्रध्वंससामग्र्युत्तरकालम् इत्यर्थः । प्रतियोग्युत्तर-कालम् इति यावत् ॥

प्रागभावप्रध्वंसयोः अतिरिक्तत्वे अनवस्थाम् आशङ्क्य निराचष्टे **न चेति** ।

एवम् = प्रध्वंसप्रागभावयोः पूर्वोत्तरावधिमत्त्वे ॥ **प्रवाहाविति** । 'घटादेः यः प्रागभावः तस्य प्रध्वंसः; तस्य प्रागभावः' इत्येकः, 'घटादेः यः प्रध्वंसः तस्य प्रागभावः तस्य प्रध्वंसश्च' इत्यपरश्च; प्रवाहौ प्रसज्ज्येते; इति ।

**प्रतियोगिन एवेति** । घटस्यैव घटप्रागभावप्रध्वंसस्वरूपत्वात् घट-प्रध्वंसप्रागभावरूपत्वाच्च न अनवस्थितिः; इति भावः ।

शङ्कते **तर्हीति** । घटस्यैव घटप्रागभावध्वंसरूपत्वे; इत्यर्थः ॥, **प्रागभावोन्म-ज्जनप्रसङ्ग इति** । नष्टस्य पुनः उत्थानं स्यात्; इत्यर्थः ।, तद्विरोध्यनधिकरण-कालस्य तदधिकरणत्वनियमात्, घटध्वंसकालस्य घटप्रागभावविरोधिघटात्मक-ध्वंसानधिकरणत्वात्, इति भावः । इदम् उपलक्षणम्; 'घटध्वंसविरोधिघटात्मक-प्रागभावानधिकरणे घटप्रागभावकाले घटध्वंससत्त्वप्रसङ्गः;' इत्यपि बोध्यम् ।,

**तत्ध्वंसस्यापि तद्विरोधित्वादिति** । घटध्वंसस्यापि घटप्रागभाव-विरोधित्वात्; इत्यर्थः । एवञ्च घटप्रागभावस्य घटध्वंसविरोधित्वम् अपि सिद्धमेव, इति न उक्तदोषः; इति भावः ॥

न च ''एवमपि घटध्वंसकाले 'घटप्रागभावो नास्ति'इति प्रतीतिः न स्यात्, घटप्रागभावध्वंसरूपविषयाभावात्''इति वाच्यम्; घटध्वंसस्यैव तदभावत्वेन तद्विषयत्वात् ।

न च ''एवं घटध्वंससमये 'घटप्रागभावो ध्वस्तः'इति प्रतीत्यापत्तिः;'' इति वाच्यम्; प्रतियोगिन एव ध्वंसत्वेन प्रागभावप्रतियोगित्वाभ्युपगमात् ।

[ १९ भ. विषयः— अस्वतन्त्रतत्त्वविभागे— अभावत्रैविध्ये— प्रध्वंसाभावनिरूपणे—

अ) 'पूर्वै...अस्तीति'इत्यस्य व्याख्याने— १) 'पूर्वै...प्रध्वंसाभावः' इत्यस्य विग्रहार्थौ । २) एतदर्थोपपादकतया 'प्रतियोगि...अस्तीति'इत्यस्य अवतरणम् । ३) उक्तार्थविवेचने— क) प्रध्वंसप्रध्वंसाभावयोः ऐक्यसमर्थनम् । ख) लक्षणनिष्कर्षः । ग) दलकृत्ये— ' १. अभाव, २. विशेषणम्, ३. विशेषणे 'यावत्'शब्दः, ४. प्राक्त्वावच्छिन्न, ५. प्रतियोगिप्रध्वंसनिरूपित, ६. स्व 'इतिदलानां कृत्यानि । ४) लक्षणान्तरनिरासे— 'सादिरनन्तः प्रध्वंसः'इत्यस्य दुष्टत्वसमर्थने— क) अतिव्याप्तिः । ख) तत्परिहारेऽपि अव्याप्तिः । एतदव्याप्तिसमर्थनार्थञ्च 'घटादेः प्रागभावं प्रति प्रध्वंसत्व'-निषेधककारणचतुष्टयनिरसनम् । ५) उक्तदोषस्य स्वलक्षणे अलग्नकत्वम् । ६) अवशिष्टविचारस्य पूर्ववदनुसन्धेयता । ७) प्रागभाववत् अस्यापि द्वैविध्यादिप्रदर्शनञ्च ।

आ) 'न चैवं...तद्विरोधात्'इत्यस्य व्याख्याने— १) 'न...प्रसज्ज्यते'-इत्यस्य अर्थः । २) प्रागभावोन्मज्जनप्रसङ्गः'इत्यस्य अर्थः, भावश्च । ३) 'तद्विरोधात्'इत्यस्य अर्थः, भावश्च । ४) अभावस्य प्रतियोगिभेदेन भावत्वम् अभावत्वञ्च । ]

**पूर्वैकावधिरिति** । स्वापेक्षया पूर्वकालः एव = प्रतियोगिसत्तावच्छिन्नकाल इति यावत्, अवधिः= परिच्छेदसमयः, यस्य अभावस्य, सः प्रध्वंसाभावः; इत्यर्थः ।;

---

१. 'प्रतियोगिकत्वा'इत्यपि बहुत्र पाठः ।

इमम् एव अर्थम् उपपादयति प्रतियोगीति[1] ।

"[2]ननु प्रध्वंसप्रध्वंसाभावयोः १] ऐक्यम् ? उत २] भेदः ?

१] आद्ये; प्रध्वंसानन्तरम् एव अभावः अस्ति, कथं प्रध्वंसाभावस्य प्रध्वंसानन्तर्योक्तिः ? न हि स्वयम् एव स्वानन्तरम् उत्पद्यते ।,

२] द्वितीये; किं प्रध्वंसस्य १) उत्पत्तिविनाशौ उभौ अपि विद्येते ? उत २) प्रध्वंसाभाववत् उत्पत्तिमात्रम् ?

१) नाद्यः; उत्पत्तिमतः प्रागभावस्य नियतत्वेन प्रागभावस्य च सान्तत्वनियमेन तत्प्रध्वंसस्यापि अङ्गीकार्यत्वे. पुनः तस्यापि उत्पत्तेः उरीकार्यत्वेन, प्रागभावाद्यङ्गीकारे अनवस्थापातात् । प्रध्वंसस्य विनाशाङ्गीकारे विनाशस्यापि विनाशान्तरावश्याङ्गीकार्यत्वेन, तत्रापि अनवस्थापातात् ।,

२) न द्वितीयः; पूर्वोक्त-अनवस्थितेः तादवस्थ्यात् ।, तत्प्रागभावप्रध्वंसस्यापि पृथक् अङ्गीकार्यत्वेन, पुनः तस्यापि एवंविधत्वेन अनवस्थापातात् च ।"– इति चेत् ; न ऐक्यपक्षस्य उरीकरणात् ।,

न च आनन्तर्योक्तिविरोधः; तत्र प्रध्वंसपदेन नियततत्पूर्वावस्थायाः लक्षणया विवक्षितत्वात् ।;

अत्र पदकृत्यचिन्तायां प्रयुक्त'प्रध्वंस'शब्दस्यापि तत्र तत्र एवमेव अर्थः विवक्षितः; इति न कश्चित् क्षुद्रोपद्रवः ।

अत्रापि एवं लक्षणनिष्पत्तिः– 'स्वप्रतियोगिप्रध्वंसकालनिरूपितप्राक्त्वावच्छिन्नयावत्कालावृत्तिः अभावः प्रध्वंसाभावः' इति ।

---

१. "इदञ्च लक्षणम् उद्देशेनैव लब्धम्' इति भावेन 'प्रध्वंसाभाव' शब्दं निरुच्य दर्शयति" इतिग्रन्थान्तरे ।
२. 'ननु...क्षुद्रोपद्रवः' इति ग्रन्थान्तरे नास्ति ।

अत्र 'अभावः' इत्युक्तौ घटप्रतियोगिक अन्योन्याभावरूपे घटध्वंसानन्तरकाले अतिव्याप्तिः; अनन्तरकालस्य प्राक् अवृत्तित्वात् ।,

विशेषणानुक्तौ प्रागभावे अत्यन्ताभावे च अतिव्याप्तिः ।,

विशेषणे 'यावत्'शब्दानुक्तौ प्रागभावे अतिव्याप्तिः; तस्य प्रतियोग्युत्पत्तेः पूर्वं सत्त्वेऽपि तत्ध्वंसात्पूर्वं स्थितिकाले अवृत्तित्वात् ।,

'यावत्कालवृत्तिः अभावः' इत्युक्तौ असम्भवः । तन्निरासाय 'प्राक्त्वावच्छिन्न' इति ।,

तथापि पुनः असम्भवः स्यादेव, उत्पत्स्यमानघटान्तरोत्पत्तिकालात् प्रागपि सत्त्वात् घटध्वंसाभावस्य ; अतः 'प्रतियोगिप्रध्वंसकालनिरूपित'-इति ।,

'स्व'पदादानेऽपि पुनः असम्भवः एव; भविष्यद्घटध्वंसाभावस्य घटान्तरप्रध्वंसात्प्रागपि सत्त्वात् ।;

अतः सर्वमपि सार्थकम् ।[३]

अत्रापि 'सादिरनन्तः प्रध्वंसः' इति[४]परोक्तलक्षणस्य दुष्टत्वात् लक्षणान्तरम् इदम् उक्तम् । तथाहि—

पुराणादिपौरुषेयग्रन्थेषु अतिव्याप्तिः तावत् ।,

अभावत्वेन विशेषणेऽपि, प्रागभावप्रध्वंसरूपे प्रतियोगिनि घटादौ अव्याप्तिः; तस्य अनन्तरत्वाभावात् ।,

---

३. "नन्वत्र प्रध्वंसाभावलक्षणशरीरे प्रध्वंसस्य निविष्टत्वात् आत्माश्रयः । मैवम्; लक्षणघटक'प्रध्वंस'पदेन तदव्यवहितपूर्वलक्षणवृत्तिप्रतियोगिवृत्त्यवस्थाविशेषस्य विवक्षितत्वात् ।" इति अधिकमत्र ग्रन्थान्तरे ।

४. तर्कसङ्ग्रहे अन्नम्भट्टः । अथवा सर्वदर्शनसङ्ग्रहे अक्षपाददर्शनं द्रष्टव्यम् ।

ननु घटादेः प्रागभावं प्रति प्रध्वंसत्वमेव नास्ति; तत्कथं तस्य लक्ष्यतावच्छेदकावच्छिन्नत्वम्, येन अव्याप्तिः स्यात् लक्षणस्य ? इति चेत्; तत्किम् १) साधकप्रमाणाभावात् कल्प्यते ? उत २) बाधकसद्भावात् ? अथवा विपक्षे ३) बाधकाभावात् ? आहोस्वित् ४) साधकसद्भावात् ?

१) नाद्यः; घटवद्भूतलदर्शने 'अस्त्यत्र घटः' इतिवत् 'नास्त्यत्र घटप्रागभावः' इति प्रत्ययदर्शनात् ।,

२) " 'विमतो घटादिः प्रध्वंसरूपो न भवति भावत्वात् चेतनवत्, अन्यथा भावत्वमेव न स्यात्' इतिबाधकसद्भावात् इत्थं कल्प्यते" इति चेत्; न, अभावाभावस्य भावत्वनियमेन, प्रागभावं प्रति प्रध्वंसत्वेऽपि भावत्वाहानेः । 'विमतः न प्रध्वंसः तल्लक्षणाभावात्' इत्यनुमानं तु अन्योन्याश्रयत्वात् अमानम् ।,

४) अत एव च न चतुर्थः ।,

३) नापि तृतीयः; प्रागभावप्रध्वंसस्य प्रतियोगिभिन्नत्वे तत्प्रागभावोऽपि पृथक् अङ्गीकार्य एव; प्रागभावस्य च सान्तत्वनियमेन 'तस्यापि प्रध्वंसः, तस्यापि पुनः प्रागभावः' इत्यनवस्थानस्य वक्ष्यमाणत्वात्; इति ।

इदं तु लक्षणं घटादिष्वपि वर्तते; स्वप्रतियोगिभूतप्रागभावविनाशकालनिरूपितप्राक्त्वावच्छिन्नयावत्कालावृत्तित्वे सति प्रागभावं प्रति अभावरूपत्वात् घटादीनाम् ।

अवशिष्टो विचारस्तु प्रागभावलक्षणविचारे कथितरीत्या यथासम्भवम् अनुसन्धेयः, न्यायतौल्यात् ।

द्वैविध्यादिकम् अपि प्रागभाववदेव अवगन्तव्यम् । तथाहि–

प्रध्वंसाभावो द्विविधः भावप्रतियोगिकः अभावप्रतियोगिकश्च इति ॥ ॥ तत्र आद्यः अनन्त एव ॥ द्वितीयोऽपि द्विविधः अनन्तप्रतियोगिकाभावप्रतियोगिकः सान्तप्रतियोगिकाभावप्रतियोगिकश्च इति । तत्र आद्यः अनन्त एव, यथा पुराणादिप्रागभावप्रध्वंसरूपः स्वयमेव पुराणादिः ।, द्वितीयस्तु सोऽन्तः[५], यथा घटप्रागभावप्रध्वंसरूपः स्वयमेव ॥ इति ॥

**नचैवमिति** । 'उत्पन्ने तु तस्मिन् नास्ति'इत्यनेन प्रागभावस्य प्रध्वंसः उक्तः, तस्य च जनिमत्त्वेन अपरः प्रागभावो वक्तव्यः, सोऽपि एवमेव; इति प्रागभावप्रध्वंसाभावयोः प्रवाहः एकः ।, तथा 'न तु प्रागस्ति'इत्यनेन प्रध्वंसाभावस्य प्रागभाव उक्तः, तस्य च सान्तत्वेन अपरः प्रध्वंसः वाच्यः, सोऽपि प्रागभावान्तरवान्; इति प्रध्वंसप्रागभावयोः प्रवाहः अपरः । इति द्वौ प्रवाहौ प्रसज्ज्येते इत्यर्थः ।[६]

**प्रागभावोन्मज्जनप्रसङ्ग इति** । पुनरापत्तिप्रसङ्गः इत्यर्थः । यथा भावप्रतियोगिकाभावाभावे भाव एव नियतः, एवम् अभावप्रतियोगिकाभावाभावे अभाव एव नियतः; इति भावः ।;[७]

**तद्विरोधादिति** ॥ प्रागभावविरोधित्वात्; इत्यर्थः ॥ 'न हि प्रागभावे सति घटः उत्पद्यते; मुतरां तत्प्रध्वंसः । द्वितीयाभावस्य प्रतियोगिस्वरूपत्वं तु तयोः अविरोधे सति एव दृष्टम् । प्रकृते तु विरोध एव विद्यते । अतः न प्रागभावस्य पुनरापत्तिः । 'इति भावः ।

---

५. सादिः

६. 'तथाच अनवस्था इति भावः'इति ग्रन्थान्तरे ।

७. इतः अग्रे प्रध्वंसाभावसन्दर्भे ग्रन्थान्तरे ''**घटवदिति** । प्रागभावविनाशं विना घटध्वंसस्य अजायमानत्वात् । अभावाभावे प्रतियोग्यापत्तिस्तु अत्यन्ताभावविषयिणी; तत्र द्वितीयाभावस्य अप्रामाणिकत्वात्, अत्र तु अभावत्रयस्यापि प्रामाणिकत्वात् । इति भावः ॥''इत्येव वर्तते ।

'नन्वेवम् प्रागभावप्रध्वंसस्य प्रध्वंसप्रागभावस्य च प्रतियोगिस्वरूपत्वोक्तौ, अनादिनित्यभूतभावपदार्थव्यतिरिक्तसमस्तभावपदार्थानाम् अपि उक्तरित्या प्रागभावप्रध्वंसाभावप्रवेशसम्भवेन, प्रायेण अभाववार्ता एव लुप्येत; ततश्च नित्यानित्यानाम् अनित्यानाञ्च भावविभागत्वोक्तिः वक्ष्यमाणा न उपपद्येत' **इति चेत्; मैवम्;** यो हि भावप्रतियोगिकोऽभावः स एव हि अभावत्वेन-संव्यवह्रियते, प्रतिषेधमात्रधीविषयत्वात्; यस्तु अभावप्रतियोगिकः सः भाव रूप एव, इति न तस्य प्रसिद्धाभाववत् अभावान्तर्गणनम्, यथा अन्योन्याभावस्य अभावतासम्भवेऽपि न अभावेषु परिगणनम् धर्मिस्वरूपत्वात्; एवम् अत्रापि । एवञ्च प्रागभावप्रध्वंसादेः भावस्वरूपत्वेन, केवलाभावस्वरूपत्वाभावात्; न कश्चित् विरोधः; इत्याशयात् ।

[ २० टी. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– सदोऽभावनिरूपणे–

अ) सदाऽभावस्य लक्षणम् ।

आ) उक्तार्थोपपादने– १) स्पष्टीकरणम् । २) 'सदाऽभाव' इति-अप्रसिद्धसंज्ञाकरणे-निमित्तपरतया– क) लक्षणस्यापि उद्देशेनैव सूचनम् । ख) अन्योक्त एतत्स्वरूप निराकरणञ्च । ]

**निरवधिकोऽभावः सदाभावः ॥**

**सदा अभावः अस्ति इतिकृत्वा ।**

**अथ 'अत्यन्ताभावः' इतिप्रसिद्धसंज्ञाऽतिक्रमेण 'सदाऽभावः'-इतिसंज्ञान्तरकरणम् किमर्थम्? लक्षणस्यापि उद्देशेनैव सूचनार्थम् ।, यच्च अन्यैः अत्यन्ताभावस्वरूपम् उक्तम् 'संसर्गप्रतियोगिकाभावः अत्यन्ताभावः, इति; यथा एतद्घटे एतद्भूतलसंसर्गाभावः' इति; तदपि निराकर्तुम् एतत्, तस्य निरवधिकत्वाभावात् ।**

[ २० स. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– सदाऽभावनिरूपणे–

अ) 'सदा...कृत्वा'इत्यस्य व्याख्याने– १) निरवधिकत्वोपपादकतया अवतरणम् । २) अत्र-प्रसक्तशङ्कासमाधानयोः तत्त्वविवेकटीनुसाऽरेण द्रष्टव्यत्वञ्च ।

आ) 'अथ...भावात्'इत्यस्य व्याख्याने– १) शङ्कासमाधायकतया 'लक्षणस्यापि...भावात्'इत्यस्य अवतरणम् । २) 'यच्च...भावात्'इत्यस्य व्याख्याने– क) 'संसर्ग...संसर्गाभाव इति'इत्यस्य अर्थः, भावश्च । ख) 'तदपि...भावात्'इत्यस्य व्याख्याने– १. 'तदपि...एतत्'इत्यस्य– अन्वयः, पदार्थश्च । २. 'तस्य निरवधिकत्वाभावात्'इत्यस्य अर्थश्च । ]

निरवधिकत्वमेव उपपादयति **सदाऽभावोऽस्तीति** । अत्र च 'ननु यदपेक्षया पूर्वमपरम्'इत्यादिशङ्कासमाधाने तत्त्वविवेकटीकाऽनुसारेण द्रष्टव्ये ॥

समाधत्ते **लक्षणस्यापीति** ।

**संसर्गप्रतियोगिक इति** । घटस्य निषेधप्रतियोगित्वबाधेन 'सविशेषणे हि...'[1]इतिन्यायेन संसर्गस्यैव प्रतियोगित्वेन उल्लेखात् इत्यर्थः । अत एव 'प्रतियोग्यधिकरणसंसर्गारोपजन्यनिषेधधीविषयः यः अभावः, सः संसर्गाभावः'इति केचित् आहुः ।, उदयनोऽपि 'संसर्गो ह्यत्र निषिध्यते'इति संसर्गस्यैव निषेध्यत्वम् आह ।; इति भावः ॥ ॥ **तदपीति** । निराकर्तुम् अपि; इति योजना । 'न केवलं लक्षणसूचनार्थम्'इति अपेः अर्थः ॥ **तस्येति** । उक्तरीत्या संसर्गस्यैव विषेधः अङ्गीक्रियते; अत्यन्ताभावत्वं तु न अङ्गीक्रियते; संज्ञानिरूक्तिलब्धलक्षणशून्यत्वात् इत्यर्थः ।

[ २० के. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– सदाऽभावनिरूपणे–

अ) 'निरवधिकोऽभावः सदाऽभाव'इत्यस्य व्याख्याने–

---

१. 'सविशेषणे हि विधिनिषेधौ असति बाधके विशेषणमुपसङ्क्रामतः'-इति न्यायेन ।

१) सदाऽभावकक्षकतया अवतरणम् । २) अर्थः । ६) अस्य निरवधिकत्वोपपादकः आशयः । ४) मतान्तरेण अर्थश्च ।

आ) 'सदा...निरवधिकत्वाभावात्'इत्यस्य व्याख्याने– १) उक्तार्थोपपादकतया अवतरणम् । २) 'अथ...भावात्'इत्यस्य व्याख्याने– क) संज्ञान्तरकरणायुक्तत्वाभिप्रायपूर्वकम् तच्छङ्कात्वेन 'अथ...किमर्थम्'इत्यस्य अवतरणम् । ख) तस्याः उत्तरत्वेन 'लक्षण...भावात्'इत्यस्य व्याख्याने– १. अवतरणम्; २. 'लक्षण...सूचनार्थम्'इत्यस्य व्याख्याने– क. पदार्थः; ख. उभयसंज्ञयोः अविशेषनिरासश्च; ३. यच्च...भावात्'इत्यस्य व्याख्याने– क. सप्रयोजनं संज्ञान्तरकरणस्य प्रयोजनान्तरत्वेन अवतरणम्; ख. 'अस्मिन्पक्षे एव परमतनिराकरणस्य स्फुटतया लाभः'इत्याशयः; ग. 'यथा...इति'इत्यस्य आशयश्च; घ. 'तदपि...भावात्'इत्यस्य व्याख्याने– १- 'एतत्'इत्यस्य अर्थः, २-'तदपि...एतत्'इत्यस्य अर्थः, आशयश्च, ३- 'तस्य निरवधिकत्वाभावात्'इत्यस्य अर्थश्च । ]

सदाऽभावं कक्षयति[1] **निरवधिक इति**। प्रतियोगिकालावधिकपूर्वत्वापरत्वरहितः अभावः; इत्यर्थः । प्रागभावस्य सेत्स्यमानप्रतियोग्यवधित्वात्, प्रध्वंसस्य उत्पन्नप्रतियोग्यवधित्वात्, युक्तं सावधित्वम्; अत्यन्ताभावस्य तु अवधिभूतप्रतियोगिन एव असत्त्वात् निरवधिकत्वम्; इत्याशयः ।

'प्रागभावाप्रतियोगित्वे[2] सति ध्वंसाप्रतियोगित्ववान्; इत्यर्थः; इत्यपि आहुः ॥

तदुपपादयति **सदेति** ।

"ननु 'प्राक्, प्रध्वंसः'इति प्रसिद्ध्यनुसारेण यथा संज्ञा कृता, तथा तदनुसारेण 'अत्यन्ताभावः'इत्येव संज्ञा कार्या । न च 'तत्त्वविवेकानुसारेण इयं संज्ञा इति वाच्यम्; तथा सति तदनुसारेण 'पूर्व-अपर'इति प्रागभावादौ अपि तदापातात्, अविशेषात् । क्वचित् तत्त्वविवेकानुसरणस्य क्वचित् प्रसिद्ध्यनुसरणस्य च अयुक्तत्वात् ।"इत्याशङ्कते **अथेति** ॥;

---

१. लक्षयति २. 'प्रागभावप्रति...इति ग्रन्थचतुष्टय पाठः ।

उत्तरम् आह **लक्षणस्यापीति** ।।;

लक्षणस्यापि निर[3]वधिकसदाभावत्वापरपर्यायस्य अप्रामाणिकप्रतियोगिक-अभावत्वरूपलक्षणस्य इत्यर्थः ।। यद्यपि 'अत्यन्ताभावः' इति-उद्देशेऽपि 'अत्यन्त'पदार्थविवेकतात्पर्यतः सः अर्थः लभ्यते एव, इति अविशेषः; तथापि अविलम्बेन लक्षणोपस्थित्यर्थं तथा उक्तम्; इति ध्येयम् ।।,

यद्वा एतदस्वरसादेव संज्ञान्तरकरणस्य प्रयोजनान्तरम् आह **यच्चेति** ।;

यद्यपि अत्र परमतनिराकरणं तथा उद्देशे लभ्यते एव, तथापि स्फुटतया न लभ्यते; इत्याशयः ।। ।। **यथेति** । घटवति भूतले घटापसरणानन्तरम् 'इह-भूतले अयं घटो नास्ति' इति प्रतीत्या 'एतद्भूतले एतद्घटसंसर्गस्य अभावः एव विषयीक्रियते' इति वाच्यम् ।, अन्यथा 'इह भूतले' इति अधिकरणसप्तमी न स्यात् ।। किञ्च[4] न तावत् अयम् तद्घटान्योन्याभावः; तादात्म्यानुल्लेखात्; ।, न च तद्घटप्रागभावप्रध्वंसौ, प्रतियोगिसमानकालीनत्वात्, नापि सदातनस्थः तदत्यन्ताभावः; प्रतियोगिसमानदेशत्वात, पुनस्तत्र घटाऽऽनयनेऽपि तस्य सत्त्वेन प्रतीतिप्रसङ्गाच्च; न हि तदा सः अन्यत्र गतः अमूर्तत्वात्, नापि नष्टः नित्यत्वात्, अथ सन् अपि प्रत्यासत्तिविरहात् न गृह्यते । ए[5]वं 'समयविशेष-संसर्गिणा घटस्य संसर्गाभावेन उपपत्तौ न संसर्गप्रतियोगिकसदातनाभावकल्पनम्' इति चेत्; न, तथा सति प्रागभावप्रध्वंसयोः उच्छेदप्रसङ्गात्. पूर्वोत्तरसमय-संसर्गिणा तदत्यन्ताभावेनैव 'भविष्यति, विनष्टः' इतिप्रतीत्योः उपपत्तेः । न च 'उत्पादविनाशशीलः तुरीयः एव अयम् अभावः' इति वाच्यम्, तादृश-अभावकल्पने मानाभावात् । न च 'एवं घटात्यन्ताभावः क्वचिदपि न सिध्येत्, इति वाच्यम्, [6]दृष्टत्वात् । अत एव 'संसर्गोऽत्र निषिध्यते' इति संसर्गनिषिद्धत्वप्रतिपादक-उदयनवचनं च उपपन्नम्; इत्याशयः ।,

---

३. निरवधिकसमानसदा ४. एवञ्च ५. 'समयमात्रासंसर्गिणा, मात्रसमयविशेषणसंसर्गिणा' इत्यादिपाठाः उपलभ्यन्ते । ६. इष्टत्वात्

एतदिति ॥ संज्ञान्तरकरणम् । 'सदाऽभावः' इतिसंज्ञान्तरकरणस्यैव तन्मतनिराकरणं प्रयोजनम्, इत्यर्थः । तथाच 'ससंर्गप्रतियोगिकाभावोऽत्यन्ताभावः' इति अनुमानम्, इत्याशयः ॥ तत् कथम्? इत्यत आह तस्येति । संसर्गाभावस्य निरवधिकत्वाभावात् । अत्यन्ताभावस्य तु उक्तरीत्या निरवधिकत्वसिद्धेः, न संसर्गाभावः अत्यन्ताभावः, इत्यर्थः ।

[ २० वि.— विषयः— अस्वतन्त्रतत्त्वविभागे— अभावत्रैविध्ये— सदाऽभावनिरूपणे—

अ) 'निरवधिकः...कृत्वा' इत्यस्य व्याख्याने— १) 'निरवधिकोऽभावः सदाभावः' इत्यस्य व्याख्याने— क) अर्थः । ख) दलकृत्ये— '१. निरवधिक, २. अभाव, ३. अन्योन्याभावस्य अलक्ष्यत्वम्' इत्येषां कृत्यानि । २) 'सदा... कृत्वा' इत्यस्य व्याख्याने— क) लक्ष्ये लक्षणदर्शकतया अवतरणम् । ख) अन्वयश्च ।

आ) 'अथ अत्यन्ताभावः...भावात्' इत्यस्य व्याख्याने— १) नामान्तरकरणकारणप्रश्नत्वेन अवतरणम् । २) तदुत्तरत्वेन— क) 'लक्षण...सूचनार्थं' इत्यस्य व्याख्याने— १. अवतरणम्, २. पदार्थश्च । ख) मतान्तरदूषकतया 'यच्च...भावात्' इत्यस्य व्याख्याने— १. मतान्तरानुवादकतया— 'यच्च...संसर्गाभाव इति' इत्यस्य अवतरणम्, अर्थश्च; २. तन्निरासकतया 'तस्य...भावात्' इत्यस्य अवतरणम्, अर्थः भावश्च । ]

निरवधिकोऽभाव इति । पूर्वोत्तरावधिरहितः अभावः सदाऽभावः अत्यन्ताभावः, इत्यर्थः ।

प्रागभावप्रध्वंसयोः अतिव्याप्तिपरिहाराय 'निरवधिक' इतिविशेषणम् ।

अव्याकृताकाशादौ अतिव्याप्तिपरिहाराय 'अभाव' पदम् ॥

न च आकाशादिनिष्ठ अन्योन्याभावे अतिव्याप्तिः, तस्य धर्मिभिन्नाभावाभावत्वात्; इति ।

6

लक्ष्ये लक्षणं दर्शयति **सदेति** । सर्वदा शशविषाणाद्यत्यन्ताभावः अस्ति इति कृत्वा अत्यन्ताभावः निरवधिकः; इत्यन्वयः ॥

" 'अत्यन्ताभावः' इति सकलवादिप्रसिद्धसंज्ञाम् उल्लङ्घ्य 'सदाभावः इति किमर्थं नामान्तरकरणम् ?'' इति पृच्छति **अत्यन्ताभाव इति** ।;

उत्तरमाह **लक्षणस्यापीति** । अत्यन्ताभावलक्षणस्य निरवधिकाभावत्वस्यापि, उद्देशेनैव= नामसङ्कीर्तनेनैव, ज्ञापनार्थम्; इत्यर्थः ।

मतान्तरं दूषयितुम् अनुवदति **यच्चान्यैरिति** । तत्, मतम्, अपि, निराकर्तुम्; एतत्= अत्यन्ताभावस्य 'सदाभावः' इति नामान्तरकरणम्; इत्यर्थः ।;

कथम् एवं संज्ञाकरणेन तन्मतनिराकरणं भवति ? इतिजिज्ञासायाम् आह **तस्येति** । संसर्गप्रतियोगिकाभावस्य; इत्यर्थः । 'अत्र घटो नास्ति' इतिप्रतीतिविषयस्य घट-एतद्भूतलसंसर्गप्रतियोगिकाभावस्य, घटस्य अत्र आनयनेन विनाशस्यापसरणेन उत्पत्तेश्च जायमानत्वात्; निरवधिकाभावत्वं नास्ति; इति भावः ।

[ २० मु. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– सदाऽभावनिरूपणे–

अ) 'निरवधिकोऽभावः सदाऽभावः' इत्यस्य अर्थः ।

आ) 'अथ...भावात्' इत्यस्य व्याख्याने– १) 'अथ...किमर्थम्'- इत्यस्य भावः । २) 'लक्षण...भावात्' इत्यस्य व्याख्याने– क) 'लक्षण... सूचनार्थम्' इत्यस्य व्याख्याने– शेषः, भावश्च । ख) 'यच्च...भावात्' इत्यस्य व्याख्याने– १. सप्रयोजनं प्रयोजनान्तरत्वेन अवतरणम्; २. 'यच्च...संसर्गाभाव इति' इत्यस्य व्याख्याने– क. 'यच्च...अत्यन्ताभाव इति' इत्यस्य– अर्थः,

शेषश्च; ख. 'यथा...संसर्गाभाव इति' इत्युक्तार्थोपपादने– उदाहृतप्रतीतौ संसर्गाभावादितराभावाणां विषयत्वानुपपत्तिः; ३. 'तदपि...भावान्' इत्यस्य व्याख्याने– 'तस्य निरवधिकत्वाभावात्' इत्यस्य व्याख्याने– शेषपूरणं सप्रयोजनम् । ]

**निरवधिक इति** । स्वस्थितौ पूर्वोत्तरकाललक्षणमर्यादाशून्यः; इत्यर्थः ॥

**अथेति** । अन्यथा प्रसिद्धसंज्ञासमभिव्याहारो न स्यात्; इति भावः ।

**सूचनार्थमिति** । 'अविलम्बेन' इति शेषः । प्रसिद्धसंज्ञाग्रहणे 'अत्यन्तं प्रतियोगिनः अभावः, न तु एकेनापि रूपेण सत्त्वम्' इति प्रतीतौ, मीमांसया तदपाकरणेन प्रकृतार्थस्थापनायां विलम्बापत्तेः; इति भावः ॥;

'पूर्वपक्षे प्रतीतिविलम्बः, सिद्धान्ते तु प्रसिद्ध्यतिक्रमः; इति साम्यात् न एकत्र पक्षपातो युक्तः' इत्यरुचेः प्रयोजनान्तरम् आह **यच्चान्यैरिति** ॥,

स्वरूपलक्षणम्; इत्यर्थः । 'उदाहृतं च' इति वाक्यशेषः ।,

**यथैतदिति** । भूतले घटप्रतियोगिकाभाव एव किं न स्यात्? इति चेत्; न; प्रतियोगिसमवायिकारणत्वात् प्रतियोग्यसमानकालीनत्वाच्च प्रागभावप्रध्वंसयोः, प्रतियोगिसमानदेशत्वेन अत्यन्ताभावस्य, तादात्म्यानुल्लेखेन अन्योन्याभावस्यापि वक्तुम् अशक्यत्वात् ।;

**तस्येति** । 'सर्वस्य' इति शेषः ॥ अन्यथा संसर्गाभावविशेषस्य निरवधिकत्वेन 'निरवधिकत्वाभावात्' इतिहेतोः असिद्धिः, 'यथासंभवं प्रागभावादिषु अन्तर्भावात्' इतिस्ववचनविरोधश्च स्यात् अत्यन्ताभावेऽपि सर्वस्य तत्त्वाभावेन न असिद्धिस्ववचनविरोधौ; इति ।

---

१. २१तमे सामान्यपरिच्छेदे टीकावचनम् ।

[ २० का. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– सदाऽभावनिरूपणे–

अ) 'निरवधिकः...कृत्वा' इत्यस्य व्याख्याने– १) 'निरवधिकोऽभावः सदाभावः' इत्यस्य व्याख्याने– क) अर्थः । ख) दलकृत्यञ्च ।

आ) प्रकारान्तरेण अभावत्रयलक्षणानां व्याख्याने– १) लक्षणकथनम् । २) सप्रयोजनं ध्वंसत्व प्रागभावत्वयोः अखण्डोपाधित्वम्, अत्यन्ताभावलक्षणेऽपि आत्माश्रयपरिहारः ।

इ) मतान्तरेण– अभावत्रयलक्षणानां व्याख्याने– १) प्रथममतान्तरेण– क) प्रागभावनिरूपणे १. लक्षणार्थः; २. दलकृत्ये– 'क. सत्यन्तद्वयम्, ख. 'यत् तत्'पदसापेक्षता, ग. 'यत् तत्'पदनिवेशे किञ्चिदंशं विहायापि अस्य लक्षणान्तरत्वम्, घ. अभावत्वम्' इत्येषां कृत्यानि । ख) प्रागभावनिरूपणे– १. लक्षणार्थः; २. दलकृत्ये– 'क. सत्यन्तद्वयम्, ख. पूर्ववत् 'यत् तत्'पदनिवेशः, ग. अभावत्वम्' इत्येषां कृत्यानि । ग) अत्यन्ताभावनिरूपणे– १. लक्षणार्थः; २. दलकृत्ये– 'क. 'रहित'न्तम्. ख. अभावत्वम्' इत्येतयोः कृत्ये; ३. लक्षणसमन्वयोपपादनञ्च । द्वितीयमतान्तरेण अभावत्रयाणामपि लक्षणान्तराणि ।

ई) 'अथ...भावात्' इत्यस्य व्याख्याने- १) अपूर्वसंज्ञाकारणप्रश्नत्वेन 'अथ...किमर्थम्'– इत्यस्य व्याख्याने– क) अवतरणम् । ख) भावश्च । २) तदुत्तरत्वेन 'लक्षण...भावात्' इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'लक्षण...सूचनार्थम्' इत्यस्य दलकृत्यसहितः अर्थः, भावश्च । ग) 'यच्च...भावात्' इत्यस्य व्याख्याने– १. मतान्तरनिराकरणार्थं तन्मतान्तरानुवादकत्वेन 'यच्च...संसर्गाभाव इति' इत्यस्य व्याख्याने– क. अवतरणम्; ख. 'स्वरूपम्' पदार्थः; ग. 'एतद्घट...अभाव इति' इत्यस्य व्याख्याने– १- अर्थः, २- घटस्य संसर्गाभावप्रतियोगित्वशङ्कानिरासश्च; २. तन्मतान्तरनिराकरणे– 'तस्य...भावात्' इत्यस्यपदार्थः, सम्बन्धः, भावश्च । ]

**निरवधिकोऽभाव इति** । अवधित्वानिरूपकत्वे सति अभावत्वं अत्यन्ताभावत्वम्; इत्यर्थः ।,

ध्वंसादेः गगनादेश्च हानाय सत्यन्तविशेष्ययोः निवेशः ॥

अथवा 'उत्तरैकावधिः' इत्यादेः 'ध्वंसप्रतियोग्यभावत्वम्, प्रागभावाप्रतियोगित्वेसति अभावप्रतियोग्यभावत्वं वा प्रागभावत्वम्; प्रागभावप्रतियोग्यभावत्वम्. ध्वंसाप्रतियोगित्वे सति अभावप्रतियोग्यभावत्वं वा ध्वंसत्वम्; अभावाप्रतियोग्यभावत्वम् अत्यन्ताभावत्वम्;' इत्यर्थः ।

ननु आद्ययोः प्रागभावध्वंसलक्षणयोः प्रध्वंसत्वप्रागभावत्वप्रवेशात् अन्योन्याश्रयः, द्वितिययोश्च आत्माश्रयः; एवम् अत्यन्ताभावत्वे अप्रतियोगित्वम्= प्रतियोगित्वात्यन्ताभावः इति आत्माश्रयः; इति चेत्; उच्यते— 'ध्वस्तः'इत्यादि-अनुगतप्रतीतिनियामकं हि ध्वंसत्वादिकम् अखण्डोपाधिः, अन्यथा घटादेः भावस्य ध्वंसत्वाद्यनुपपत्त्या 'घटप्रागभावो ध्वस्तः'इत्यादिप्रतीत्यनुपपत्तेः ।, उक्तञ्च विजयीन्द्रतीर्थैः 'प्रागभावत्वम् अखण्डोपाधिः'इति । एवञ्च तादृशध्वंसत्वादेः एव निरुक्तप्रागभावादिलक्षणघटकत्वात् न उक्तदोषः ॥ एवं 'नास्ति'इति—अनुगतप्रतीतिनियामकं यत् प्रागभावादित्रयसाधारणम् अभावत्वम्, तदेव अत्यन्ताभावत्वघटकम्; इति न कश्चित् दोषः ॥ अधिकम् अन्यत्र अनुसन्धेयम् ॥

केचितु " 'उत्तरैकावधिः' इत्यस्य 'स्वप्रतियोग्युत्तरकालनिष्ठ-अभावप्रतियोगित्वे सति स्वप्रतियोगिप्राक्कालवृत्तित्वे सति अभावत्वम्' इत्यर्थः ।;

ध्वंसादिवारणाय सत्यन्तद्वयम् । तत्र प्रथमसत्यन्ताभावे, घटादिध्वंसस्य स्वात्मकभेदप्रतियोगिभविष्यद्वस्तुप्राक्कालवृत्तित्वात् अतिव्याप्तिः; द्वितीयसत्यन्ताभावेऽपि, स्वात्मकभेदप्रतियोग्यतीतवस्तूत्तरकिञ्चित्कालनिष्ठाभावप्रतियोगित्वात् तत्रैव अतिव्याप्तिः ।,

न च 'एवम् उक्तरीत्या भूतभाविप्रतियोगिद्वयम् आदाय सत्यन्तद्वयसत्वात् उक्तातिव्याप्तिः तदवस्था एव' इति वाच्यम्; स्वस्य तत्प्रतियोग्युत्तरकालनिष्ठाभावप्रतियोगित्वाम् तत्प्रतियोगिप्राक्कालवृत्तित्वस्य विवक्षितत्वात् ।,

न च 'स्वस्य यत्कालनिष्ठाभावप्रतियोगित्वम् तत्प्राक्कालवृत्तित्वस्यैव-प्रागभावलक्षणत्वं सम्भवति' इति वाच्यम्; यथासन्निवेशेन अस्य लक्षणान्तर-त्वात् ।,

घटादिप्राक्कालवारणाय अभावत्वप्रवेशः ।

एवम्; 'पूर्वैकावधिः'इत्यस्य 'स्वप्रतियोगिप्राक्कालनिष्ठाभावप्रतियोगित्वे सति स्वप्रतियोग्युत्तरकालवृत्तित्वे सति अभावत्वम्' इत्यर्थः ।;

प्रागभावादिवारणाय सत्यन्तद्वयम् । तत्र प्रथमसत्यन्ताभावे, घटप्राग-भावस्य स्वात्मकभेदप्रतियोग्यतीतवस्तूत्तरकालवृत्तित्वात् अतिव्याप्तिः; द्वितीय-सत्यन्ताभावेऽपि, स्वात्मकभेदप्रतियोगिभविष्यद्वस्तुप्राक्कालनिष्ठाभावप्रतियोगि-त्वात् तत्रैव अतिव्याप्तिः ।,

अत्रापि स्वस्य यत्प्रतियोगिप्राक्कालनिष्ठाभावप्रतियोगित्वम् तत्प्रति-योग्युत्तरकालवृत्तित्वं विवक्षणीयम्; अतः न पूर्ववत् दोषः ।,

घटाद्युत्तरकालवारणाय 'अभावत्व'निवेशः ।

एवम्; 'निरवधिकः'इत्यस्य 'प्रतियोग्यवधिकपूर्वोत्तरत्वरहिताभावत्वम्' इत्यर्थः ।;

प्रागभावध्वंसयोः वारणाय 'रहित'ान्तम् ।,

नित्यसादृश्यादिवारणाय अभात्वनिवेशः ।,

अत्यन्ताभावस्य च प्रतियोग्यसत्वेन सदातनत्वात् लक्षणसमन्वय; " इत्याहुः ।

'स्वानधिकरणकालपूर्ववृत्त्यभावत्वम्= प्रागभावत्वम् । स्वानधिकरण-कालोत्तरवृत्यभावत्वम्=ध्वंसत्वम् । सर्वकालवृत्त्यभावत्वम्= अत्यन्ताभाव-त्वम् । 'इत्यप्याहुः ॥

'सदाऽभावः'इति-अपूर्वसंज्ञाग्रहणे कारणं पृच्छति अथेति ।,

यद्यपि 'सदाऽभावः'इति मूले नास्ति, तथापि 'प्राक्त्वादिना विशेषितः अभावः'इति-अर्थानुवादात् 'प्रागभावादिसंज्ञावत् 'सदाऽभाव'-संज्ञाऽपि अभिप्रेता; इति भावः ।

उत्तरयति **लक्षणस्येति** ॥;

"ननु 'अत्यन्ताभावः'इति-उद्देशेऽपि, 'अत्यन्त'पदेन सदातनत्व-विवक्षायाम् उक्तलक्षणं लभ्यते एव"इति-आशङ्कानिरासार्थम् 'उद्देशेनैव'-इत्युक्तम् ॥ व्याख्यानादिनिरपेक्षेण उद्देशेन इत्यर्थः । 'अत्यन्त'पदन्तु, अनेकार्थत्वात् न उद्देशेनैव लक्षणप्रत्यायकम्; इति भावः ॥,

'मतान्तरनिराकरणम् अपि उक्तसंज्ञाकरणप्रयोजनम्'इतिवक्तुं मता-न्तरम् अनुवदति **यच्चेति** ।;

**स्वरूपमिति** । सर्वाभावसाधारणरूपम् इत्यर्थ; । लक्षणं तु निरवधि-काभावत्वम् एव ।, तेन ध्वंसप्रागभावयोः न अतिव्याप्तिः ।,

**एतद्घटेति** । यद्भूतले यद्घटस्य यदाकदाचित् संयोगः अस्ति, तत्रापि 'तद्घटो नास्ति'इतिप्रतीतिविषयः तद्घटसंसर्गाभावः अत्यन्ताभाव एव; इत्यर्थः । न च 'घट एव अस्तु तत्प्रतियोगी'इति वाच्यम्; संयोगेन-घटत्यन्ताभावस्य घटसंयोगप्रतियोगित्वावश्यंभावात्, अभावप्रतियोगितायाः प्रतियोगिताऽवच्छेदकान्तर्भावेन पर्याप्त्यङ्गीकारात् ।;

**तस्येति** । उक्ताभावस्य इत्यर्थः । निरवधिकाभावत्वाभावात् हेतो; निराकर्तुम्, एतत्=संज्ञाकरणम्; इति सम्बन्धः । उक्त-अभावस्य घटभूतल-संसर्गकालावधिकत्वात्; इति भावः ।

[ २० भ. विषयः– अस्वतन्त्रतत्त्वविभाविगे– अभावत्रैध्ये–त्रैविध्यपरीक्षायाम्–

अ) 'निरवधिकः...कृत्वा'इत्यस्य व्याख्याने– १) 'निर...अभावः'-इत्यस्य अर्थः । २) एतदर्थोपपादकतया 'सदा...कृत्वा'इत्यस्य व्याख्याने–

क) अवतरणम् । ख) दलकृत्ये– '१. सदा अस्ति, २. अभावः' एत्येतयोः कृत्ये ।

आ) 'अथ...भावात्' इत्यस्य व्याख्याने– 'निरवधिकत्वाभावात्'-इत्यस्य अर्थः ।]

**निरवधिकोऽभाव इति** । प्रतियोगिनः एव अप्रामाणिकत्वात्, तत्कृतकालपरिच्छेदरहितः; इत्यर्थः ।

इमम् एव अर्थम् उपपादयति **सदेति** ।

'अभावः' इत्येवोक्तौ प्रागभावप्रध्वंसाभावयोः अतिव्याप्तिः ।,

'सदा अस्ति' इत्येवोक्तौ नित्य-अनादिभावे । अतः उभयोपादानम् ॥'

**निरवधिकत्वाभावादिति** । संसर्गस्य भावित्वे भूतत्वे वा, तदभावस्य प्रागभावप्रध्वंसाभावरूपत्वेन सावधिकत्वस्यैव प्राप्त्या, समस्तस्यापि संसर्गाभावस्य नियमेन निरवधिकत्वाभावात्; इत्यर्थः ।

[ २१ टी. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– त्रैविध्यपरीक्षायाम्–

अ) संसर्गाभावस्य चतुर्थत्वनिरासः ।

आ) मतान्तरनिरासार्थम्– १) तन्मतान्तरानुवादे– क) अभावद्वैविध्यमतानुवादः । ख) अभावचातुर्विध्यमतानुवादः । २) तन्निराकरणे– क) तदुभयमतनिरासे– १. तन्निरासक-मूलस्थपद-प्रदर्शनम्; २. अन्योन्याभावस्य भेदत्वं वस्तुस्वरूपत्वञ्च; ख) आद्यमतान्तरे दूषणान्तरत्वेन प्रागभावप्रध्वंसयोः संसर्गाभावत्वानुपपत्तिश्च ।

इ) अभावनिरूपणपरिसमाप्तिश्च ॥]

---

१. "अत्रापि 'उद्देशेनैव लक्षणलाभः' इतिमन्वानः उक्तमेव लक्षणम् उपपादयति **सदेति** । कालत्रयवृत्तिरभावः सदाभावः इत्यर्थः ।" इति ग्रन्थान्तरे ।

२. 'कालत्रयवृत्तिः' इत्येवोक्तौ

३. अयं विषयः ग्रन्थान्तरे नास्ति।

तर्हि उदाहृतः चतुर्थः स्यात्; इति चेत्; न, तस्यापि यथा-सम्भवं प्रागभावादिषु अन्तर्भावात् ।

एके[1] ब्रुवते 'संसर्गाभावः अन्योन्याभावश्च इति द्विविधः एव अभावः' इति । अन्ये[2] तु[3] 'प्राक्प्रध्वंसात्यन्ताभावात्मा चतुर्विधः' इति ॥ तदुभयं निराकर्तुम् 'इष्यते' इत्युक्तम् ॥

अन्योन्याभावो हि भेद एव । 'स च स्वरूपम् एव' इति अन्यत्र उपपादितम् ॥ कार्यकारणयोः संसर्गस्य अन्यत्र निराकृतत्वेन, प्रागभावप्रध्वंसाभावयोः संसर्गाभावत्वानुपपत्तेश्च ॥ इति ॥

[ २१ स. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये–त्रैविध्यपरीक्षायाम्–

अ) 'तर्हि..अन्तर्भावात्' इत्यस्य व्याख्याने– १) 'यथासम्भवं..अन्तर्भावात्' इत्यस्य व्याख्याने– क) भावः । ख) अश्वे गोत्वसंसर्गनिषेधस्य सदाऽभावान्तर्भावः ।

आ) 'एके...अनुपपत्तेश्च' इत्यस्य व्याख्याने– १) 'उभयम्' इत्यस्य अभिप्रायः । २) 'अन्योन्याभावो हि...उपपादितम्' इत्यस्य व्याख्याने– क) अन्योन्याभावो हि...भेद एव' इत्यस्य कृत्यम् । ख) 'स च...उपपादितम्' इत्यस्य व्याख्याने– १. पूर्ववाक्यस्य प्रकृतानुपयुक्तत्वनिवारकतया अवतरणम्; २. अभिप्रायः; ३. भेदे अभावत्वाभावत्वसाधकधर्मिस्वरूपत्वस्य प्रतिबन्दिशङ्का, तन्निरसनञ्च; ४ 'अन्यत्र' पदार्थः । ३) 'कार्य-...अनुपपत्तेश्च' इत्यस्य व्याख्याने– क) आद्यमतदूषणान्तरत्वेन अवतरणम् । ख) 'अन्यत्र, निरस्तत्वेन' इतिपदयोः अर्थौ च ॥ ]

**यथासम्भवमिति** । घटानयनात्प्राक् संसर्गप्रागभावः, तदपनयनानन्तरम् संसर्गध्वंसः, एवं पुनः आनयनापनयनयोः संसर्गान्तरप्रागभाव-

---

१. भाषापरिच्छेदः (कारिकावली) श्लो. १२ द्रष्टव्यः ।

२. वि.टि. तथा का.टि. अनुसारेण 'अपरे तु; इति पाठः ।

३. तर्कसङ्ग्रहे अन्नम्भट्टः ।

प्रध्वंसौ; इति उत्पादविनाशशील: सामयिक: अभाव:; इति भाव: ।

ननु 'अश्वे गोत्वं कदाऽपि नास्ति' इत्यादौ प्रतियमान: गोत्वाभाव: चतुर्थ: स्यात्; निरवधिकत्वेन तस्य प्रागभावाद्यनन्तर्भावात्, प्रामाणिकप्रतियोगिकत्वेन सदाऽभावानन्तर्भावाच्च; इति चेत्; **अत्र ब्रूमः** — 'अश्वे-गोत्व-संसर्ग'स्यैव तत्र निषेध्यत्वेन, तस्य च अप्रामाणिकतया तदभावस्य सदाऽभावान्तर्भावात् ।, न च 'तत्र अश्व: गोत्वाभावाधिकरणतया एव प्रतीयते, न तु निषेध्यसंसर्गाधिकरणत्वेन;' इति वाच्यम्; तथा सति अप्रसक्तप्रतिषेधत्वापातेन, निषेध्यसंसर्गनिरूपकत्वेनैव अश्वप्रतीते: अङ्गीकार्यत्वात् । किञ्च " 'गोत्वं नास्ति'इति वाक्यम् अयोग्यम्, 'अश्व'पदसमभिव्याहृतं तु योग्यम्''इति सर्वसिद्धम्; तत्र यदि 'अश्व'पदम् अभावान्वितं स्यात् तर्हि सुतराम् अयोग्यम्, गोत्वान्विते तु विशिष्टाभावसम्पादकतया भवति योग्यम्; इति संसर्गस्यैव निषेध: आवश्यक: ।, 'संसर्गावच्छिन्नप्रतियोगिकोऽभाव: संसर्गाभाव:'इतिवदद्भि: अपि संसर्गनिषेध: अङ्गीक्रियते एव । इति ॥

**उभयमिति** । यद्यपि मतद्वयेऽपि अभावचतुष्टयसाम्यम्; तथापि वैशेषिकाभिमतं साक्षादभावविभाजकोपाधिम् अक्षपादपक्षकक्षीकृतं तादृशोपाधिचतुष्टयम् इत्यभिप्रेत्य 'उभयम्'इत्युक्तम्; इति ध्येयम् ।

ननु अस्तु अन्योन्याभावस्य भेदत्वम्, तथापि अभावत्वं किं न स्यात्? इत्यत आह **स चेति** । तथाच 'अन्योन्याभाव: न अभाव: धर्मिस्वरूपत्वात् घटवत्'इत्युक्तं भवति ।;

"ननु अस्तु धर्मिस्वरूपत्वम्, तथापि अभावत्वं किं न स्यात्?

१. नोत्पाद २. गोत्वाधिकरणतया

अन्यथा प्रागभावोऽपि न अभावः स्यात्, घटप्रध्वंसप्रागभावस्य अपि वस्तुस्वरूपत्वात् ।, न च 'प्रागभावस्य वस्तुस्वरूपत्वेऽपि अभावत्वं सम्भवति, प्रागभावविशेषस्य धर्मिस्वरूपत्वेऽपि प्रागभावत्वावच्छिन्न-प्रागभावानां तत्त्वाभावात्'इति वाच्यम्, तथात्वे अन्योन्याभाव-विशेषस्य धर्मिस्वरूपत्वेऽपि अन्योन्याभावत्वावच्छिन्नानां तत्त्वाभावेन तस्यापि अभावत्वापातात्, 'शशविषाणं घटो न'इतिप्रतीयमानस्य अन्योन्या-भावस्य शशविषाणस्यैव अभावेन धर्मिस्वरूपत्वापत्तेः ।''इति चेत्; न, शशविषाणस्यैव अभावेन तत्र अन्योन्याभावस्यैव अनभ्युपगमात् । अत एव उक्तं सुधायाम्– 'नष्टभेदाभेदे विभागायोगात्'इति ॥ तथाच अन्योन्या-भावत्वावच्छिन्नस्य इव प्रागभावत्वावच्छिन्नस्य धर्मिस्वरूपत्वाभावात् न प्रति-बन्दी; इति भावः ।;

**अन्यत्रेति** । 'भावाभावस्वरूपत्वात्'इत्यादिना तत्त्वविवेके[३] इत्यर्थः ।

आद्यमते दोषान्तरमाह **कार्येति** ।;

अन्यत्र= तत्त्वविवेके[४] 'कार्यकारणयोश्चैव'इत्यादिना इत्यर्थः ॥ **निरस्त-त्वेनेति** । सति हि उपादानोपादेययोः संसर्गे, तत्संसर्गप्रतियोगिकत्वात् तत्संसर्गावच्छिन्नप्रतियोगिकत्वाद्वा प्रागभावप्रध्वंसाभावयोः संसर्गाभावत्वं स्यात्; स एव निरस्तः; इत्यर्थः ॥

[ २१ **के.** विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– त्रैविध्यपरीक्षायाम्–

अ) 'तर्हि...अन्तर्भावात्'इत्यस्य व्याख्याने– १) चातुर्विध्यशङ्कात्वेन 'तर्हि...चेत्'इत्यस्य अवतरणम् । २) तच्छङ्कानिवारकतया– 'न..अन्तर्भा-वात्'इत्यस्य व्याख्याने– क) तन्निषेधहेतुत्वेन अवतरणम् । ख) 'तस्य, यथा-सम्भवं'पदयोः अर्थौ । ग) आशयश्च ।

---

३. श्लो. ३. ४. श्लो. ११

आ) 'तदुभयं...अनुपपत्तेश्च'इत्यस्य व्याख्याने- १) अन्योन्याभावो हि...उपपादितं'इत्यस्य व्याख्याने 'अन्यत्र'पदस्य अर्थः, भावश्च । २) 'कार्य ...अनुपपत्तेश्च'इत्यस्य व्याख्याने- क) 'कार्यकारण, संसर्ग'पदार्थाः । ख) भावश्च ॥ ]

तर्हि संसर्गाभावविशेषात्यन्ताभावस्य भवदभ्युपेत-अभावत्रिकान्तर्भावासम्भवात्, तम् आदाय चातुर्विध्ये प्रसङ्गः; इत्याशङ्कते **तर्हीति** ।

कुतो न? इत्यत आह **तस्यापीति** ।;

अत्यन्ताभावत्वेन अभिमतस्य संसर्गाभावस्य; इत्यर्थः ।,

**यथासम्भवमिति** । यदि एतद्भूतले एतद्घटसंसर्गः उत्तरत्र भावी, तत्र 'नास्ति'इतिप्रतीतेः संयोगप्रागभावो विषयः; यदि पूर्वं जातः, तदा तद्ध्वंसः; यदि च कदाऽपि न तदा अत्यन्ताभावः; इति यथासम्भवम्; इत्यर्थः ।

उक्तरीत्या प्रागभावप्रध्वंसाभावसदाऽभावेऽपु अन्तर्भावात् न संसर्गाभावस्य चतुर्थत्वम्; इत्याशयः ॥

**अन्यत्रेति** । 'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।'इत्यादिना तत्त्वविवेकादौ; इत्यर्थः । तस्मात् न तम् आदाय द्वैविध्यं चातुर्विध्यं वा युक्तम्; इति भावः ॥

**कार्यकारणयोरिति** । उपादानोपादेययोः; इत्यर्थः ॥ **संसर्गस्येति** । समवायरूपस्य; इत्यर्थः ॥ सति हि उपादानोपादेययोः संसर्गे, तत्संसर्गप्रतियोगिकत्वाद्वा तत्संसर्गावच्छिन्नप्रतियोगिकत्वाद्वा प्रागभावप्रध्वंसयोः संसर्गाभावत्वं वाच्यम्; उपादानोपादेययोरभेदे तत्संसर्गस्यैवाभावे तु, न तयोः संसर्गाभावत्वम; इति भावः ॥

[ २१ वि. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– त्रैविध्यपरीक्षायाम्–

अ) 'तर्हि...अन्तर्भावात्'इत्यस्य व्याख्याने– १)शङ्कात्वेन 'तर्हि ...चेत्'इत्यस्य अवतरणम्, पदार्थश्च । २) समाधानत्वेन 'न तस्यापि... अन्तर्भावात्'इत्यस्य व्याख्याने– क) पदार्थः । ख) भावश्च ।

आ) 'एके...अनुपपत्तेश्च'इत्यस्य व्याख्याने– १)'इष्यते'पदवैयर्थ्य-शङ्कात्वेन 'एके...चतुर्विध इति'इत्यस्य व्याख्याने– क) अवतरणम् । ख) मतान्तरोक्तित्वेन अपरे...चतुर्विध इति'इत्यस्य व्याख्याने– १. अवतरणम् २. विग्रहार्थौ; ३. अन्वयश्च । २) तच्छङ्कानिरासकत्वेन 'तदुभयं... अनुपपत्तेश्च'इत्यस्य व्याख्याने– क) 'तदुभयं...इत्युक्तम्'इत्यस्य अर्थः । ख) तन्निराकरणप्रकारोक्तित्वेन 'अन्योन्याभावो हि...अनुपपत्तेश्च'इत्यस्य व्याख्याने– १. अवतरणम्; २. 'अन्योन्याभावो हि...उपपादितम्'इत्यस्य-अर्थः, भावश्च; ३. 'कार्य...अनुपपत्तेश्च'इत्यस्य व्याख्याने– क. दूषणा-न्तरत्वेन अवतरणम्, ख. अर्थश्च ।

इ) अभावनिरूपणपरिसमाप्तिः ॥ ]

**शङ्कते तर्हीति** । उदाहृतः– संसर्गप्रतियोगिकाभावः; इत्यर्थः ।

**तस्यापीति** । संसर्गप्रतियोगिकाभावस्य, अपि; यथासम्भवम्= सम्भवम् अनतिक्रम्य एव – सम्भवानुसारेण इति यावत्; 'आदि'पदेन प्रध्वंसात्य-न्ताभावौ गृह्येते ॥ यद्भूतलं घटेन न संयुज्यते तत्र घटसंसर्गस्य प्रागभावः, यद्भूतलं घटेन वियुज्यते तत्र घटसंसर्गस्य प्रध्वंसः, यद्भूतलं घटेन काल-त्रयेऽपि न संयुज्यते तत्र तदुभयसंसर्गस्य अप्रामाणिकस्य अत्यन्ताभावः; इति न उदाहृताभावः चतुर्थः; इति भावः ॥

"'इष्यते'इतिपदं व्यर्थम्" इत्याशङ्क्य अवतारयति **एकेति** ॥ मता-न्तरमाह अपरेत्विति । प्रागभावादिः, आत्मा=स्वरूपम्, यस्य; सः अभावः चतुर्विधः; इति । 'ब्रुवते'इति-अनुवृत्तेन अन्वयः । ;

**तदुभयमिति** । तन्मतद्वयं निराकर्तुम् प्रामाणिकैः 'इष्यते'इत्युक्तम्; इत्यर्थः ।

तन्निराकरणप्रकारम् आह **अन्योन्याभावो हीति** ।;

हि यस्मात्, अन्योन्याभावः; भेदः, एव, भवति; स च = भेदः, धर्मिस्वरूपम्, एव; इति, अन्यत्र= ग्रन्थान्तरे, समर्थितम्; इत्यर्थः । अन्योन्याभावस्य स्वाधारभूततत्त्वरूपत्वेन प्रागभावादिवत् पृथक्त्वरूपत्वाभावात्; उक्तविभागः न युक्तः; इति भावः ।,

दूषणान्तरम् आह **कार्यकारणयोरिति** ॥ उपादानोपादेययोः संसर्गस्य, अन्यत्र= ग्रन्थान्तरे, निराकृतत्वेन, उपादेय-घटादिप्रागभावप्रध्वंसयोः उपादानोपादेयसंसर्गाभावत्वायोगाच्च; इत्यर्थः ॥

अभावनिरूपणपरिसमाप्तिपरः 'इति'शब्दः ॥

[ २१ मु. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– त्रैविध्यपरीक्षायाम्–

अ) 'कार्य...अनुपपत्तेश्च'इत्यस्य व्याख्याने– १) आद्यमतदूषणान्तरत्वेन अवतरणम् । २) पदार्थः । ३) भावः । ४) अत्यन्ताभावाग्रहे निमित्तम् ॥ ]

आद्यमते दूषणान्तरम् आह **कार्यकारणयोरिति** ।

उपादानोपादेययोः; इत्यर्थः ।, भेदव्याप्तसम्बन्धविशेषस्य ।, अन्यत्र = तत्त्वविवेकादौ ।,

ततश्च संसर्गावच्छिन्नप्रतियोगिकात्यन्ताभावस्य तन्तुषु असम्भवेन, प्रागभावप्रध्वंसयोः संसर्गाभावत्वानुपपत्तेः; इति भावः ।

अत्यन्ताभावविशेषस्य संसर्गाभावत्वे, सर्वस्यापि अत्यन्ताभावत्वानुपपत्तेः अभावः; इत्यभिप्रायेण अत्यन्ताभावाग्रहः ॥

[ २१ का. विषयः– अस्वतन्त्रतत्त्वविभागे– अभावत्रैविध्ये– त्रैविध्यपरीक्षायाम्–

अ) 'तर्हि....अन्तर्भावात्'इत्यस्य व्याख्याने– १) त्रैविध्यभङ्गशङ्कात्वेन 'तर्हि...चेन्'इत्यस्य अवतरणम्, पदार्थः, भावश्च । २) तच्छङ्कानिवारकत्वेन– 'न...अन्तर्भावात्'इत्यस्य व्याख्याने– क) 'यथासम्भवम्'इत्यस्य व्याख्याने– १. भावः; २. सप्रयोजनः घटसंसर्गप्रागभावादेरपि घटप्रतियोगिकत्वाभ्युपगमः; ३. सप्रयोजनः ('घटोनास्ति'इत्यादिप्रतीतेः) प्रागभावत्वादिना–तत्प्रतियोगिकत्वानभ्युपगमः ४. सप्रयोजनम् कदाऽपि घटसंसर्गशून्ये-'घटो नास्ति'इत्यभावस्य द्वेधा-गतिदर्शने– क. एतद्देशघटसंसर्गात्यन्ताभावत्वम्; ख. तद्देशारोऽपितघटात्यन्ताभावत्वम्; ५. सप्रयोजनम् अभावस्य प्रतियोग्यारोपगतप्रधानेनापि साकं विरोधप्रदर्शनञ्च ।

आ) सप्रयोजनम् 'इष्यते'इति–मूलावतारकत्वेन 'एके...अनुपपत्तेश्च' इत्यस्य व्याख्याने– १) तदुपयुक्तविषयोक्तितया 'एके...चतुर्विध इति'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'एके...अभाव इति'इत्यस्य व्याख्याने– १. 'एव'कारस्य कृत्यम्, भावश्च; २. ध्वंसप्रागभावयोरपि संसर्गाभावत्वसाधनम् । ग) 'अपरे...चतुर्विध इति'इत्यस्य व्याख्याने– ध्वंसप्रागभावयोः संसर्गाभावात् भिन्नत्वस्थापनम् । २) उक्तमतद्वयनिरासकतया 'तदुभयं...अनुपपत्तेश्च'इत्यस्य व्याख्याने– क) अन्योन्याभावस्य पार्थक्यदूषकतया 'अन्योन्या ...उपपादितम्'इत्यस्य व्याख्याने– १. अवतरणम्; २. 'भेद एव'इत्यस्य प्रकारद्वयेन कृत्यम् । ख) प्रथममते दोषान्तरत्वेन 'कार्य...अनुपपत्तेश्च'इत्यस्य व्याख्याने– १. अवतरणम्; २. अर्थः; ३. भावः; ४. अस्य उपलक्षणत्वञ्च ।

इ) अभावनिरूपणसमाप्तिः ॥ ]

"ननु निरवधिक एव अयम् अभावः ।, न च 'एवम् भूतले घटसत्त्वेऽपि 'घटो नास्ति'इतिप्रतीतिप्रसङ्गः'इति वाच्यम्; तदानीम् अभावसत्त्वेपि तत्सम्बन्धाभावात्, तत्कालान्तकालविशिष्टविशेषणताया एव तत्सम्बन्धत्वात्; अन्यथा तत्र उत्पादविनाशशाली-अभावान्तर कल्पनापास्य

त्रविध्यमङ्गः स्यात्'' इत्याशयेन शङ्कते **तर्हीति** । उदाहृतः= भूतभाविघट-संसर्गवति भूतले 'घटो नास्ति'इतिप्रतीतिसिद्धः अभावः; चतुर्थः, स्यात्; इत्यर्थः । पूर्वोत्तरावधिमत्त्वेन प्रागभावादित्रयानन्तर्भावात्; इति भावः ॥,

**यथासम्भवमिति** । 'अत्र घटो नास्ति'इतिप्रतीतौ; यदि भावी घटसंसर्गः प्रतियोगितया भासते तदा तत्प्रागभावो विषयः, यदि तु भूतः तदा तद्ध्वंसः, यदि तु वर्तमानः तदा तदत्यन्ताभाव एव भासते तत्र वर्तमानकाले घटसंसर्गासत्त्वात्; इति भावः ।,

न च " 'घटो नास्ति'इति साक्षात् घटस्यैव प्रतियोगितया भानात्, तस्य देशान्तरे वर्तमानत्वात्, न प्रागभावादेः विषयत्वसम्भवः"इतिवाच्यम्; घटसंसर्गप्रागभावादेः अपि घटप्रतियोगिकत्वाभ्युपगमात् ।,

न च एवम् 'अत्र घटप्रागभावोऽस्ति'इत्यादिप्रतीत्यापत्तिः; प्राग-भावत्वादिना घटप्रतियोगिकत्वानभ्युपगमात् ।,

स्यादेतत्; "कदापि घटसंसर्गशून्ये 'घटो नास्ति'इतिप्रतीयमानः तावत् न प्रागभावादिः ध्वंसप्रागभावयोः प्रतियोगिसमानदेशत्वनियमात्, न अत्यन्ताभावः अस्य असन्मात्रप्रतियोगिकत्वात् घटादेश्च सत्त्वात्"इति चेत्; अत्र आहुः— 'तत्र घटो नास्ति'इत्यादौ तद्देशघटसंसर्ग एव प्रति-योगितया भासते, तस्य च असत्त्वात् तत्प्रतियोगिक-अत्यन्ताभाव एव तत्र विषयः; इति ।, यदि तु घट एव तद्देशविशिष्ट-अत्यन्ताभावप्रतियोगितया भासते, तदाऽपि तद्देशारोपित एव तथा ।,

न च "एवम् घटवत्यपि 'घटो नास्ति'इतिप्रतीत्यापत्तिः, प्रतियोगिनः असत्त्वात्"इति वाच्यम्; प्रतियोगिना इव प्रतियोग्यारोपप्रधानेनापि अभा-वस्य विरोधात्, घटवति च प्रतियोग्यसत्त्वेऽपि प्रधानभूतघटस्यैव सत्त्वात्, प्रधानत्वादेव च तस्यापि प्रतियोगित्वव्यवहारः; इति दिक् ॥

पक्षान्तरनिरासार्थत्वेन 'इष्यते'इतिमूलम् अवतारयितुम् आह **एक इति** ॥,

प्रागभावादेः अन्यविधत्वव्यवच्छेदाय 'द्विविध एव' इति 'एव'कारः। प्रागभावादित्रयस्यैव संसर्गाभावत्वात्; इति भावः।,

"अथ 'भूतले संयोगेन घटो नास्ति' इतिप्रतीतेः, अत्यन्ताभावस्य संसर्गाभावत्वम् अस्तु; ध्वंसप्रागभावयोस्तु कथम्? 'ध्वस्तः', 'भविष्यति' प्रतीत्योः संसर्गानुल्लेखात्;" इति चेत्; उच्यते– अस्ति तावत् 'इदानीं कपाले समवायेन घटो नास्ति' इति प्रतीतिः; तद्विषयस्तु न अत्यन्ताभावः प्रतियोगिध्वंसप्रागभावाधिकरणे तदनङ्गीकारात्, किन्तु ध्वंसादिरेव तथा। तथाच घटादेः समवायेन ध्वंसादिप्रतियोगित्वे, समवायस्यापि तथात्वम्।, न च 'एवम् समवायस्य अनित्यत्वापत्तिः'; प्रतियोगितावच्छेदकतया प्रतियोगित्वेऽपि साक्षात् अतथात्वेन, दोषाभावात्; इत्याशयः।;

**अपरे त्विति।** एतन्मते ध्वंसप्रागभावयोः न संसर्गाभावत्वम्, ध्वंसादिकालावच्छेदेन कपाले घटात्यन्ताभावस्वीकारेण उक्तप्रतीतिनिर्वाहात्; इति ध्येयम्।

मतद्वयप्रसिद्धम् अन्योन्याभावस्य पार्थक्यम् आदौ दूषयति **अन्योन्येति।** यद्यपि 'अन्योन्याभावः स्वरूपम् एव' इत्येव वक्तुम् उचितम्,

'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्'

इति तत्त्वविवेके तथैव उपपादितत्वात्; तथाऽपि,

'स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहेऽग्रहः'

इत्यनुव्याख्याद्युक्तयुक्तिसूचनार्थम् 'अन्योन्याभावो हि भेद एव' इत्युक्तम्।,

यद्वा 'अन्योन्याभाव' शब्देन घटपटादीनाम् अन्योन्यसंसर्गाभावपरिग्रहनिरासाय तथा उक्तम्; इति अवगन्तव्यम्।

---

१. श्लो. ३.

२. २–२–२०. पृ. ३९४

प्रथमपक्षे दोषान्तरम् आह कार्यकारणयोरिति । उपादानोपादेययोः, अभेदेन, समवायसम्बन्धस्य, तत्त्वविवेकादौ, निरस्तत्वेन; इत्यर्थः 'कपाले समवायेन घटो नास्ति' इतिप्रतीतिश्च असिद्धा एव; इति भावः ॥ इदम् उपलक्षणम्, अत्यन्ताभावस्यापि निष्प्रतियोगिकत्वेन संसर्गाभावत्वानुपपत्तेः; इति द्रष्टव्यम् ॥

इति अभावनिरूपणम् ॥

[ २१ भ. विषयः— अस्वतन्त्रतत्त्वविभागे— अभावत्रैविध्ये— त्रैविध्यपरीक्षायाम्—

अ) 'तर्हि...अन्तर्भावात्' इत्यस्य व्याख्याने— १) संसर्गाभावस्य-चतुर्थत्वशङ्कात्वेन 'तर्हि...चेत्' इत्यस्य अवतरणम् । २) तच्छङ्कानिवारकतया 'न...अन्तर्भावात्' इत्यस्य व्याख्याने— 'यथासम्भवम्' इत्यस्य अर्थः ।

आ) 'अन्योन्याभावो हि ... अनुपपत्तेश्च' इत्यस्य व्याख्याने— १) अन्योन्याभावस्य-पार्थक्यनिरासकतया 'अन्यो...उपपादितम्' इत्यस्य व्याख्याने— क) अवतरणम् । ख) 'स च...उपपादितम्' इत्यस्य भावः । २) प्रागभावप्रध्वंसयो-संसर्गाभावत्वनिरासकतया 'कार्य...अनुपपत्तेश्च' इत्यस्य व्याख्याने— क) अवतरणम् । ख) तन्मतसिद्धान्तः । ग) तस्य च सकारणं सप्रमाणञ्च निरसनम् । घ) अत्यन्ताभावस्य संसर्गाभावत्वाङ्गीकारश्च ॥ ]

"ननु यत्किञ्चिल्लक्षणाभावमात्रेण स्पष्टदृष्टवस्त्वपलापो न युज्यते, घटस्य कम्बुग्रीवादिमत्त्वाभावेन तदभावप्रसङ्गात्; किन्नाम तस्यापि पृथक्परिगणनम् एव युक्तम्; तत् कुतः निरवधिकत्वाभावेन संसर्गाभावो निराक्रियते ? एतावत्तु स्यात् यत् अत्यन्ताभावात् बहिर्भावमात्रम् ।, तथाच अयं चतुर्थः अभावः स्यात्" इति शङ्कते उदाहृत इति ।

यथासम्भवमिति । संसर्गस्य भावित्वे तदभावस्य प्रागभावे, भूतत्वे तदभावस्य प्रध्वंसे, कदाऽप्यसत्त्वेऽपि अत्यन्ताभावे अन्तर्भावात्; इत्यर्थः ॥

मनद्वयेऽपि अन्योन्याभावस्य पृथक् परिगणितत्वात्, लाघवेन-उभय-दूषणार्थम् अन्योन्याभावस्य पार्थक्यं प्रथमं निराकरोति **अन्योन्याभाव इति**।;

**स च स्वरूपमिति**। यथा प्रागभावादीनां भूतलादिभ्यो भिन्नत्वम्, न तथा अन्योन्याभावस्य धर्मिभिन्नत्वम्, किन्तु तत्स्वरूपत्वम् एव।, अतः न अस्य पृथक् परिगणनम् युक्तम्; इति भावः।

इदानीम् 'प्राक्प्रध्वंसात्यन्ताभावानां संसर्गाभावत्वम्' इति यत् अभावद्वैविध्यवादिनाम् अभिप्रेतम्, तत् निराकरोति **कार्यकारणयोरिति**।;

उपादेयप्रागभावप्रध्वंसयोः उपादानगतत्वात्; उपादाने यः उपादेयसंसर्गः समवायरूपः तस्य भावित्वे तदानीन्तनः अभावः प्रागभावः, भूतत्वे तदानीन्तनः अभावः प्रध्वंसाभावः; इति तदीयः सिद्धान्तः।, इदञ्च सति कार्यकारणयोः समवाये उपपन्नं स्यात्; स एव अप्रामाणिकः, 'समवायाभ्युपगमाच्च'[1] इत्यादिना निराकृतत्वात्।; अतः संसर्गप्रतियोगिकाभावत्वं प्रागभावप्रध्वंसाभावयोः न उपपद्यते; इति भावः।,

अत्यन्ताभावस्य तु संसर्गप्रतियोगिकाभावत्वम् अनुमतम् एव, इति न दूषितम्; इति ध्येयम्।, प्रतियोग्यप्रामाणिकत्वस्य अत्यन्ताभावे भूषणत्वात्॥

॥ इति अभावनिरूपणम् ॥

१. ब्र.सू.२–२–६–१३

[ २२ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे–

अ) 'चेतना...मतः'इतिमूलस्य अवतरणम् ।

आ) पदार्थे– १) 'अपि'पदार्थः । २) 'चेतनाचेतन'पदार्थे– क) विग्रहार्थौ । ख) लक्षणानुसारेण स्वतन्त्र अभाव-तत्त्वेष्वपि चेतनाचेतनत्वयोः ज्ञातव्यत्वम् ।

इ) विशेषार्थे– १) चेतनस्य पूर्वोद्देशे निमित्तम् । २) 'मतः'इति-पदस्य व्याख्याने– क) कृत्यम् । ख) तत्प्रयोजनस्पष्टीकरणस्थलप्रदर्शनम् । ३) चेतनादिविभागस्य नित्यादिविभागात् आदौ उदाहरणे निमित्तम् ॥ ]

**भावं विभज्य दर्शयति 'चेतन'इति ॥**

[ ५ त. विषयः– भावद्वैविध्यम् । ]

# चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥२॥

**न केवलम् अभावो भेदवान्, किन्तु भावोऽपि; इति "अपि" शब्दः ।**

**'चेतयते'[1] इति चेतनः । अनेवंविधः अचेतनः ॥ तेन विष्णोः चेतनत्वम् अभावस्य अचेतनत्वञ्च ज्ञातव्यम् ॥**

**सर्वम् अचेतनम् चेतनार्थम्; इति चेतनस्य प्राधान्यात् पूर्वम् उद्देशः ।**

**" 'मृदब्रवीत्'[2] इत्यादिवचनात् सर्वं चेतनम् एव" इतिमतनिरासाय 'मतः' इत्युक्तम् । तच्च अभिमान्यधिकरणे निरस्तम् ।**

**चेतनादिविभागस्य नित्यादिविभागात् अभ्यर्हितत्वात्, स एव आदौ उदाहृतः ॥**

---

१. वि., मु., का. टिप्पणीषु 'चेतयत इति'इति प्रतीकम् । स. टिप्पण्यां 'चेतयतीति'इति । के. भ. टिप्पण्योश्च ग्रन्थभेदेन उभयमपि ।

२. श. ब्रा. ६–१–३

[ २२ स. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे–

अ) 'चेतनाचेतनत्वेन'इतितत्त्वसङ्ख्यानस्थपदस्य अर्थः ।

आ) पदानां सामान्यार्थे 'न..ज्ञातव्यम्'इत्यस्य व्याख्याने– १) 'न.. शब्दः'इत्यस्य व्याख्याने– क) 'अपि'पदस्य 'विभागसामान्यसमुच्चायकत्वात् अवैयर्थ्यम्'इत्युक्तिपरतया– १. अवतरणम्; 'शब्दः'इत्यतः परं शेषः । ख) 'चेतयतीति...ज्ञातव्यम्'इत्यस्य व्याख्याने– १. 'विष्णोः चेतनत्व'ा-नुक्तिशङ्कापरिहारकतया अवतरणम्; २. 'चेतयति'इतिरूपे प्रत्ययकथनम्; ३. 'तेन'पदार्थः ।

इ) विशेषार्थे– 'सर्वमचेतनम्...उदाहृतः'इत्यस्य व्याख्याने– १) 'मतः'पदकृत्ये 'अभिमान्यधिकरणे'इत्यस्य पूर्वोत्तरपक्षार्थसहितः अर्थः, भावश्च । २) 'चेतनादि...उदाहृतः'इत्यस्य व्याख्याने– क) नित्यादिविभागापेक्षया चेतनादिविभागप्राथम्योक्तितया अवतरणम् । ख) 'अभ्यर्हितत्वात्'इत्यस्य अर्थः । ग) 'आदौ'इत्यस्य नियामककथनरूपो भावः । उक्तनियामकस्य च नित्यादिविभागापेक्षया चेतनादिविभागवृत्तित्वे निमित्तम् ॥ ]

'चेतनाचेतनत्वेन'इतिमूले चेतनाचेतनत्वाभ्यां व्यावर्तकधर्माभ्याम् उपलक्षितः इत्यर्थः ॥

ननु 'भावोऽपि'इति'अपि'शब्दो व्यर्थः, अभावत्रैविध्यस्य उक्तत्वेन तत्समुच्चायकत्वानुपपत्तेः; इत्यतः विभागसामान्यसमुच्चयार्थः'इत्याह **न केवल-मिति ॥ अपिशब्द इति** । 'विभागसामान्यसमुच्चायकः'इति शेषः ।

''ननु 'एवं सति विष्णोः चेतनत्वं न स्यात्,

'प्राणी तु चेतनो जन्मी जन्तुर्जन्यशरीरिणः'

इति जीवनामकत्वेन उक्तत्वात्;''इत्यत आह **चेतयतीति** । 'ल्युट्प्रत्यये रूपमेतत् ॥ **तेनेति** । संज्ञानिरुक्तिलब्धलक्षणसत्त्वेन इत्यर्थः ॥

---

१. अमरकोषः १–४–३०

**अभिमान्यधिकरण इति** । तत्र हि "मृदाद्यचेतनानां वचनादिकर्तृत्वाभिधायकस्य 'मृदब्रवीत्'[2]इत्यादिवेदभागस्य 'मृत् न वक्त्री अचेतनत्वात्' इत्यादियुक्तिविरोधात् अप्रामाण्ये प्राप्ते; मृदादिशब्दानां तदभिमानिषु एव मुख्यवृत्तेः तेषां वचनादिकर्तृत्वसम्भवेन न एतादृशवेदभागस्य अप्रामाण्यम्" इति बादरायणेन '[3]अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'इतिसूत्रेण प्रतिपादितम्; इत्यर्थः । यदि च सर्वं चेतनं स्यात्, तदा अयं पूर्वपक्षः सिद्धान्तश्च अनुपपन्नः स्यात्; अतः सर्वचैतन्यमतम् अभिमान्यधिकरणे सूत्रकृता निरस्तम्; इति भावः ।

"ननु अत्र 'भावो द्विविधः नित्योऽनित्यश्च, नित्योऽपि द्विविधः चेतनोऽचेतनश्च'इतिविभागम् अकृत्वा, 'भावो द्विविधः चेतनोऽचेतनश्च'-इत्यादिविभागकरणे किं निमित्तम्?"इत्यत आह **चेतनादिविभागस्येति** ॥ **अभ्यर्हितत्वादिति** । श्रीतत्त्वादीनाम् अवश्यज्ञेयानां चेतनादिविभागस्थत्वेन अभ्यर्हितत्वात्; इत्यर्थः ॥ **आदाविति** । '[4]अभ्यर्हितं पूर्वम्'इतिस्मरणात्; इति भावः । यद्यपि भावाभावविभागादपि अयम् अभ्यर्हितः, तथापि भावाभावविभागप्राथम्यं बहुवादिविप्रतिपत्तिसद्भावात् प्राक् उक्तम्; इति ध्येयम् ॥

[ २२ के. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे–

अ) 'न...ज्ञातव्यम्'इत्यस्य व्याख्याने– १) 'अपि'पदवैयर्थ्यनिरासकतया 'न...शब्दः'इत्यस्य अवतरणम् । २) 'चेतयति...ज्ञातव्यम्'इत्यस्य व्याख्याने– क) विष्णुभावयोः चेतनाचेतनत्वयोः अभावशङ्कानिरासक-आशयकतया अवतरणम् । ख) 'चेतयते'इत्यस्य– अर्थः, रूपसिद्धिविचारे धातुगणयोः प्रदर्शनञ्च । ग) 'तेन'पदार्थः ।

---

२. श. ब्रा. ६–१–३. ३. ब्र.सू. २–१–३–६.
४. वार्तिकपाठः. २२०. सि.कौ.सं १३०२.

आ) 'सर्वमचेतनम्...उदाहृत:'इत्यस्य व्याख्याने– १) चेतनाचेतनयो: क्रमनियामकोक्तितया 'सर्वम्...उद्देश:'इत्यस्य व्याख्याने– क) अवतरणम् । ख) अर्थश्च । २) 'मृद...निरस्तम्'इत्यस्य व्याख्याने– क) 'आदि'-पदसङ्ग्राह्यप्रदर्शनम् । ख) 'अभिमान्यधिकरणे'इत्यस्य अर्थ:, भावश्च । ३) 'चेतनादि...उदाहृत:'इत्यस्य व्याख्याने– क) चेतनादिविभागप्राथम्ये विशेषोक्तितया अवतरणम् । ख) 'अभ्यर्हितत्वात्'इत्यस्य व्याख्याने– १, भाव:; २. भावविभागस्य चेतनादिविभागापेक्षया प्राथम्ये निमित्तम् ॥ ]

"ननु 'भावोऽपि'इति'अपि'शब्द: अनर्थक: ।, न च 'अभावभेदसमुच्चयार्थकत्वात् न अनर्थकम्'इति वाच्यम्, अभावस्य त्रैविध्याभिधानेन तेन सह समुच्चयासम्भवात् ।"इत्यत: 'अवान्तरविधायकत्वमात्रे भावाभावयो: समुच्चयार्थ: 'अपि'शब्द:"इत्याह **न केवलमिति** ।

"ननु परतन्त्रावान्तरभेदस्य चेतनाचेतनौ यदि अवान्तरभेदौ स्याताम्, तर्हि विष्णो: चेतनत्वम् अभावस्य अचेतनत्वञ्च न स्यात्; परतन्त्रावान्तरभेदभावभेदत्वेन चेतनत्वे परतन्त्रत्वस्य, अभावस्य [1]अचेतनत्वे तस्य भावावान्तरभेदत्वेन [2]अभावस्य भावत्वस्य च, प्रसङ्गात् ।, न च - 'भावाभावयो: परतन्त्रप्रभेदत्वेऽपि विभागस्य 'परतन्त्रं द्विविधमेव'इत्येवंपरत्वेन विष्णो: भावत्वस्य व्युत्पादितत्वात्, तन्न्यायेनैव चेतनाचेतनयो: भावान्तरभेदत्वेऽपि विभागस्य 'भाव: चेतनत्वादिना द्विविध एव; न पुन: अनेकविध एव, नापि त्रिविध एव'इत्येवंपरत्वेन, 'भाव एव चेतनत्वादिना द्विविध:'इत्येवंपरत्वाभावेन; विष्ण्वादे: भावत्वादेरिव चेतनत्वादेरपि उपपत्ति: '-इति वाच्यम्; भावलक्षणाऽऽक्रान्तत्वेन विष्णो: भावत्वोपपत्तौ अपि,

'प्राणी तु चेतनो जन्मी जन्तुर्जन्यशरीरिण: ।'

[3]इत्यभिधानसिद्धचेतनत्वस्य विष्णो: अभावेन चेतनत्वादे: असम्भवेन, विभागस्य अन्ययोगव्यवच्छेदकत्वाभावेऽपि लक्षणानुपपत्त्या एव विष्ण्वभावयो:

१. अचेतनत्वेन २. अभावस्य च भावत्वस्य च ३. अमरकोष:

अयोगात् ।'' इत्यतः '' 'चेतन' शब्दस्य क्लृप्त-अवयवशक्त्या एव जीवे प्रयोगप्रत्यययोः उपपत्तौ अक्लृप्त-समुदायशक्तेः अकल्पनीयत्वेन, 'चेतन'-शब्दस्य रूढ्या जीवपरत्वाभावेन, जीवत्वस्य चेतनलक्षणत्वासिद्धेः, ज्ञानकर्तृत्व[4]तदभावयोः एव तल्लक्षणत्वेन वाच्यत्वात्, तयोश्च ईश्वरादौ अपि सत्त्वात्, न लक्षणानुपपत्त्याऽपि तयोः चेतनत्वाद्यभावप्रसङ्गः ।'' इत्याशयवान् आह **चेतयत इति चेतन इत्यादिना** ।,

चेतयते= जानाति इत्यर्थः । 'चिति[5] सञ्ज्ञाने' इत्यस्य चौरादिकस्य इदं रूपम् ।,

**तनेति** । संज्ञानिरुक्तिलभ्यलक्षणसत्त्वेन इत्यर्थः ॥

चेतनस्य अचेतनापेक्षया पूर्वनिर्देशे नियामकम् आह **सर्वमचेतनमिति** । अचेतनजातीयम्, चेतनजातीयम्; इत्यर्थः ।

**मृदिति** । 'आदि' पदेन 'आपोऽब्रुवन्'[6], 'ता आप ऐक्षन्त' इत्यादेः सङ्ग्रहः ॥ **अभिमानीति** । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'-[7] इत्यत्र; इत्यर्थः । तत्र मृदादीनां वचनबुद्ध्यादिकर्तृत्वप्रतिपादकवेदभागस्य 'मृत् न वक्त्री जडत्वात्' इत्यनुमानविरोधेन अप्रामाण्ये प्राप्ते, 'मृदादिशब्दानां तदभिमानिपरत्वेन तादृशवेदभागस्य प्रामाण्यम्' इति सिद्धान्तितं भगवता बादरायणेन ।, यदि च सर्वं चेतनम्, तदा अयं पूर्वः पक्षः सिद्धान्तश्च युक्तः स्यात्; अतः सर्वचैतन्यमतं सूत्रकृता निरस्तप्रायम्; इति भावः' ।

''ननु प्रागुक्तरीत्या 'भावोऽपि द्विविधः नित्योऽनित्यश्च, नित्योऽपि द्विविधः । चेतनोऽचेतनश्च' इत्येवं विभागः कुतो न कृतः ?. 'अनित्यस्य अचेतनत्वम् एवं सति न उक्तं स्यात्' इति चेत्, 'तथा सति चेतनस्य

---

३. अमरकोशः १–४–३०    ४. तदभावलक्षणयोरेव तल्लक्षणत्वेन
५. 'चित' इत्यपि क्वचित्  ६. श.ब्रा. ६–१–३.  ७. ब्र.सू. २–१–३–६

नित्यत्वं न उक्तं स्यात्'इति समत्वात्; लक्षणत्वेन तज्ज्ञानं तु उभयत्र तुल्यम्; अतः केन विशेषेण चेतनादिविभागस्य प्राथम्यम्?''इत्यत आह **चेतनादिविभागस्येति** ।। **अभ्यर्हितत्वादिति** । श्रीतत्त्वानां चेतनविभागस्थत्वात्; इति भावः । 'यद्यपि भावाभावविभागादपि अस्य अभ्यर्हितत्वात् प्राथम्यम् उचितम्, तथापि भावविभागप्राथम्यं बहुविप्रतिपत्तिसद्भावात् एव'-इति प्रागेव समर्थितम्; इति ध्येयम् ।।

[ २२ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे–

अ) 'भावं...चेतन इति'इत्यस्य व्याख्याने– १) उत्तरवाक्यावतारकतया अवतरणम् । २) पदार्थश्च ।

आ) 'न...ज्ञातव्यम्'इत्यस्य व्याख्याने– १) भावत्रैविध्यप्रतीतिनिरासार्थक'अपि'पदार्थोक्तितया 'न...शब्दः'इत्यस्य व्याख्याने– क) अवतरणम् । ख) अर्थः । ग) 'अपिशब्दः'पदस्य अर्थश्च । २) चेतयत..,ज्ञातव्यम्'-इत्यस्य व्याख्याने– क) अभिप्रायपूर्वकं 'चेतनलक्षकतया 'चेतयत इति चेतनः'इत्यस्य– अवतरणम्, अर्थः, भावः । ख) अचेतनलक्षकतया 'अनेवंविधोऽचेतनः'इत्यस्य– अवतरणम् विग्रहार्थौ, भावश्च । ग) विण्वभावयोः चेतनत्वाचेतनत्वाभावनिरासोक्तितया 'तेन...ज्ञातव्यम्'इत्यस्य अवतरणम्, पदार्थश्च ।

इ) 'सर्वमचेतनम्...उदाहृतः'इत्यस्य व्याख्याने= १. चेतनस्य प्रथमोद्देशे नियामकोक्तितया 'सर्वमचेतनम्...उद्देशः'इत्यस्य व्याख्याने– अवतरणम्, पदार्थश्च । २) 'मतपद्वैयर्थ्यनिरासकतया 'मृद...निरस्तम्'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'मृद...इत्युक्तम्'इत्यस्य अर्थः । ग) सर्वस्य अचेतनत्वनिरासप्रकारोक्तितया 'तच्च..निरस्तम्'इत्यस्य व्याख्याने– अवतरणम्, अर्थः, भावश्च । ३) नित्यत्वात् भावत्वस्य विभागप्राथम्ये नियामकोक्तितया 'चेतनादि...उदाहृतः'इत्यस्य अवतरणम्, अर्थः, भावश्च ।। ]

उत्तरवाक्यम् अवतारयति **भावं विभज्येति** ।। दर्शयति= कथयति; इत्यर्थः ।।

'चेतनाचेतनत्वेन भावोऽपि'इत्यत्र 'अपि'शब्दस्य 'यथा अभावः त्रिविधः, तथा भावोऽपि'इतिप्रतीतिनिरासाय 'अपि'शब्दार्थम् आह **नेति** ॥ न केवलम् अभावः भेदवान्, किन्तु भावोऽपि भेदवान्; इत्यर्थः। 'अपि' शब्दः= 'अपि'शब्दार्थः; इत्यर्थः।

'कथं भावो भेदवान्?'इतिजिज्ञासायाम्, 'चेतनत्वाचेतनत्वाभ्यां द्विविधः'= "'चेतनः अचेतनश्च'इतिद्वैविध्यरूपभेदवान्"इति वाक्यार्थम् अभिप्रेत्य; 'उद्देशेनैव तयोः लक्षणं लब्धम्'इत्याशयेन प्रथमोद्दिष्टं चेतनं लक्षयति **चेतयत इति**। जानाति इति चेतनः; इत्यर्थः। ज्ञातृत्वं चेतनस्य लक्षणम्; इति भावः॥ अचेतनं लक्षयति **अनेवंविध इति**। एवम्= एतादृशी, ज्ञातृत्वरूपा, विधा= प्रकारः, यस्य असौ, =एवंविधज्ञातृत्वरूप-धर्मवान् इति यावत्, स न भवति इति अनेवंविधः; = अचेतनः; इत्यर्थः। अज्ञातृत्वम् अचेतनस्य लक्षणम्; इति भावः।,

'ननु चेतनाचेतनयोः अस्वतन्त्रविशेषभावप्रभेदत्वेन, तदप्रभेदस्य विष्णोः अभावस्य च क्रमेण सिद्धं चेतनत्वम् अचेतनत्वञ्च न स्याताम्'इत्यत आह **तेनेति**। विष्ण्वभावयोः क्रमेण उक्तचेतनाचेतनलक्षणाऽऽक्रान्तत्वेन; इत्यर्थः। ज्ञातव्यम्= उपपन्नम् इति ज्ञातव्यम्; इत्यर्थः॥

'चेतनस्य प्रथमोद्देशे किं नियामकम्?'इतिजिज्ञासायाम् आह **सर्व-मचेतनमिति**। चेतनार्थम्= चेतनप्रयोजनाय, यद्वा चेतनस्य अर्थः= प्रयोजनम् येन तत् तथा; इति हेतोः, चेतनस्य, प्राधान्यात्= अचेतन-भोक्तृत्वस्वामित्वादिरूपप्राधान्यात्, पूर्वम्, उद्देशः, कृतः; इत्यर्थः।

"'मत'पदं व्यर्थम्"इत्याशङ्क्य अवतारयति **मृदब्रवीदित्यादि-वचनादिति**।;

"'मृदब्रवीत्,[1]' 'आपोऽब्रुवन्', 'तत्तेज ऐक्षत', 'ओषधयः संवदन्ते[2]'

१. श.ब्रा. ६-१-३. २ ऋ.सं. १०-९७-२२.

इत्यादेः वक्तृत्वसन्दर्शनादिप्रतिपादकवाक्यात् सर्ववस्तु, चेतनमेव'' इत्याशङ्का-निरासाय, 'मतः' इत्युक्तम्= 'प्रामाणिकानां सम्मतः' इत्युक्तम्; इत्यर्थः ।,

'सर्वस्य अचेतनत्वम् अनेन कथं निरस्तम्?' इतिजिज्ञासायाम् आह **तच्चेति** । मृदादेः जडस्य चेतनत्वं तु, अभिमान्यधिकरणे= 'अभिमानि-व्यपदेशस्तु विशेषानुगतिभ्याम्'[३] इत्यधिकरणे, निरस्तम्; इत्यर्थः । 'मृदब्रवीत्, इत्यादिश्रुतिषु 'मृत्' आदिशब्दैः 'मृत्'-आदिअभिमानिदेवतानाम् एव अभि-धानात्, ताभिः श्रुतिभिः मृदादेः जडस्य तत्कर्तृत्वाद्यसिद्धेः, सर्वस्य चेतनत्वं निरस्तम्; इति भावः ।

'ननु नित्यत्वानित्यत्वाभ्यां भावविभागकथनसम्भवात्, आदौ चेतनाचेतनतया भावविभागकथने को हेतुः?' इतिजिज्ञासायाम् आह **चेत-नादिविभागस्येति** । 'चेतनोऽचेतनश्च' इतिभावविभागस्य, नित्यादिविभागात् = 'नित्योऽनित्यश्च' इतिभावविभागात्, अभ्यर्हितत्वात्, स एव = चेतना-चेतनभेद एव, आदौ, आचार्यैः, निरूपितः; इत्यर्थः । परतन्त्ररूपभाव-प्रभेदेषु चेतनस्यैव पुरुषार्थभाक्त्वेन, प्रधानज्ञेयतया तत्स्वरूपनिर्णयस्यैव वक्त-व्यत्वेन, चेतनाचेतनविभागस्य नित्यानित्यत्वविभागात् अभ्यर्हितत्वम्; इति भावः ॥

[ २२ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे -

अ) चतुर्विधशङ्कापरिहारकतया 'भावं...चेतनेति' इत्यस्य व्याख्याने– १) अवतरणम् । २) अर्थश्च ।

आ) 'न...ज्ञातव्यम्' इत्यस्य व्याख्याने– १) सप्रयोजन-अध्याहार-सहित-अबाधितार्थोक्तित्वेन 'न..शब्दः' इत्यस्य– क) अवतरणम् । ख) शङ्का-न्तरनिरासपूर्वक-अध्याहारसमर्थनञ्च । २) 'चेतयत...ज्ञातव्यम्' इत्यस्य व्या-ख्याने– क) कर्मभावव्युत्पत्तिभ्याम् अनुपपत्तिप्रसङ्गपूर्वकम् चेतनाचेतनविभाग-

३. ब्र.सू. २–१–३–६.

अयुक्तत्व निरासकतया 'चेतयत इति चेतनः'इत्यस्य व्याख्याने– अवतरणम्, भावश्च । ख) 'अचेतन'पदेऽपि पूर्ववत् अनुपपत्तिप्रसङ्गपूर्वकम् विवक्षितार्थोक्तित्वेन 'अनेवंविधोऽचेतनः'इत्यस्य अवतरणम् । ग) उक्तव्याख्यानेन फलान्तरसिद्ध्युक्तितया 'तेन...ज्ञातव्यम्'इत्यस्य व्याख्याने– अवतरणम्, भावश्च ॥

इ) 'सर्वमचेतनं...उदाहृतः'इत्यस्य व्याख्याने– १) 'चेतनार्थम्'-इत्यस्य अर्थः । २) 'अभ्यर्हितत्वात्'इत्यस्य भावश्च ॥ ]

"ननु 'चेतनाचेतन'इतिमूले भावः विधेयत्वेन प्रतीयते; तदयुक्तम्, प्राप्तत्वेन विधेयत्वानुपपत्तेः ।, न च 'भावः उद्देशः'इति; तस्य 'द्विविधः'-इति संज्ञाग्रहणस्य असङ्गतत्वात् ।, न च वाच्यं " 'द्विविधः'इति विभागः" इति; द्वैविध्यस्य अप्राप्तत्वेन उद्देशायोगात् ।, न च 'विधेयः'इति; 'चेतनाचेतन'इत्यस्य वैयर्थ्यापत्तेः ।;"इतीदं शङ्काजातं परिहरन् अवतारयति **भावमिति** ॥ विभज्य= विभागं विधाय; इत्यर्थः ।, दर्शयति= विशेषोद्देशं करोति; इत्यर्थः ॥

'अपि'शब्दान्तभावशब्दस्य 'द्विविधः'इतिशब्देन अन्वये समुच्चयाभावात्, द्वैविध्यस्य बाधितत्वात्; साध्याहारम् अबाधितम् अर्थम् आह **न केवलमिति** ॥ "ननु 'न केवलम् अस्वतन्त्रं द्विविधम्, किन्तु भावोऽपि द्विविधः'इति अध्याहारं विनैव योजना सम्भवति"इतिचेत्; न, समुच्चयव्यवहितत्वदोषप्रसङ्गात्, समभिव्याहृतत्वेन अभावस्यैव समुच्चयत्वौचित्याच्च, अध्याहारेणैव योजना युक्ता; इति ।

" 'चेत्यते स चेतनः'इतिव्युत्पत्तौ सर्वस्यापि ज्ञेयत्वेन, 'चितिश्चेतनः'इतिव्युत्पत्तौ मानसवृत्तेः अपि चेतनत्वप्रसङ्गेन, चेतनाचेतनविभागः अयुक्तः;"इत्यत आह **चेतयत इति** । ज्ञानकर्तृत्वस्य अन्यत्र सत्त्वेन न उक्तदोषः; इति भावः ।,

पूर्वोक्तव्युत्पत्तिपक्षद्वये 'न चेतनः= अचेतनः'इत्यर्थाङ्गीकारे– आद्ये, सर्वस्मिन्जडे अचेतनत्वासम्भवापत्तेः; द्वितीये,वृत्तौ असम्भवापत्तेः; विवक्षितम् अर्थम् आह **अनेवंविध इति** ।;

'एवं व्याख्यानेन अन्यदपि फलं सिद्धम्'इत्याह **तेनेति** । यदि अन्यत् व्याख्यानं स्यात्, तदा विष्णोः चेतनत्वम् अभावस्य अचेतनत्वं (च) दुर्ज्ञेयं स्यात्; इति भावः ॥

**चेतनार्थमिति** । चेतनोद्देशकम्; इत्यर्थः ।

**अभ्यर्हितत्वादिति** । चेतनाचेतनविभागज्ञानस्य जडजीवभेदविषयकत्वेन, तद्विभागस्य नित्यानित्यविभागात् अभ्यर्हितत्वेन, मोक्षसाधनज्ञानेषु अन्तरङ्गत्वेन आदौ कृतः; इति भावः ॥

[ २२ का. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे–

अ) 'न...ज्ञातव्यम्'इत्यस्य व्याख्याने– १) तत्त्वसङ्ख्याने-प्रतीयमान-समुच्चयासङ्गतिनिरासकतया 'न केवलं...इत्यपिशब्दः'इत्यस्य अर्थश्च । २) सप्रयोजनं स्वतन्त्र-अभाव-साधारण-चेतनाचेतनत्वनिर्वचनपरतया 'चेतयत ...ज्ञातव्यम्'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'चेतयते'इत्यस्य अर्थः । ग) योगाश्रयणप्रयोजनम् । घ) ज्ञातृत्वरूपलक्षणस्य ज्ञानस्वामित्वार्थाश्रयण-प्रयोजनम् । ङ) 'तेन'इत्यस्यअर्थश्च ।

आ) 'सर्वमचेतनम्...उदाहृतः'इत्यस्य व्याख्याने– १) 'चेतनार्थम्' इत्यस्य व्याख्याने– क) विग्रहार्थौ । ख) भावः । ग) प्राधान्यक्रमान्तरा-पेक्षया अस्यैव मुख्यत्वञ्च । २) 'मृदब्रवीत्...निरस्तम्'इत्यस्य व्याख्याने– क) 'मृद...इत्युक्तम्'इत्यस्य भावः । ख) श्रुत्यविरोधोक्तितया 'तच्च...निरस्तम्' इत्यस्य व्याख्याने– १. अवतरणम्; २. भावश्च । ३) 'चेतनादि...उदाहृतः'इत्यस्य व्याख्याने– क) शङ्कितविभागस्पष्टीकरणपूर्वकं तन्निरासकतया अवतरणम् । ख) पदार्थश्च ॥ ]

मूले 'भावोऽपि'इति-अपिशब्दात् 'न केवलम् अभावो द्विविधः, किन्तु भावोऽपि'इतिप्रतीयमानसमुच्चयासङ्गतेः आह **न केवलमिति**। **इत्यपि-शब्द इति**। एकदेशसमुच्चयार्थः 'अपि'शब्दः; इत्यर्थः।

"ननु चेतनाचेतनयोः भावप्रभेदत्वे, स्वतन्त्रस्य चेतनत्वानुपपत्तिः।, न च 'स्वतन्त्रस्य भावत्वाङ्गीकारात् न अनुपपत्तिः'इति वाच्यम्, परतन्त्रभावस्यैव विभाज्यत्वात्[1]; अन्यथा चेतनविभागे दुःखास्पृष्टत्वेन रमामात्रग्रहणानुपपत्तेः।; एवम् अभावस्य अचेतनत्वानुपपत्तिश्च।"इति चेत्; न, " 'परतन्त्रभाव एव एवंविधः'इतिविशेष्यावधारणे[2]विवक्षया दोषाभावात्;"इत्याशयेन स्वतन्त्र-अभाव-साधारणे चेतनाचेतनत्वे निर्वक्ति **चेतयत इति**। जानाति इत्यर्थः॥ यद्यपि रूढ्या चेतनाचेतनपदाभ्यां चित्त्वजडत्वरूपजातिविवक्षाऽपि सम्भवति, तथाऽपि ज्ञातृत्वाज्ञातृत्वरूपव्यावर्तकलक्षणलाभाय योगाश्रयणम्। ज्ञातृत्वञ्च ज्ञानस्वामित्वम्, ज्ञानाश्रयत्वस्य अन्तःकरणसाधारणत्वात्; इत्यवधेयम्।,

**तेनेति**। तादृशचेतनत्वविवक्षणेन इत्यर्थः॥

**चेतनार्थमिति**। चेतनानाम्, अर्थः= प्रयोजनम्, यस्मात्, तत्, तथा; चेतनभोग्यम् इति। भोक्तृभोग्ययोः भोक्तुः प्राधान्यं प्रसिद्धमेव; इति भावः॥ यद्यपि 'अचेतनस्य चेतननिरूपत्वात्, चेतनस्य प्रथमम् उद्देशः' इत्यपि सुवचम्, तथाऽपि उक्तप्राधान्यक्रमस्य मुख्यत्वात् तदेव निमित्तम् उक्तम्।

**मृदब्रवीदिति**। वक्तृत्वस्य ज्ञातृत्वं विना अनुपपत्तेः; इति भावः॥ ननु श्रुतिविरुद्धत्वात् कथम् अत्र सम्मति? अतः प्राह **तच्चेति**। सर्वे-

---

१. 'विभज्यत्वात्'इत्यपि बहुत्र।
२. 'णविवक्षया'इति क्वचित्।

चैतन्यमतं हि निरस्तम् 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति[3] सूत्रे; 'मृत् न वक्त्री जडत्वात्' इतियुक्तिविरुद्धत्वात् वेदस्य अप्रामाण्यम् –इति प्राप्ते; " 'मृत्' इत्यादि: अभिमानिदेवताव्यपदेश एव, तासां च शक्तिविशेषात् अदृश्यत्वम् अभिमन्यमानव्याप्तत्वात् अभिमानित्वञ्च युज्यते" इति सिद्धान्तितत्वात्; इति भावः ।

"ननु 'भावो द्विविधः नित्योऽनित्यश्च, नित्यो द्विविधः चेतनोऽचेतनश्च' इतिविभागः कुतो न कृतः?" इत्यत आह **चेतनादिविभागस्येति** ।। चेतनाचेतनविभागस्य इत्यर्थः ।। **अभ्यर्हितत्वादिति** । उक्तरीत्या चेतनस्य प्राधान्येन, विप्रतिपत्तिसद्भावेन च, अवश्यवेद्यत्वात्; इत्यर्थः ।।

[ २२ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-निरूपणे–
१) 'चेतयत...ज्ञातव्यम्' इत्यस्य चेतनाचेतनयोः उद्देशेनैव-लक्षणलाभोक्तितया अवतरणम् । २) 'मतः' शब्दस्य परीक्षार्थकत्वोक्तितया 'मृद...इत्युक्तम्' इत्यस्य अवतरणम् । ३) नित्यादिविभागात् चेतनादिविभागस्य साम्यशङ्कापूर्वकतन्निरासकतया 'चेतनादि...उदाहृतः' इत्यस्य व्याख्याने– क) अवतरणम् । ख) सोपपत्तिकः अर्थश्च ।। ]

'ज्ञानाधिकरणत्वं चेतनस्य, तदनधिकरणत्वम् अचेतनस्य; लक्षणम्' इति 'चेतनाचेतनत्वेन' इति-उद्देशेनैव लब्धम्; इत्याशयेन आह **चेतयत इतीति** ।।

"विभागपरीक्षार्थं 'प्रमित' पदसमानार्थक 'मतः' शब्दप्रयोगः" इतिभावेन आह **मृदिति** ।

---

३. ब्र.सू. २–१–३–६.

१. 'अभावस्य त्रैविध्येन प्राक् उक्तत्वात्, भावस्य द्विविधत्वेन उच्यमानत्वात् कथं 'भावोऽपि द्विविधः' इति 'अपि' शब्दः?' इत्यत आह **न केवलमिति** । भेदवत्त्वमात्रे भावाभावयोः समुच्चयः, न द्वैविध्ये; इति भावः" इति ग्रन्थान्तरे अधिकम् ।

"ननु भावत्वं नित्यानित्यत्वादिना विभजितुं शक्यम्; तत् किं चेतनत्वादिना एव विभजने निमित्तम्? न च –' एवंसति 'भावस्त्रिविधः नित्यो नित्यानित्योऽनित्यश्चेति, नित्यो द्विविधः चेतनोऽचेतनश्च' इतिविभागः कर्तव्यः; सति च एवम्, अचेतनस्य नित्यानित्यत्वम् अनित्यत्वञ्च न उक्तं स्यात्'–इति वाच्यम्; चेतनत्वादिना विभजनेऽपि चेतनस्य नित्यत्वं न उक्तं स्यात्, इति समम् एव;" इतिशङ्कानिरासाय आह **चेतनादिविभागस्येति**। सर्वस्यापि अचेतनस्य चेतनोद्देश्यकत्वात्[२], अचेतनापेक्षया चेतनस्य प्राधान्यं तावत्; अतः तद्घटितविभागस्यापि नित्यादिविभागापेक्षया प्राधान्यम्। 'अभ्यर्हितं पूर्वम्' इति च नियमात्, तस्यैव आदौ उदाहरणम्; इत्यर्थः॥

२. 'चेतनोद्देश्यकत्वात् चेतनस्य प्राधान्यात्, श्रीतत्त्वादीनाम् अवश्यज्ञेयानां चेतनविभागे एव सत्त्वात् च, नित्यानित्यादिविभागापेक्षया चेतनादिविभागस्यैव अभ्यर्हितत्वम्।' इति ग्रन्थान्तरे।

३. वार्तिकक्र.२२९/सि.कौ.सं. १३०२.

॥ इति भावनिरूपणम् ॥

[ २३ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन निरूपणे–

अ) क्रमनिमित्तपूर्वकं चेतनविभागोक्तितया 'दुःख...चेतनम्'इतितत्त्व-सङ्ख्यानस्य अवतरणम् ।

आ) शब्दार्थे– 'दुःखस्पृष्टतदस्पृष्ट'पदयोरर्थौ ।

इ) विशेषविचारे– १) 'एव'कारस्य कृत्यत्वेन द्विविधविरुद्धमतनिरासे – क) प्रथममतानुवादः । ख) द्वितीयमतानुवादः । ग) 'एवकारस्य एतदुभयमतनिरासार्थकत्वम् । घ) प्रथममतदूषणहेतुः । ङ) द्वितीयमतदूषण-हेतुश्च । २) परमेश्वरस्य दुःखास्पृष्टत्वसाधनम् । ३) दुःखस्पृष्टस्य प्रथम-मुद्देशे निमित्तम् । ]

**यथोद्देशं चेतनविभागम् आह दुःखेति ॥**

[ ६ त. विषयः– चेतनद्वैविध्यम् । ]

## दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ॥२३॥

**कदाचिद्दुःखसम्बद्धम् एव दुःखस्पृष्टम् । कदाऽपि दुःखा-सम्बद्धम् तदस्पृष्टम् ॥**

**'कल्पितत्वात् दुःखादीनां न किञ्चित् दुःखस्पृष्टम्'इत्येके 'ईश्वरातिरिक्तं सर्वमपि दुःखस्पृष्टम् एव'इत्यन्ये ॥ तदुभयनिरासाय एवकारः । आद्यस्य प्रत्यक्षविरुद्धत्वात्, द्वितीयस्य आगमविरुद्धत्वात् ।**

**परमेश्वरस्य दुःखास्पृष्टत्वं स्वातन्त्र्येणैव सिद्धम् ।**

**यद्यपि अनयोः दुःखास्पृष्टं चेतनं प्रधानम्; तथापि अभावस्य भावनिरूप्यत्वात् दुःखस्पृष्टस्य प्रथमम् उद्देशः ।**

[ २३ स. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतननिरूपणे–

अ) चेतनविभागात्पूर्वम्-अचेतनविभागकरणे निमित्तोक्तितया 'यथो...दुःखेति'इत्यस्य व्याख्याने अवतरणम्, भावश्च ।

---

१. के., वि. टिप्पण्योः उद्धरणम् 'कदाचिदपीति'इति ।

आ) 'कदाचित्...तदस्पृष्टम्'इत्यस्य व्याख्याने– १) 'कदाचित्'इत्यस्य कृत्यम्, भावश्च। २) 'कदाऽपि'इत्यस्य कृत्यम्, भावश्च।

इ) 'कल्पित...आगमविरुद्धत्वात्'इत्यस्य व्याख्याने– १) 'एव'-कारव्यवच्छेद्यमतोक्तितया 'कल्पित,..अन्ये'इत्यस्य व्याख्याने– क) अवतरणम्। ख) 'अपि'पदोत्तरं शेषः। ख) 'एव'कारोत्तरं शेषः। घ) 'एके' पदार्थः। २) 'आगमविरुद्धत्वात्'इत्यस्य व्याख्याने आगमप्रदर्शनम्।

ई) 'परमेश्वरस्य...सिद्धम्'इत्यस्य व्याख्याने– १) 'परमेश्वरस्य दुःखास्पृष्टत्व'ानुक्तिन्यूनताशङ्कापरिहारकतया अवतरणम्। २) 'स्वातन्त्र्येण'-इत्यस्य अर्थश्च। ]

ननु अचेतनविभागात्पूर्वं चेतनविभागकरणे किं निमित्तम्? इत्यत आह **यथोद्देशमिति**। उद्देशे तु नियामकम् अव्यहितग्रन्थे एव उक्तम्; इति भावः॥

"ननु 'दुःखस्पृष्टम् तदस्पृष्टम्'इतिविभागे सति मुक्तानां दुःखसम्बन्धाभावेन तदस्पृष्टत्वापत्त्या 'नित्यादुःखा रमा'इत्युत्तरवाक्यविरोधः स्यात्"इत्यत आह 'कदाचित्'इति। तथाच मुक्तानां दुःखस्पृष्टत्वम् एव उपपन्नम्; इति भावः। "ननु मुक्तानाम् अपि दुःखास्पृष्टत्वसत्त्वेन 'नित्यादुःखा'इतिवाक्यविरोधः तदवस्थः"इत्यत आह 'कदापि'इति। तथाच न तेषां दुःखास्पृष्टत्वम्। इति भावः॥

एवकारव्यवच्छेद्यमतम् आह **कल्पितत्वादित्यादिना**॥१॥ **सर्वमपीति**। चेतनम्'इति शेषः॥ दुःखस्पृष्टमेवेति। 'यदाकदाचित्'इति शेषः॥॥ एके – नैयायिकाः।,

**आगमविरुद्धत्वादिति**। 'द्वौ वाव सत्यनुपक्रमौ प्रकृतिश्च परमश्च'[1] इत्यादिश्रुत्या, 'समना चासृत्युपक्रमादमृतत्त्वं चानुपोष्य'[2]इति सूत्राच्च विरुद्धत्वात्; इत्यर्थः॥

१. बृहच्छ्रुतिः ४–४५. २. ब्र. सू. ४–२–६–७

ननु परमेश्वरस्य दुःखास्पृष्टत्वानुक्तेः न्यूनता स्यात्;इत्यत आह परमेश्वरस्येति ।। स्वातन्त्र्येणेति । तत्त्वविभाजकस्वातन्त्र्येण इत्यर्थः ।

[ २३ के. विषयः– अस्वतन्त्रतत्त्व-भाव चेतननिरूपणे–

अ) 'कदाचित्...तदस्पृष्टम्'इत्यस्य व्याख्याने– १) सप्रयोजनं 'स्पृष्ट'पदप्रयोगलब्धार्थोक्तितया अवतरणम् । २) दलकृत्ये– क) विशेषण-द्वयकृत्यम् । ख) सप्रयोजनम् उभयलक्षणस्य तात्पर्यम् । ग) सप्रयोजनम् "दुःख'शब्दविवक्षितार्थकथनम्

आ) 'कल्पित...आगमविरुद्धत्वात्'इत्यस्य व्याख्याने– १) मूलस्थ-'एव'कारव्यवच्छेद्यमतोपन्यासकतया 'कल्पित...अन्ये'इत्यस्य व्याख्याने– क) अवतरणम् । ख) 'कल्पित...एके'इत्यस्य आशयः । ग) 'ईश्वरा... अन्ये'इत्यस्य आशयः । २) 'तदुभय...आगमविरुद्धत्वात्'इत्यस्य व्याख्याने– क) 'तदुभयनिरासाय एवकारः'इत्यस्य भावः । ख) 'आद्यस्य...आगमविरु-द्धत्वात्'इत्यस्य व्याख्याने– १. तन्निरासप्रदर्शकतया अवतरणम्; २. प्रथम-हेतोः व्याख्याने– क. तदुत्तरं शेषोक्तिः, ख. तदर्थश्च; ३. द्वितीयहेतो-र्व्याख्याने– क. तदुत्तरं शेषोक्तिः, ख. एतन्निरासहेतूक्तितया 'आगमविरुद्ध-त्वात्'इत्यस्य व्याख्याने– १. अवतरणम्, २. अर्थश्च ।

इ) 'परमेश्वरस्य...सिद्धम्'इत्यस्य द्वेधा व्याख्याने– १) प्रथमव्या-ख्याने– क) 'परमेश्वरस्य-दुःखास्पृष्टत्वानुक्तिशङ्कापरिहारकतया अवतरणम् । ख) भावश्च । २) द्वितीयव्याख्याने– क) 'एतद्विभागस्य-आदावेव कर्तव्यत्व-शङ्कानिवारकतया अवतरणम् । ख) भावश्च ।

ई) यद्यपि...उद्देशः'इत्यस्य व्याख्याने– १) 'अनयोः'इत्यस्य अर्थः । २) 'भावनिरूप्यत्वात्'इत्यस्य अर्थः । उक्तार्थाभिप्रायश्च । ]

ननु मुक्तानां दुःखित्वे संसारित्वप्रसङ्गेन, दुःखातीततया दुःख-स्पृष्टत्वाभावात्, दुःखस्पृष्टावान्तरभेदत्वं वक्ष्यमाणम् अनुपपन्नमेव; दुःखा-स्पृष्टत्वेन सङ्ग्रहश्च स्यात्; न च इष्टापत्तिः 'अन्ये तु समस्तशः'इति वक्ष्य-माणविरोधात्; इत्यतः 'व्याप्ति'आदिपदम् अपहाय 'स्पृष्ट'पदप्रयोगेण लब्धम् अर्थम् आह कदाचिदिति ।;

मुक्तेषु-अतिव्याप्तिनिवृत्त्यर्थं विशेषणद्वयम् ।,

न च 'एवम् मुक्त्यनन्तरं कदाचिदपि दुःखसम्बन्धाभावात् मुक्तेषु अव्याप्तिः, तेषु तत एव दुःखास्पृष्टस्य अतिव्याप्तिश्च' इतिवाच्यम्; 'दुःख[1]-संसर्गात्यन्ताभावानधिकरणत्वं दुःखस्पृष्टत्वम्, दुःखसंसर्गात्यन्ताभावाधिकरणत्वञ्च दुःखास्पृष्टत्वम्' इत्यत्र तात्पर्यात् ।,

यत्तु "सर्वदा दुःखसम्बन्धस्य असम्भवात्, 'कदाचित्' इत्युक्तम् आद्यलक्षणे; संसारिणि सुषुप्त्यादौ अतिव्याप्तिवारणाय द्वितीयलक्षणे च 'कदाऽपि' इत्युक्तम्" इति; तन्न, 'दुःख' शब्देन प्रविबन्धरूपायाः संसृतेः विवक्षितत्वेन उक्तदोषानवकाशात् । अत एव तत्त्वविवेके 'सृतियुक्' इति-व्यवहारः; इति द्रष्टव्यम् ॥

'इति द्वेधैव चेतनम्' इतिविशेषणसङ्गत'एव'कारस्य अयोग[2]व्यवच्छेदन-परत्वं प्रकटयितुम् दुःखस्पृष्टतदस्पृष्टत्वरूपप्रकारद्वयस्य अयोगप्रापकं मतद्वयम् उपन्यस्यति कल्पितत्वादित्यादिना ।;

निर्दुःखब्रह्माभिन्नत्वात् जीवस्य दुःखित्वव्याघातेनैव कल्पितदुःखादेः असम्भवात्, दुःखस्पृष्टं चेतनम् एव नास्ति; इत्याशयः ।,

**ईश्वरेति** । " 'ईश्वरातिरिक्तं लक्ष्म्यादिकम् अपि दुःखास्पृष्टम्' इति-वदन् प्रष्टव्यः— 'तत् स्वतन्त्रम्? परतन्त्रं वा?' इति ।, आद्ये स्वतन्त्र-द्वयविरोधः; द्वितीये पारतन्त्र्यदुःखयोः अविनाभावस्य लोकदर्शनेन सिद्ध स्वात्, 'परतन्त्रं दुःखास्पृष्टम्' इति कथं न व्याघातः?" इत्याशयः ।

**तदुभयेति** । तदुभयप्राप्तः यः योगः, तद्व्यवच्छेदपरत्वेन 'एव'कारस्य सप्रयोजनत्वम्; इति भावः ॥,

तन्निरासप्रकारं दर्शयति **आद्यस्येति** ।;

---

१ दुःखसंसर्गाभावात्यन्तानधिकरणत्वम् २. योग

'निरासः' इति शेषः । निर्बाधसाक्ष्यादिसिद्धसत्ताकदुःखादिप्रपञ्च-मिथ्यात्वसाधकश्रुतियुक्त्यादेः साक्षादिविरुद्धतया[3] तन्मिथ्यात्वासाधकत्वात्; इत्यर्थः ।,

**द्वितीयस्येति** ॥ 'निरासः' इति शेषः । कुतः ? इत्यत आह **आगमस्येति** । ईश्वरातिरिक्तस्यापि परतन्त्रस्यापि श्रीतत्त्वस्य 'द्वौ वाव सृत्य-नुपक्रमौ प्रकृतिश्च परमश्च'[4] इत्यादिश्रुत्या, 'समना चासृत्युपक्रमादमृतत्वं चानु-पोष्य'[5] इतिसूत्रेण च सर्वदुःखास्पृष्टत्वस्य सिद्धत्वेन, 'सर्वं दुःखस्पृष्टमेव'-इत्यस्य तद्विरुद्धत्वात्; इत्यर्थः ॥

ननु 'एवं परमेश्वरस्य दुःखास्पृष्टत्वसिद्धिः न स्यात्, दुःखास्पृष्ट-त्वादेः परतन्त्रचेतनविभागत्वेन उक्तत्वात्; इत्यत आह **परमेश्वरस्येति** । अयं भावः– " 'कदाऽपि दुःखासम्बद्धं तदस्पृष्टम्' इतिदुःखास्पृष्टलक्षणाऽऽ-क्रान्तत्वात् परमेश्वरस्य युज्यते दुःखास्पृष्टत्वम् ।, न च उक्तदोषः; भवेत् एवं कथञ्चित् यदि 'परतन्त्रचेतनम् एव द्विविधम्' इत्येवंपरः विभागः स्यात्, न च एतदस्ति, 'परतन्त्रचेतनं दुःखस्पृष्टतदस्पृष्टतया द्विविधमेव, न पुन एकविधम्, नापि त्रिविधम्' इत्येवंपरत्वात् विभागस्य । न च एवम् अति-प्रसङ्गः, साधकभावाभावाभ्यां विशेषात्; न हि परमेश्वरस्य दुःखास्पृष्टत्व-साधकस्वातन्त्र्यवत् अन्यस्यापि तत्साधनं किञ्चित् अस्ति ।" इति ।,

**यद्वा** 'ननु परमेश्वरस्य दुःखास्पृष्टत्वसिद्ध्यर्थम् अयं विभागः आदौ एव कार्यः' इत्यत आह **परमेश्वरस्येति** । दुःखित्वविरुद्धस्वातन्त्र्येण उद्देशेन एव तत्सिद्धिः; इति भावः ॥

**अनयोरिति** । दुःखस्पृष्टतदस्पृष्टयोः इत्यर्थः ॥ **अभावस्य भाव-निरूप्यत्वादिति** । प्रतियोगिज्ञानाधीनज्ञानत्वात् इत्यर्थः । तेन 'घटा-

---

३. साक्षादविरुद्धतन्मिथ्यात्वा ४. बृहच्छ्रुतिः ४–४५.
५. ब्र. सू. ४–२–६–७

भावाभावस्य घटाभावनिरूप्यत्वेऽपि भावनिरूप्यत्वाभावात्, न इदं नियामकम्' इति चोद्यानवकाशः; इति ध्येयम् ।

[ २३ वि. विषयः– अस्वतन्त्रतत्त्व-भाव- चेतननिरूपणे–

अ) 'यथोद्देशं...दुःखेति' इत्यस्य व्याख्याने– १) अवतरणम् ।

आ) 'कदाचित्...तदस्पृष्टम्' इत्यस्य व्याख्याने– १) सप्रयोजनविवक्षितार्थोक्तितया अवतरणम् । २) 'कदाचित्...दुःखस्पृष्टम्' इत्यस्य व्याख्याने– 'कदाचित्' पदकृत्यम् । इ) कदाचिदपि ..तदस्पृष्टम्' इत्यस्य व्याख्याने– क) अर्थः । ख) 'कदाचिदपि' पदकृत्यम् ।

इ) 'कल्पित...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १) 'एव' कारप्रयोजनाङ्गभूतविरुद्धमतद्वयानुवादकतया 'कल्पित...अन्ये' इत्यस्य व्याख्याने– क) अवतरणम् । ख) अर्थश्च २) तन्मतद्वयनिरासकतया 'तदुभय...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– क) 'तदु...एवकारः' इत्यस्य अर्थः । ख) तन्निरासप्रकारोक्तितया 'आद्यस्य...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १. अवतरणम्; २. अर्थश्च ।

ई) 'परमेश्वरस्य...सिद्धम्' इत्यस्य व्याख्याने– १) 'उक्तविभागे परमेश्वरस्य दुःखास्पृष्टत्वासिद्धि' शङ्कानिवारकतया– क) अवतरणम् । ख) अर्थश्च ।

उ) 'यद्यपि. .उद्देशः' इत्यस्य व्याख्याने– १) उद्देशक्रमव्यत्यासशङ्कात्वेन 'यद्यपि...प्रधानम्' इत्यस्य व्याख्याने– क) अवतरणम् । ख) पदार्थः ग) शेषश्च । २) तत्परिहारकतया 'तथापि...उद्देशः' इत्यस्य व्याख्याने– क) अवतरणम् । ख) पदार्थश्च । ]

उत्तरवाक्यम् अवतारयति **यथोद्देशमिति** । उद्देशक्रमेण इत्यर्थः ।

दुःखस्पृष्टतदस्पृष्टपदयोः 'सर्वदा दुःखसम्बद्धम्, कदाचित् दुःखासम्बद्धम्; इत्यर्थः' इतिप्रतीतिनिरासाय विवक्षितम् अर्थम् आह **कदाचिदिति** ।;

मुक्तब्रह्मादीनां दुःखस्पृष्टभेदत्वसिद्धये 'कदाचित्' इत्युक्तम् ।,

**कदाचिदपीति** । सर्वदा, दुःखासम्बद्धम् ,= दुःखास्पृष्टम् ; इत्यर्थः मुक्तब्रह्मादीनां दुःखास्पृष्टप्रभेदत्वपरिहाराय उक्तम् 'कदाचिदपि' इति ॥

एवकारस्य प्रयोजनं वक्तुम् उक्तचेतनविभागविरोधिमतद्वयम् अनुवदति **कल्पितत्वाद्दुःखादीनामित्यादिना**।,

दुःखादीनाम्= दुःखसम्बद्धचेतनभेदादीनाम्, कल्पितत्वात्= प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वात्, किञ्चित्, अपि, चेतनम्, तत्त्वतः दुःखसम्बद्धम्, न, भवति, इति, एके– अद्वैतिनः, आहुः; इत्यर्थः। ईश्वरातिरिक्तम्= स्वतन्त्रचेतनातिरिक्तम् सर्वम्, अपि, चेतनम्, दुःखसम्बद्धम् एव, इति अन्ये– नैयायिकाः, आहुः; इत्यर्थः।

**तदुभयनिरासायेति**। तस्य मतद्वयस्य निरासाय, 'एव'कारः, प्रयुक्तः; इत्यर्थः।;

'न हि प्रतिज्ञामात्रेण अर्थसिद्धिः'इत्याशङ्क्य तन्निराकरणप्रकारम् आह **आद्यस्येति**। आद्यस्य मतस्य, 'अहं दुःखी', 'नाहं सर्वज्ञः', 'अहं निर्दुःखः' इति-दुःखसम्बद्धचेतनभेदावगाहिप्रत्यक्षविरोधात्; 'विमताः दुःखसम्बद्धचेतनभेदाः न कल्पिताः प्रमितत्वात् आत्मवत्'इत्याद्यनुमानविरोधात्; 'जीवा एव तु दुःखिनः।', 'निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभागिनः।' 'द्वाविमौ[1] पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।', '[2]ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः। लक्ष्मीरक्षरदेहत्वात् अक्षरा तत्परो हरिः।',' नित्य[3]मुक्तश्च सृतियुक् परतन्त्रोऽपि चेतनः ;'इत्याद्यागमविरोधाच्च; इत्यर्थः।

'ननु दुःखास्पृष्टस्य अस्वतन्त्रचेतनप्रभेदत्वे ईश्वरस्य दुःखास्पृष्टत्वं न सिद्ध्येत्'इत्याशङ्क्य आह **परमेश्वरस्येति**। स्वतन्त्रचेतनस्य, स्वातन्त्र्येण **एव** = अनन्याधीनत्वेन एव, सिद्धम्= निश्चितम्; इत्यर्थः॥

---

१. गीता. १५, १६. २. त. नि. पृ. ९८०.
३. त. वि. श्लो. ४

भावाभावस्य घटाभावनिरूप्यत्वेऽपि भावनिरूप्यत्वाभावात्, न इदं नियामकम्' इति चोद्यानवकाशः; इति ध्येयम् ।

[ २३ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतननिरूपणे–

अ) 'यथोद्देशं...दुःखेति' इत्यस्य व्याख्याने– १) अवतरणम् ।

आ) 'कदाचित्...तदस्पृष्टम्' इत्यस्य व्याख्याने– १) सप्रयोजनविवक्षितार्थोक्तितया अवतरणम् । २) 'कदाचित्...दुःखस्पृष्टम्' इत्यस्य व्याख्याने– 'कदाचित्' पदकृत्यम् । ३) कदाचिदपि ..तदस्पृष्टम्' इत्यस्य व्याख्याने– क) अर्थः । ख) 'कदाचिदपि' पदकृत्यम् ।

इ) 'कल्पित...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १) 'एव' कारप्रयोजनाङ्गभूतविरुद्धमतद्वयानुवादकतया 'कल्पित...अन्ये' इत्यस्य व्याख्याने– क) अवतरणम् । ख) अर्थश्च २) तन्मतद्वयनिरासकतया 'तदुभय...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– क) 'तदु...एवकारः' इत्यस्य अर्थः । ख) तन्निरासप्रकारोक्तितया 'आद्यस्य...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १. अवतरणम्; २. अर्थश्च ।

ई) 'परमेश्वरस्य...सिद्धम्' इत्यस्य व्याख्याने– १) 'उक्तविभागे परमेश्वरस्य दुःखास्पृष्टत्वासिद्धि' शङ्कानिवारकतया– क) अवतरणम् । ख) अर्थश्च ।

उ) 'यद्यपि. .उद्देशः' इत्यस्य व्याख्याने– १) उद्देशक्रमव्यत्यासशङ्कात्वेन 'यद्यपि...प्रधानम्' इत्यस्य व्याख्याने– क) अवतरणम् । ख) पदार्थः । ग) शेषश्च । २) तत्परिहारकतया 'तथापि...उद्देशः' इत्यस्य व्याख्याने– क) अवतरणम् । ख) पदार्थश्च । ]

उत्तरवाक्यम् अवतारयति **यथोद्देशमिति** । उद्देशक्रमेण इत्यर्थ. ।

दुःखस्पृष्टतदस्पृष्टपदयोः 'सर्वदा दुःखसम्बद्धम्, कदाचित दुःखासम्बद्धम्; इत्यर्थः' इतिप्रतीतिनिरासाय विवक्षितम् अर्थम् आह **कदाचिदिति** ।;

मुक्तब्रह्मादीनां दुःखस्पृष्टभेदत्वसिद्धये 'कदाचित्' इत्युक्तम् ।,

**कदाचिदपीति** । सर्वदा, दुःखासम्बद्धम् ,= दुःखास्पृष्टम् ; इत्यर्थः । मुक्तब्रह्मादीनां दुःखास्पृष्टप्रभेदत्वपरिहाराय उक्तम् 'कदाचिदपि' इति ॥

एवकारस्य प्रयोजनं वक्तुम् उक्तचेतनविभागविरोधिमतद्वयम् अनुवदति **कल्पितत्वाद्दुःखादीनामित्यादिना ।**,

दुःखादीनाम्= दुःखसम्बद्धचेतनभेदादीनाम्, कल्पितत्वात्= प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वात्, किञ्चित्, अपि, चेतनम्, तत्त्वतः दुःखसम्बद्धम्, न, भवति, इति, एके– अद्वैतिनः, आहुः; इत्यर्थः । ईश्वरातिरिक्तम्= स्वतन्त्रचेतनातिरिक्तम् सर्वम्, अपि, चेतनम्, दुःखसम्बद्धम् एव, इति अन्ये– नैयायिकाः, आहुः; इत्यर्थः ।

**तदुभयनिरासायेति ।** तस्य मतद्वयस्य निरासाय, 'एव'कारः, प्रयुक्तः; इत्यर्थः ।;

'न हि प्रतिज्ञामात्रेण अर्थसिद्धिः'इत्याशङ्क्य तन्निराकरणप्रकारम् आह **आद्यस्येति ।** आद्यस्य मतस्य, 'अहं दुःखी', 'नाहं सर्वज्ञः', 'अहं निर्दुःखः' इति-दुःखसम्बद्धचेतनभेदावगाहिप्रत्यक्षविरोधात्; 'विमताः दुःखसम्बद्धचेतनभेदाः न कल्पिताः प्रमितत्वात् आत्मवत्'इत्याद्यनुमानविरोधात्; 'जीवा एव तु दुःखिनः ।', 'निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभागिनः ।' 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।'[1], 'ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः । लक्ष्मीरक्षरदेहत्वात् अक्षरा तत्परो हरिः ।'[2],' नित्यमुक्तश्च सृतियुक् परतन्त्रोऽपि चेतनः ;'[3]इत्याद्यागमविरोधाच्च; इत्यर्थः ।

'ननु दुःखास्पृष्टस्य अस्वतन्त्रचेतनप्रभेदत्वे ईश्वरस्य दुःखास्पृष्टत्वं न सिध्येत्'इत्याशङ्क्य आह **परमेश्वरस्येति ।** स्वतन्त्रचेतनस्य, स्वातन्त्र्येण एव = अनन्याधीनत्वेन एव, 'सिद्धम्= निश्चितम्; इत्यर्थः ॥

---

१. गीता. १५, १६. २. त. नि. पृ. ९८०.
३. त. वि. श्लो. ४

'ननु दुःखस्पृष्टतदस्पृष्टचेतनयोः मध्ये दुःखास्पृष्टचेतनस्य प्राधान्यात् आदौ उद्देशः कर्तव्यः' इति शङ्कते **यद्यपीति**। प्रधानम्= उत्कृष्टम्; 'अतः तस्यैव आदौ उद्देशः कर्तव्यः' इति शेषः।

परिहरति **तथापीति**। अभावस्य= दुःखस्पृष्टान्योन्याभावस्य, भावनिरूप्यत्वात्= दुःखस्पृष्टचेतनरूपप्रतियोगिभूतभावज्ञानाधीनज्ञानविषयत्वात्, दुःखस्पृष्टचेतनस्य आदौ उद्देशः कर्तव्यः; इत्यर्थः।

[ २३ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतननिरूपणे–

अ) शङ्कात्रयपरिहारसहित-अवतारकतया 'यथो...दुःखेति' इत्यस्य व्याख्याने– १) अवतरणम्। २) शेषश्च।

आ) 'कदाचित्...तदस्पृष्टम्' इत्यस्य व्याख्याने– १) सप्रयोजनम् 'दुःखस्पृष्ट' पदार्थोक्तितया 'कदाचित्...दुःखस्पृष्टम्' इत्यस्य अवतरणम्। २) सप्रयोजनं 'तदस्पृष्ट' पदार्थोक्तितया 'कदाऽपि...तदस्पृष्टम्' इत्यस्य अवतरणम्।

इ) 'कल्पित...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १) 'निरासायैवकारः' इत्यस्य अर्थः। २) तन्निरासार्थमभिप्रेतयुक्तिविशेषोक्तितया 'आद्यस्य...आगमविरुद्धत्वात्' इत्यस्य अवतरणम्।

ई) 'प्रकारान्तरेण विभागकर्तव्यत्व' शङ्कानिरासकतया 'परमेश्वरस्य ...सिद्धम्' इत्यस्य व्याख्याने – १) अवतरणम्। २) 'एव' कारार्थः।

उ) 'क्रमान्तरेण उद्देष्टव्यत्व' शङ्कानिरासकतया 'यद्यपि...उद्देशः' इत्यस्य अवतरणम्। ]

मूले " 'दुःखस्पृष्टं तदस्पृष्टम्' इतिद्विधा विद्यमानं वस्तु चेतनम्" इति 'द्विधाऽनुवादेन चेतनत्वं विधीयते' इति प्रतीयते; तदयुक्तम्, अप्राप्तत्वेन अनुवादायोगात्।, न च 'चेतनत्वम् उद्दिश्य द्विधात्वं विधीयते' इति विभागकथनप्रसङ्गे संज्ञाविधानस्य असङ्गत्वात्।, न च " 'द्विधा' इति विभागकथनम्, न संज्ञाविधानम्" इति; तथाऽपि अचेतनस्यापि उपस्थितत्वे

एतस्यैव आदित्वे नियामकाभावात्; 'दुःखस्पृष्टं तदस्पृष्टम्'इत्यस्य वैयर्थ्याच्च ।; इति इमाः शङ्काः परिहरन् अवतारयति **यथोद्देशमिति** । विभागम् 'सप्रकारम्'इति शेषः ।।

'दुःखस्पृष्टम्'इति 'दुःखं स्पर्शेन्द्रियेण सम्बन्धवत् कृतम्'इत्यर्थः प्रतीयते; तदयुक्तम्, बाधितत्वप्रसङ्गात् ।, न 'दुःखसम्बन्धवत्त्वम्'तदर्थः; तथाऽपि मुक्तानाम् असङ्ग्रहापत्तेः । इत्यत आह **कदाचिदिति** ।

'तदस्पृष्टम्'इति'तत्'शब्देन दुःखस्पृष्टस्य परामर्शे लक्ष्याः अपि दुःखस्पृष्टास्पृष्टत्वाभावेन 'तदस्पृष्ट'शब्देन असङ्ग्रहापत्तेः ।; न च दुःखमात्रपरामर्शः, तस्य समासान्तर्गतत्वेन परामर्शायोगात्; बुद्ध्या विविक्तस्य परामर्शेऽपि, मुक्तानामपि कदाचित् दुःखास्पृष्टत्वेन 'तत्'शब्देन सङ्ग्राह्यत्वापत्तेः; इत्यत आह **कदाऽपीति** ।।

**निरासायैवकार इति** । न्यूनाधिकसङ्ख्यासङ्ख्येयान्यतमान्तर्भावाभावज्ञापनस्य विभागफलत्वेऽपि 'मुक्तिविशेषेण निराकरणाभिप्रायकः 'एव' कारः; इत्यर्थः ।

अभिप्रेतं युक्तिविशेषम् आह **आद्यस्येत्यादिना** ।।

ननु परमेश्वरस्य यथा दुःखास्पृष्टत्वे प्रवेशः स्यात्, तथा विभागः क्रियताम्; इत्यत आह **परमेश्वरस्येति** । 'न तु तदर्थं विभागः कर्तव्यः' इति 'एव'कारार्थः ।।

ननु प्राधान्यात् दुःखस्पृष्टस्य प्रथमम् उद्देशः उचितः; तत् कुतः वैपरीत्येन उद्देशः ? इत्याशङ्क्य परिहरति **यद्यपीति** ।

[ २३ का. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतननिरूपणे–

अ) 'यथोद्देशं...दुःखेति'इत्यस्य व्याख्याने– १) पदार्थः । २) -भावश्च ।

आ) 'कदाचित् ..तदस्पृष्टम्'इत्यस्य व्याख्याने– १) सप्रयोजनम् उद्देशलब्धलक्षणदर्शकतया अवतरणम् । २) विविधमतान्तरैः दुःखस्पृष्टत्व-तदस्पृष्टत्वयोः निष्कर्षः ।

इ) 'कल्पित...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १) अवधा-रणप्रयोजनोक्तितया अवतरणम् । २) 'कल्पित...अन्ये'इत्यस्य व्याख्याने– क) 'कल्पित...एके'इत्यस्य व्याख्याने– १. अर्थः; २. 'प्रकारान्तरेण उक्त-विभागानुपपत्तिनिवारक'भावरूपेण 'आदि'पदप्रयोजनञ्च । ३) 'तदुभय... आगमविरुद्धत्वात्'इत्यस्य व्याख्याने– क) 'प्रत्यक्षविरुद्धत्वात्'इत्यस्य व्याख्याने– १. अर्थः; २. एतत्प्रत्यक्षस्य– क. अप्रामाण्यनिरासः, ख. बाधकनिरासः, ३. प्रत्यक्षविरोधस्य कण्ठतोक्तौ प्रयोजनञ्च । ख) 'आगम-विरुद्धत्वात्'इत्यस्य व्याख्याने– १. अर्थः, २. भावश्च ।

ई) 'परमेश्वरस्य सिद्धम्'इत्यस्य पञ्चधा व्याख्याने अवतरणम्, पञ्चधा भावश्च ।

उ) 'यद्यपि...उद्देशः'इत्यस्य व्याख्याने– १) उद्देशक्रमान्तरशङ्कात्वेन 'यद्यपि प्रधानम्'इत्यस्य अवतरणम्, पदार्थश्च । २) समाधायकतया 'तथा-ऽपि...उद्देशः'इत्यस्य अवतरणम्, भावश्च । ३) दुःखस्पृष्टतदस्पृष्टपदयोः यौगिकत्वम् । ४) प्राधान्यज्ञापनस्य उत्तरमूलेन सिद्धत्वात् तदर्थं तदुद्देश-प्राथम्यम् अनुचितम् । ५) निरूपकक्रमानुसरणस्य सार्थक्यञ्च । ]

**यथोद्देशमिति** । उद्देशानुसारेण इत्यर्थः । तदपवादकप्राधान्यादेश्च अचेतने अभावात्; इति भावः ॥

'उद्देशेनैव लाभात् न न्यूनता'इत्याशयेन उद्देशलब्धे लक्षणे दर्शयति **कदाचिदिति** ।

'सर्वदा दुःखसम्बद्धत्व'विवक्षायाम् असम्भवः स्यात्, अतः 'कदा चित्'इत्युक्तम् । दुःखस्य अन्तःकरणधर्मत्वात् 'सम्बद्ध'पदम्; दुःखानुभवोप-लक्षितम् इत्यर्थः।, मुक्तजीवानाम् अपि पूर्वतनदुःखानुभवोपलक्षितत्वात् न असङ्ग्रहः ॥ ये तु तत्सङ्ग्रहानुरोधेन दुःखसंसर्गात्यन्ताभावानधिकरणत्वं

दु:खस्पृष्टत्वं वर्णयन्ति, तेषाम् 'अभावस्य भावनिरूप्यत्वात् दु:खस्पृष्टस्य प्रथमम् उद्देश:' इति-उत्तरटीका न सङ्गच्छते; निरुक्तदु:खस्पृष्टत्वस्यापि प्रतियोगिनिरूप्यत्वात् । "कथं तर्हि 'संसारसंसर्गात्यन्ताभावानधिकरणत्वं सृतियुक्त्वम्' इति तत्त्वविवेकमन्दारमञ्जरी[1] सङ्गच्छते ?" इति चेत्; न, तत्त्वविवेके नित्यमुक्तस्यैव प्रथमम् उद्देशेन तदुपपत्तेः; इह तद्रीत्या व्याख्यानं तु टीकाया: यथाश्रुतदु:खस्पृष्टपरतयैव सङ्गमनीयम् ।,

दु:खास्पृष्टत्वं यदि दु:खासम्बद्धत्वमात्रम्, तदा[2] संसारिणि सुषुप्त्यादौ अतिव्याप्तेः आह 'कदाऽपि' इति । तथाच दु:खसम्बन्धात्यन्ताभाववत्त्वं विवक्षितम् । इति[3] प्राञ्चः ।

न च " 'नित्यमुक्तश्च सृतियुक्' इतितत्त्वविवेकानुसारेण[4] 'दु:ख' पदस्य प्रकृतिबन्धलक्षणसंसारपरतया, न सुषुप्त्यादौ अतिव्याप्त्यवकाश:" इति वाच्यम्; तथा सति गरुडादीनां दु:खास्पृष्टत्वनिरासानुपपत्तेः ।, न हि तेषाम् असंसारित्वरूपदु:खास्पृष्टत्वम् अन्यैः स्वीकृतम्, समष्टित्वाङ्गीकारविरोधात्; प्राप्ततमसां दु:खस्पृष्ट-अवान्तर-दु:खसंस्थप्रभेदत्वानुपपत्तेश्च ।,

'कथं तर्हि तत्त्वविवेकटीकायाम्[5] अमुक्तप्रभेदत्वेन प्राप्ततमसां परिगणनम् ?' इति चेत्; न, तत्र स्वरूपसुखाविर्भावरूपमुक्तत्वस्य विवक्षितत्वेन, प्राप्ततमसां तदभावेन अमुक्तत्वसम्भवात् ।,

न च "एवम् 'संसारध्वंसाधिकरणत्वं मुक्तत्वम् वर्तमानसंसारत्वम् अमुक्तत्वम्' इतिमन्दारमञ्जरीविरोध:[6]" इति वाच्यम्; 'स्वरूपसुखाविर्भावस्य सुषुप्त्यादिसाधारण्यात् मुक्तत्वशरीरे संसारध्वंसवत्त्वम्; तादृशमुक्त्यभावस्य नित्यमुक्तसाधारण्यात्, अमुक्तत्वशरीरे: संसारित्वञ्च निवेश्यम्' इत्याशयेन तथा-

---

पृ१. . ६७ २. 'तदा' पदं नास्ति ।

३. एतत्प्राचीनमतानुवादस्य आद्यन्त: शोधनीय: । ४. श्लो.५.

५. पृ.६९. ६. पृ.६८

ऽभिधानात् । अन्यथा प्राप्ततमसां मुक्तेषु अपरिगणनाऽऽपत्तेः, 'स्वरूपसुखाविर्भाव एव मुक्तिः'इतिटीकाविरोधापत्तेश्च; अत्र तु 'विमुक्ताः दुःखात्'इति व्याख्यानात् निर्दुःखत्वरूपमुक्तत्वस्य विवक्षिततया, तस्य च निःसंसारत्वरूपत्वे प्राप्ततमसां मुक्तान्तर्भावध्रौव्यात् । न च तदर्थम् अत्रापि स्वरूपसुखाविर्भावो निवेश्यः, 'दुःख'पदस्य मुख्यार्थत्वेनैव उपपत्तौ अर्थान्तरं गृहीत्वा विशेषणान्तरेण वारणस्य अयुक्तत्वात् ।, न च 'एवम् तत्त्वविवेकाननुसारित्वम्, सृतियुक्तत्वनित्यमुक्तत्वाभ्यां दुःखस्पृष्टत्वतदस्पृष्टत्वयोः एव सिद्धेः;'शिष्यव्युत्पादनाय फलितोक्तेः अमुक्तविभागादौ इव सम्भवात् ।

भावचन्द्रिकायां तु ''मुक्तेषु-अतिव्याप्तिवारकतया 'कदाऽपि'इत्यस्य सार्थक्यसम्भवात् 'दुःख'पदं संसारपरम् एव । न च प्राप्ततमसां मुक्तान्तर्भावाऽऽपत्तिः, 'दुःख'शब्दस्य दुःखतत्साधारणं अनिष्टमात्रपरत्वात् ।, तत्त्वविवेक'सृति'पदस्यापि एतदर्थत्वात्, न तद्विरोधोऽपि ।''इति ।

तत्त्वसङ्ख्यानस्य व्याख्यारूपत्वात्, एतदनुसारेण 'सृति'पदम् एव दुःखार्थम् अपि आहुः ।

**स्यादेतत्** ।। दुःखसम्बन्धात्यन्ताभाववत्त्वं दुःखास्पृष्टत्वम् इत्ययुक्तम् ।।; दुःखसम्बन्धस्य प्रतियोगित्वेन अत्यन्ताभावविशेषणत्वायोगात्; सतः तत्प्रतियोगित्वाभावात्, असतश्च व्यावर्तकत्वानुपपत्तेः ।, न च प्रतियोग्यसत्त्वेऽपि प्रतियोगित्वस्य निरूपकतया व्यावर्तकत्वसम्भवः; प्रतियोगित्वसामान्यस्य अभावान्तरसाधारण्यात्, तद्विशेषस्य च अनुल्लेखात् ।, किञ्च प्रतियोगित्वं प्रतियोग्यभावयोः सम्बन्धः; न च सम्बन्ध्यसत्त्वे सम्बन्धस्य सत्त्वं सम्भवति, अतिप्रसङ्गात् ।; यद्यपि 'तदस्पृष्टम्'इतिमूलस्य 'दुःखासम्बद्धम्'इतिटीकायाश्च दुःखासम्बन्धश्च अन्योन्याभावार्थकतया उपपत्तेः न उक्तविकल्पदोषः, सत एव

७. परिगणनापत्तेः ८. पृ.६८ ९. त.सं. श्लो.४टीकायाम्
१. त.सं. कं.टि.

तत्प्रतियोगित्वात्; तथाऽपि 'नित्यादुःखा' इत्युत्तरमूलानुसारात् अत्यन्ताभाव-घटितम् अपि लक्षणम् अभिप्रेतम्; अत एव 'त्रैकालिकदुःखनिषेधवत्' इतिव्याख्यानम् उपपद्यते। भावचन्द्रिकायाञ्च[2] 'दुःखसंसर्गात्यन्ताभावाधि-करणत्वं दुःखास्पृष्टत्वम्' इत्युक्तम्। किञ्च 'नित्यमुक्तः' इतितत्त्वविवेके 'यस्य न कदाऽपि संसारसम्बन्धः असौ नित्यमुक्तः' इतिटीकायाञ्च 'संसारसंसर्गा-त्यन्ताभाववत्त्वम्' लक्षणम् उक्तम्। तत्र च उक्तानुपपत्तिः कथं परिहरणीया? इति॥ अत्राहुः— असत एव दुःखादिसम्बन्धस्य प्रतियोगित्वविशेषणे[3] अत्यन्ताभावविशेषणत्वम्, सदसतोः सम्बन्धान्तराभावेऽपि विषयत्वप्रतियोगित्वा-दिसम्बन्धस्वीकारात्। अत एव तस्य व्यावर्तकत्वम् अपि। सम्बन्धविधया प्रतियोगित्वविशेषानुल्लेखस्तु असिद्धः एव। इति।

अन्ये तु 'सत एव दुःखसंसर्गस्य प्रधानप्रतियोग्यनुगतनिरूपकत्वेन अभाव विशेषणत्वम्; अत एव 'दुःखसंसर्गाभावस्तत्र' इतिप्रतीतिः उपपद्यते। न च 'एवम् असतः तत्प्रतियोगित्वे मानाभावः;' भ्रमबाधोत्तरम् 'असन् एव दुःखसंसर्गः प्रत्यभात्' इतिप्रतीतेः एव मानत्वात्, असत्त्वस्य अत्यन्ताभाव-प्रतियोगित्वरूपत्वात्।'' इत्याहुः।

अधिकम् अन्यत्र अनुसन्धेयम्॥

''मायावाद्युपगतचेतनैक्यस्य, तार्किकाद्युपगतपरतन्त्रचेतनैकविध्यस्य च निरासाय 'द्वैधैव' इत्यवधारणम्' इत्याह कल्पितत्वादिति।

दुःखादीनाम् आरोपितत्वात्, परमार्थतः न किञ्चित् दुःखस्पृष्टम्; इत्यर्थः।

**यद्यपि** चेतनाचेतनत्वेन परतन्त्रविभागात् एव स्वतन्त्रचेतनान्तर-सिद्ध्या चेतनैक्यनिरासः सम्भवति; न च 'स्वतन्त्रस्य चेतनानुक्तेः नैवम्'-

---

२. त.सं. के.टि. ३. पृ.६७

ऽभिधानात् । अन्यथा प्राप्ततमसां मुक्तेषु अपरिगणनाऽऽपत्तेः, 'स्वरूपसुखाविर्भाव एव मुक्तिः'इतिटीकाविरोधापत्तेश्च; अत्र तु 'विमुक्ताः दुःखात्' इति व्याख्यानात् निर्दुःखत्वरूपमुक्तत्वस्य विवक्षिततया, तस्य च निःसंसारत्वरूपत्वे प्राप्ततमसां मुक्तान्तर्भावध्रौव्यात् । न च तदर्थम् अत्रापि स्वरूपसुखाविर्भावो निवेश्यः, 'दुःख'पदस्य मुख्यार्थत्वेनैव उपपत्तौ अर्थान्तरं गृहीत्वा विशेषणान्तरेण वारणस्य अयुक्तत्वात् ।, न च 'एवम् तत्त्वविवेकाननुसारित्वम्, सृतियुक्तत्वनित्यमुक्तत्वाभ्यां दुःखस्पृष्टत्वतदस्पृष्टत्वयोः एव सिद्धेः;'शिष्यव्युत्पादनाय फलितोक्तेः अमुक्तविभागादौ इव सम्भवात् ।

भावचन्द्रिकायां तु ''मुक्तेषु-अतिव्याप्तिवारकतया 'कदाऽपि'इत्यस्य सार्थक्यसम्भवात् 'दुःख'पदं संसारपरम् एव । न च प्राप्ततमसां मुक्तान्तर्भावाऽऽपत्तिः, 'दुःख'शब्दस्य दुःखतत्साधारण अनिष्टमात्रपरत्वात् ।, तत्त्वविवेक'सृति'पदस्यापि एतदर्थत्वात्, न तद्विरोधोऽपि ।''इति ।

तत्त्वसङ्ख्यानस्य व्याख्यारूपत्वात्, एतदनुसारेण 'सृति'पदम् एव दुःखार्थम् अपि आहुः ।

**स्यादेतत्** ।। दुःखसम्बन्धात्यन्ताभाववत्त्वं दुःखास्पृष्टत्वम् इत्ययुक्तम् ।।; दुःखसम्बन्धस्य प्रतियोगित्वेन अत्यन्ताभावविशेषणत्वायोगात्; सतः तत्प्रतियोगित्वाभावात्, असतश्च व्यावर्तकत्वानुपपत्तेः ।, न च प्रतियोग्यसत्त्वेऽपि प्रतियोगित्वस्य निरूपकतया व्यावर्तकत्वसम्भवः; प्रतियोगित्वसामान्यस्य अभावान्तरसाधारण्यात्, तद्विशेषस्य च अनुल्लेखात् ।, किञ्च प्रतियोगित्वं प्रतियोग्यभावयोः सम्बन्धः; न च सम्बन्ध्यसत्त्वे सम्बन्धस्य सत्त्वं सम्भवति, अतिप्रसङ्गात् ।; यद्यपि 'तदस्पृष्टम्'इतिमूलस्य 'दुःखासम्बद्धम्'इतिटीकायाश्च दुःखासम्बन्धश्च अन्योन्याभावार्थकतया उपपत्तेः न उक्तविकल्पदोषः, सत एव

७. परिगणनापत्तेः ८. पृ.६८ ९. त.सं. श्लो.४टीकायाम्
१. त.सं. कं.टि.

तत्प्रतियोगित्वात्; तथाऽपि 'नित्यादुःखा' इत्युत्तरमूलानुसारात् अत्यन्ताभाव-घटितम् अपि लक्षणम् अभिप्रेतम्; अत एव 'त्रैकालिकदुःखनिषेधवत्' इतिव्याख्यानम् उपपद्यते। भावचन्द्रिकायाञ्च[२] 'दुःखसंसर्गात्यन्ताभावाधिकरणत्वं दुःखास्पृष्टत्वम्' इत्युक्तम्। किञ्च 'नित्यमुक्तः' इतितत्त्वविवेके 'यस्य न कदाऽपि संसारसम्बन्धः असौ नित्यमुक्तः' इतिटीकायाञ्च 'संसारसंसर्गात्यन्ताभाववत्त्वम्' लक्षणम् उक्तम्। तत्र च उक्तानुपपत्तिः कथं परिहरणीया? इति॥ **अत्राहुः**— असत एव दुःखादिसम्बन्धस्य प्रतियोगित्वविशेषेणे[३] अत्यन्ताभावविशेषणत्वम्, सदसतोः सम्बन्धान्तराभावेऽपि विषयत्वप्रतियोगित्वादिसम्बन्धस्वीकारात्। अत एव तस्य व्यावर्तकत्वम् अपि। सम्बन्धविधया प्रतियोगित्वविशेषानुल्लेखस्तु असिद्धः एव। इति।

अन्ये तु 'सत एव दुःखसंसर्गस्य प्रधानप्रतियोग्यनुगतनिरूपकत्वेन अभाव विशेषणत्वम्; अत एव 'दुःखसंसर्गाभावस्तत्र' इतिप्रतीतिः उपपद्यते। न च 'एवम् असतः तत्प्रतियोगित्वे मानाभावः;' भ्रमबाधोत्तरम् 'असन् एव दुःखसंसर्गः प्रत्यभात्' इतिप्रतीतेः एव मानत्वात्, असत्त्वस्य अत्यन्ताभाव-प्रतियोगित्वरूपत्वात्।'' इत्याहुः।

अधिकम् अन्यत्र अनुसन्धेयम्॥

''मायावाद्युपगतचेतनैक्यस्य, तार्किकाद्युपगतपरतन्त्रचेतनैकविध्यस्य च निरासाय 'द्वेधैव' इत्यवधारणम्' इत्याह— **कल्पितत्वादिति**।

दुःखादीनाम् आरोपितत्वात्, परमार्थतः न किञ्चित् दुःखस्पृष्टम्; इत्यर्थः।

**यद्यपि** चेतनाचेतनत्वेन परतन्त्रविभागात् एव स्वतन्त्रचेतनान्तर-सिद्ध्या चेतनैक्यनिरासः सम्भवति; न च 'स्वतन्त्रस्य चेतनानुक्तेः नैवम्'-

---

२. त.सं. के.टि. ३. पृ.६७

इति वाच्यम्, स्वातन्त्र्येणैव चेतनत्वसिद्धेः; **तथाऽपि** पारतन्त्र्यादीनाम् आरोपितत्वात् उक्तविभागानुपपत्तिशङ्कायाम् अपि निवर्तकः अयम् 'एव'-कारः; इति भावः । अत एव 'दुःखादीनाम्'इति'आदि'पदम् ।

**प्रत्यक्षविरुद्धत्वादिति** । 'दुःखी', 'परतन्त्रोऽहम्'इत्यादिसाक्षि-प्रत्यक्षविरुद्धत्वात्; इत्यर्थः । न च 'इदम् अप्रमाणम्', बाधकाभावात् ।, न च 'नेह नानाऽस्ति'[४]इत्यागमो बाधकः, तस्य ब्रह्मणि भिन्नगुणक्रियादि-निषेधपरत्वात्; अन्यथा उक्तप्रत्यक्षविरोधात् । अत एव सत्यपि प्रमाणत्रय-विरोधे प्रबलत्वात् प्रत्यक्षविरोधः कण्ठतः उक्तः ।,

**आगमविरुद्धत्वादिति** । 'द्वावेतौ नित्यमुक्तौ', 'निर्दुखो हि हरि-र्नित्यं श्रीश्चान्ये दुःखभागिनः'[५]इत्यागमविरुद्धत्वात्; इत्यर्थः । तद्बलेनैव '[६]समना'ऽधिकरणे श्रियः नित्यमुक्तत्वस्य समर्थितत्वात् इति भावः ॥

'ननु ईश्वरस्य दुःखास्पृष्टत्वम् अवश्यं प्रतिपत्तव्यम्; तत् कुतः नोक्तम्?'इत्यत आह **परमेश्वरस्येति** । स्वातन्त्र्योक्तार्थसिद्धत्वात् न उक्तम्; इति भावः ।

यद्वा 'ननु दुःखस्पृष्टत्वतदस्पृष्टत्वाभ्यां तत्त्वविभाग एव कर्तव्यः, न तु परतन्त्रचेतनविभागः; स्वतन्त्रस्य दुःखास्पृष्टत्वालाभात्'इत्यत आह **पर-मेश्वरस्येति** । तस्मात् अयम् एव विभागः युक्तः; इति भावः ।

यद्वा "ननु अत्र 'परतन्त्रचेतनम् एव एवंविधम्'इत्यवधारणं विव-क्षितं न वा? आद्ये स्वतन्त्रस्य दुःखास्पृष्टत्वं न स्यात्, अन्त्ये दुःखस्पृ-ष्टत्वं किं न स्यात्?' इत्यत आह **परमेश्वरस्येति** । स्वातन्त्र्येण दुःखा-स्पृष्टत्वम् एव सिद्धम्; अतः न अन्त्यदोषः; इति भावः ।

---

४. कठोपनिषत् २–४–११/२–६६, ३–११६.

५. बृहच्छ्रुति :४–४५. ६. ब्र.सू. ४–२–६–७.

यद्वा 'ननु रमायाः दुःखास्पृष्टत्वे स्वातन्त्र्यापत्त्या परमेश्वरसाम्यापत्तिः'इत्यत आह, **परमेश्वरस्येति** । परानपेक्षतया दुःखास्पृष्टत्वं परमेश्वरस्यैव सिद्धम्; अतः न तत्साम्यापत्तिः; इति भावः ।

यद्वा परतन्त्रस्य दुःखास्पृष्टत्वम् अनुपपन्नम्; अत आह **परमेश्वरस्येति** । परमेश्वरस्य स्वातन्त्र्येणैव परतन्त्रस्यापि दुःखास्पृष्टत्वं सिद्धम्, तस्य यथेष्टकर्तृत्वात्; इति भावः ॥

'ननु प्राधान्यक्रमेण दुःखास्पृष्टस्यैव प्रथमम् उद्देशः कार्यः'इत्याशङ्कते **यद्यपीति** । अनयोः=दुःखस्पृष्टतदस्पृष्टयोः मध्ये ॥ 'अत्र निरूपकत्वक्रमेण उद्देशः'इतिसमाधत्ते **तथाऽपीति** । अभावस्य– दुःखास्पृष्टत्वस्य, भावनिरूप्यत्वात्,= भावाभावज्ञानयोः पौर्वापर्यनियमात्, प्रथमम्, भावस्य, उद्देशः; इति भावः ।

''ननु प्राधान्यक्रमस्य मुख्यत्वात् तदनुसारेण उद्देश एव युक्तः ।; न च 'भावज्ञानं विना कथम् अभावज्ञानम्?'इति वाच्यम्, 'दुःखास्पृष्ट'-पदघटक'दुःखस्पृष्ट'पदेनैव भावज्ञानसम्भवात्; न हि 'दुःखास्पृष्टम्'इत्येतत् अबोधकम् इष्यते ।''इति चेत्; सत्यम्; **तथापि** 'दुःखस्पृष्टत्वनिरूपकत्वं ज्ञापयितुं प्रथमोद्देशः; अन्यथा 'दुःखस्पृष्टतदस्पृष्ट'शब्दयोः 'नदीवृद्धि'आदिशब्दवत् संज्ञामात्रत्वशङ्का स्यात् ।, अत एव 'दुःखास्पृष्टम्'इति स्पष्टम् अनुद्दिश्य 'तदस्पृष्टम्'इति उद्देशः कृतः; अन्यथा '' 'दुःखस्पृष्ट'शब्दः संज्ञा एव; 'दुःखास्पृष्ट'शब्दस्तु तदन्यार्थकः''इतिशङ्काऽऽपत्तेः ।, यथोद्देशे तु 'तत्'शब्दस्य 'दुःख'पदार्थपरामर्शकत्वानुरोधेन 'दुःखस्पृष्ट'शब्दस्य यौगिकत्वलाभात् ।,

न च 'अत्र प्राधान्यज्ञापनाय दुःखास्पृष्टस्यैव प्रथमोद्देशः किं न कृतः?'इति वाच्यम्; तस्य उत्तरमूलेन ज्ञापनात् ।,

---

७. नन्वत्र

न च "एवम् उत्तरमूले 'नित्यादुःखा, स्पृष्टदुःखा' इत्यर्थानुवादात् एव उद्देशस्य संज्ञामात्रत्वशङ्कानिरासस्सम्भवात्, व्यर्थं निरूपकक्रमानुसरणम्" इति वाच्यम्; तस्य फलितार्थानुवादत्वेन शब्दार्थाबोधकत्वात् ।, फलितार्थानुवादान्यथाऽनुपपत्त्या एव शब्दार्थकल्पने तु प्रयासगौरवम् ।; इति सार्थकं निरूपकक्रमानुसरणम् ।

[ २३ भ. विषयः– अस्वतन्त्रतत्त्व-भाव चेतननिरूपणे–

अ) 'कदाचित्...तदस्पृष्टम्' इत्यस्य व्याख्याने– १) दुःखस्पृष्टयोः लक्षणे । २ दलकृत्ये– क) 'कदाचित्' इत्यस्य– कृत्यम्, विवक्षितार्थश्च । ख) प्रथमलक्षणे– '१. अत्यन्त, २. अत्यन्ताभाव-अन्' इत्येतयोः कृत्ये । ग) द्वितीयलक्षणे– '१. अत्यन्त, २. चेतनत्वे सति' इत्येतयोः कृत्ये । घ) दलकृत्योपसंहारश्च ।

आ) 'कल्पित...आगमविरुद्धत्वात्' इत्यस्य व्याख्याने– १) आशयपूर्वकम् अवतरणम् । २) 'आदि' पदसङ्ग्राह्यप्रदर्शनं सप्रयोजनम् । ३) 'प्रत्यक्षविरुद्धत्वात्' इत्यस्य अर्थः । ४) 'आगमविरुद्धत्वात्' इत्यस्य अर्थः । तदागमप्रदर्शनञ्च । ]

**कदाचिदिति** । 'दुःखसम्बन्धात्यन्ताभावानधिकरणत्वम्' दुःखस्पृष्टचेतनस्य लक्षणम्, 'चेतनत्वे सति दुःखसम्बन्धात्यन्ताभावाधिकरणत्वम्' दुःखास्पृष्टचेतनस्य; इत्यर्थः ।

एतेन "तमोयोग्यानां संसारे तमसि च दुःखसम्बन्धसत्त्वात् 'कदाचित्' इत्युक्ते तत्र अतिव्याप्तिशङ्काऽनवकाशः" इति ध्येयम्; अत्यन्ताभावानधिकरणत्वस्यैव 'कदाचित्' इत्यनेन विवक्षितत्वात् ।;

अत्र— आद्ये; सामान्येन-अभावनिवेशे, दुःखसम्बन्धप्रध्वंसाभावम् आदाय तदधिकरणेषु मुक्तेषु अव्याप्तिः स्यात् ।.

दुःखसम्बन्धाधिकरणत्वमात्रोक्तौ पुनः तेष्वेव अव्याप्तिः ।;

१. 'एतेन...सार्थकम्' इति ग्रन्थान्तरे नास्ति ।

द्वितीयेऽपि; सामान्येन-अभावनिवेशे दुःखसम्बन्धप्रध्वंसवत्सु मुक्तेषु अतिव्याप्तिः स्यात् ।,

चेतनत्वानुक्तौ जडे अतिव्याप्तिः ।

अतः सर्वमपि सार्थकम् ॥

" 'एव'शब्देन विभागपरीक्षा कृता"इत्याशयवान् आह **कल्पितत्वादिति** ।

'दुःखादीनाम्'[2]इति'आदि'पदेन सुखभयाभयकृपादीनां ग्रहणम् ।, एतच्च 'सत्सु[3] कल्पितेषु सुखादिषु कथं दुःखस्यैव कल्पितत्वम् ?'इतिशङ्कानिरासाय 'दृष्टान्तप्रदर्शनव्याजेन तेषाम् अपि कल्पितत्वम् एव अङ्गीक्रियते'इतिज्ञापनार्थम् ।;

**प्रत्यक्षविरुद्धत्वादिति** । 'अहं दुःखी'इत्यादिसाक्षिप्रत्यक्षविरुद्धत्वात्; इत्यर्थः ।,

**आगमविरुद्धत्वादिति** । 'लक्ष्म्याः नित्यनिर्दुःखत्व'प्रतिपादकआगमविरोधात्; इत्यर्थः । तथाहि आगमाः— 'न बद्धा बन्धिका सैषाप्रकृतिरविकृतिः'[5]इति वत्सश्रुतिः ।, 'द्वावेतावनादिनित्यावनादिमुक्तावनादिकृतौ नित्यकृतौ योयं परमो या च प्रकृतिः'इति गौपवनश्रुतिः ।, 'द्वौ वा व सत्यनुपक्रमौ प्रकृतिः परमश्च'इति बृहच्छ्रुतिः[6] ।, 'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तौ'इति सौपर्णश्रुतिः[7] ।, 'उपस्थितेस्तद्वचनात्'[8], 'समना[9] चासृत्युपक्रमादमृतत्वं चानुपोष्य'इत्यादि भगवद्वचनम् ।

---

२. अत्र "चेतनैक्यवादे धर्ममात्रस्य कल्पितत्वात् दुःखस्यापि कल्पितत्वम् आवश्यकम् एव; इति भावेन 'दुःखादीनाम्'इति'आदि'प्रयोगः ।"इति ग्रन्थान्तरे । ३. सत्स्व

४. 'इत्याद्याः'इत्येव ग्रन्थान्तरे । ५ ३–१९९

६. ४–४५ ७. ४–४६

८. ब्र. सू. ३–३–२४–४२. ब्र. सू. ४–२–६–७

[ २४ टी. विषयः– अस्वतन्त्रतत्त्व-भाव चेतननिरूपणे– दुःख-स्पृष्टतदस्पृष्टयोः निर्देशे–

अ) दुःखस्पृष्टतदस्पृष्टयोः सप्रयोजनम् उद्देशक्रमाद्भिन्नक्रमेण-निर्देशकतया 'नित्या...समस्तशः'इतितत्त्वसङ्ख्यानस्य अवतरणम् ।

आ) 'अन्ये'पदस्य अर्थः ।

इ) 'समस्तशः'पदस्य कृत्ये– १) निरास्यमतानुवादः । २) अस्य तन्निरासाय उक्तत्वम् । ३) तन्निरासे प्रमाणप्रदर्शनम् । ४) एतन्निरूपणाविरोधेन 'द्वेधा'इतिपूर्वोक्त'धा'प्रत्ययार्थयोजना च । ]

तथाऽपि प्राधान्यक्रमस्य मुख्यत्वात्, तदनुसारेण द्वे अपि निर्दिशति 'नित्या'इति ।

[ ७,८ त. विषयः– ७. दुःखस्पृष्टस्य निर्देशः ।
८. दुःखास्पृष्टस्य च निर्देशः । ]

**नित्यादुःखा रमा,ऽन्ये तु स्पृष्टदुःखाः समस्तशः ॥३॥**

अन्ये– चेतनाः[1] ।

ऐके तु व्यष्टिसमष्टिभेदेन जीवान् परिकल्प्य गरुडानन्तविष्वक्सेनादीन् समष्टिजीवान् अपि नित्यादुःखान् आचक्षते; तन्निरासाय 'समस्तशः'इत्युक्तम् । अत्र च आगमानां प्रामाण्यम् ।, अत एव दुःखास्पृष्टे[2] प्रभेदाभावात्, दुःखस्पृष्टापेक्षया एव 'धा'[3]प्रत्ययः पूर्वोक्तो ज्ञातव्यः ।

---

१. वि.टि. उद्धरणम् 'अन्ये इति'इति ।

२. के.टि. उद्धरणम् 'दुःखास्पृष्टप्रभेदाभावादेवेति'इति ।

३. के.टि. उद्धरणम् 'धाप्रत्यय इति'इति ।

[ २४ स. विषयः– अस्वतन्त्रतत्त्व भाव चेतनविशेषनिर्देशे–
अ) 'तथापि ...नित्येति' इत्यस्य भावः ।
आ) 'एके...ज्ञातव्यः' इत्यस्य व्याख्याने– १) 'व्यष्टिसमष्टिभेदेन'- इत्यस्य– क) अर्थः । ख) प्रसङ्गात् परमतानुवादश्च । २) 'अत्र चागमानां प्रामाण्यम्' इत्यस्य भावः । ३) 'अत एव...ज्ञातव्यः' इत्यस्य व्याख्याने– क) 'अतः' शब्दार्थः । ख) 'धाप्रत्ययः' इत्यस्य भावः, तात्पर्यञ्च । ]

**तथाऽपि प्राधान्येति** । निरूपकज्ञानं विना निरूप्यस्य ज्ञातुम् अशक्यत्वेन दुःखस्पृष्टस्य प्रथमो द्देशेऽपि, ज्ञातयोर्निर्देशे प्राधान्यक्रम एव अनुसर्तव्यः; इति भावः ॥

**व्यष्टिसमष्टिभेदेनेति** । मुक्तामुक्तभेदेन, इत्याहुः । अपरे तु, 'व्यष्टयः= ब्रह्मादिसृष्टाः, समष्टयः= विष्णुसृष्टाः' इत्याहुः ।;

**आगमानामिति** । 'द्वौ वा व सृत्यनुपक्रमौ'[1] इत्यादिसावधारण-आगमानाम् प्रमाणत्वेन, तैः तन्निरासः; इति भावः ।.

**अत एवेति** । गरुडादीनां दुःखास्पृष्टत्वाभावात् एव; इत्यर्थः ॥

**[2]धाप्रत्यय इति** । [3]एधाचो धालादेशः; इति भावः । तथाच 'प्रकारद्वैविध्योक्तिः अपवादाविषये दुःखस्पृष्टे अवान्तरभेदं सूचयति' इत्युक्तं भवति ।

[ २४ के. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतनविशेषनिर्देशे–
अ) 'तथाऽपि नित्येति' इत्यस्य व्याख्याने– १) उद्देशक्रमाद्भिन्नक्रमेण निर्देशस्य अनुपपत्तिनिवारकतया अवतरणम् । २) भावश्च ।
आ) 'अन्ये चेतना' इत्यस्य व्याख्याने– १) अन्यथाप्रतीतिनिरासा-

---

१. बृहच्छ्रुतिः ४–४५
२. एतत्प्रत्ययविषये सम्पादकीये स्पष्टीकरणं द्रष्टव्यम् ।
३. 'एधातोधालादेशः' इत्येकः पाठः ।

र्थकत्वेन अवतरणम् । २) भावश्च ।

इ) 'एके...ज्ञातव्यः'इत्यस्य व्याख्याने- १) 'व्यष्टिसमष्टि'पदयोर्विवेकः । २) 'आगमानाम्'इत्यस्य अर्थः । ३) 'अत एव...ज्ञातव्यः'-इत्यस्य व्याख्याने- क) व्याख्येयव्याख्यानभावप्रदर्शनम् । ख) अर्थः । ग) भावः । घ) अत्रोक्तार्थस्य अधस्तात् उपपादितत्वम् । ]

'ननु एवम् उद्देशक्रमानुसारेण आदौ दुःखस्पृष्टस्य निर्देष्टव्यत्वात्, दुःखास्पृष्टस्य आदौ निर्देशः अनुपपन्नः'इत्यत आह **तथाऽपीति** । "न च 'एवम् प्राधान्यक्रमस्य मुख्यत्वे प्रथमम् उद्देशोऽपि तथा किं न कृतः; तथात्वे पूर्वोत्तरग्रन्थयोः एकप्रकारत्वलाभसम्भवात् ।'इति वाच्यम्; निरूपकज्ञानं विना निरूप्यस्य ज्ञातुम् अशक्यत्वात् ।, न च 'एवम् निर्देशोऽपि तथैव स्यात्'इति वाच्यम्; उद्देशेन उभयोर्ज्ञाने सति निर्देशप्राधान्यक्रमस्यैव आदर्तुम् उचितत्वात् ।"इति भावः ॥

'अन्ये समस्तशः'इति 'रमाव्यतिरिक्तानां चेतनाचेतनरूपसर्वेषाम् अपि स्पृष्टदुःखत्वम् उच्यते'इतिप्रतीतिनिरासाय आह **अन्ये चेतना इति** । चेतनविभागस्य प्रकृतत्वेन, चेतनानाम् एव अत्र ग्रहीतुं योग्यत्वात् इति भावः ॥

**व्यष्टिसमष्टिभेदेनेति** । व्यष्टयः= मुक्ताः, समष्टयः= संसारिणः; इति विवेकः ॥

**आगमानामिति** । 'दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते । दुःखस्य योगतो भोगाद्रुद्रवीन्द्रादयोऽधमाः ।'इत्यादीनाम्; इत्यर्थः ।

'अत एव'इत्यस्यैव विवरणम् 'दुःखास्पृष्टप्रभेदाभावादेव'इति । गरुडादीनां दुःखास्पृष्टत्वे हि दुःखास्पृष्टेऽपि प्रभेदः स्यात्; न च एवम्, तस्य 'समस्तशः'इत्यनेन निरस्तत्वात्; इत्यर्थः ।,

**धाल्प्रत्यय इति** । 'धा'प्रत्ययस्य एधाचो धाल्भावः ।,

यथा च प्रकारद्वैविध्योक्तिः सत्यपवादे तद्विषयान्ये अवान्तरभेद-सूचनेनापि उपपन्ना न अपवादविषये अवान्तरभेदं सूचयति, तथा उपपादितम् अधस्तात् ।

[ २४ **वि.** विषयः– अस्वतन्त्र भाव-चेतनविशेष-निर्देशे–

अ) 'तथाऽपि...निर्येति'इत्यस्य व्याख्याने– १) 'दुःखस्पृष्टस्यैव आदौ निर्देष्टव्यत्व'शङ्कानिवारकतया अवतरणम् । २) पदार्थश्च ।

आ) मूलस्थपदानाम् अर्थः तात्पर्यञ्च ।

इ) 'अन्ये चेतनाः'इत्यस्य व्याख्याने– १) सप्रयोजनम् 'अन्य'-पदार्थसङ्कोचतया अवतरणम् । २) अर्थश्च ।

ई) 'अन्ये तु...ज्ञातव्यः'इत्यस्य व्याख्याने– १)सप्रयोजनम् मतान्तरानुवादकतया 'अन्ये तु...व्याचक्षते'इत्यस्य अवतरणम्; पदार्थश्च । २) 'तन्निरास य समस्तश इत्युक्तम्'इत्यस्य अर्थः; 'तत्पक्षे मानाभाव'रूपो भावश्च । ३) 'अत्र चागमानां प्रामाण्यम्'इत्यस्य व्याख्याने– क) स्वपक्षे साधकतया अवतरणम् । ख) पदार्थः, आगमप्रदर्शनञ्च । ४) 'अत एव...ज्ञातव्यः'-इत्यस्य व्याख्याने– क) पूर्वोक्त'धाल्'प्रत्ययवैयर्थ्यनिरासकतया अवतरणम् । ख) पदार्थश्च । ]

'ननु तर्हि तस्यैव आदौ निर्देशः कर्तव्यः'इत्याशङ्क्य आह **तथा-ऽपीति** । दुःखस्पृष्टचेतनस्य आदौ उद्देशेऽपि; इत्यर्थः । मुख्यत्वात्= उत्कृष्टत्वात्, तदनुसारेण, द्वे, अपि, निर्दिशति= 'दुःखास्पृष्टदुःखस्पृष्टे इमे' इति निरूपयति; इत्यर्थः ॥

नित्यादुःखा रमा = नित्यं दुःखसम्बन्धरहिता रमा; इत्यर्थः ।

अन्ये तु = रमाव्यतिरिक्ताः तु; स्पृष्टदुःखाः= कदाचित् सम्बद्धं दुःखं यैः ते – स्पृष्टदुःखाः– दुःखस्पृष्टाः, इति यावत् ॥

'रमाऽन्यत्वस्य जडे सत्त्वात्, 'अन्य'पदस्य तद्विशेषपरता' इत्याशयेन आह **अन्ये चेतना इति** । रमाव्यतिरिक्त अस्वतन्त्रचेतनाः इत्यर्थः ॥

'समस्तशः' इत्यस्य प्रयोजनं वक्तुं मतान्तरम् अनुवदति **अन्य इति** । अन्ये– रामानुजाः, व्यष्टिसमष्टिभेदेन, जीवान्= भगवद्व्यतिरिक्तचेतनान्, परिकल्प्य; गरुडानन्तविष्वक्सेनजयविजयादीन्, समष्टिचेतनान्, नित्यादुःखान्= नित्य-दुःखसम्बन्धशून्यान् आहुः; इत्यर्थः ।

तन्निरासाय= तेषां मतस्य, यद्वा गरुडानन्तविष्वक्सेनादीन नित्यादुःखत्वस्य, निराकरणाय; समस्तशः= सर्वशः, इति, उक्तम्; इत्यर्थः । गरुडानन्तादीनाम् दुःखास्पृष्टत्वे मानाभावात्, तन्मतं न युक्तम्; इति भावः ।

न केवलं मानाभावः, किन्तु अत्रास्ति प्रमाणञ्च; इत्याह **अत्र चेति** । अत्र= गरुडानन्तादीनां दुःखस्पृष्टत्वे,

'निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभागिनः' इति पद्मपुराणवचनम्,

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥' इति गीतावचनम्,[1]

तद्व्याख्यानरूपा–

'ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वात् अक्षरा तत्परो हरिः ॥' इति श्रुतिः,

'ब्रह्मशेषसुपर्णेशशुक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः ॥' इति तद्व्याख्यानरूपं स्कान्दपुराणवाक्यम्,

---

१. १५अ. १६श्लो.

'या मारुताद्भीमभश्च पूर्वं शेषं सुपर्णं गिरिशं सुरेन्द्रम् ।
चतुर्मुखाद्यांश्चतुरः कुमारान्सा द्रौपदीनाम बभूव भूमौ ।'इतिब्रह्माण्ड-पुराणवाक्यम्,

'नित्यादुःखा रमा स्त्रीषु पुरुषेषु हरिस्तथा ।
तदन्यच्चेतनं सर्वं दुःखस्पृष्टं नराधिप ॥'इति ब्रह्माणपुराण वाक्यम्; इत्याद्यागमानां प्रमाणत्वं च; इत्यर्थः ।

'ननु दुःखास्पृष्टचेतनस्य एकत्वे, पूर्वोक्त'धाल्'प्रत्ययो न युक्तः'इत्यत आह **अत एवेति** । परतन्त्ररूपदुःखास्पृष्टचेतनस्य एकत्वात् एव, दुःखा-स्पृष्टप्रभेदाभावात्– अवान्तरप्रभेदाभावात्, दुःखस्पृष्टापेक्षया, एव, पूर्वोक्तः = पूर्ववाक्योक्तः, 'धाल्'प्रत्ययः ज्ञातव्यः; न तु दुःखास्पृष्टचेतनापेक्षया; इत्यर्थः ।

[ २४ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतनविशेष-निर्देशे–
अ) 'तथाऽपि ..नित्येति'इत्यस्य व्याख्याने– १) शङ्कात्रयनिवारकतया अवतरणम् । २) शेषश्च ।
आ) 'अन्ये चेतनाः'इत्यस्य व्याख्याने– १) जडसङ्ग्राह्यत्वापत्ति-निवारकतया अवतरणम् । २) भावश्च ।
इ) 'एके..ज्ञातव्यः'इत्यस्य व्याख्याने– १) 'व्यष्टिसमष्टिभेदेन'इत्यस्य निर्वचनम् । २) उक्त-आगमप्रामाण्य-लब्ध-अर्थान्तरसिद्-युक्तितया 'अत एव ...ज्ञातव्यः'इत्यस्य अवतरणम् । ]

''विभागपरेषु पूर्वोत्तरवाक्येषु अन्तर्निविष्टत्वेन, 'विभागपरम् उत्तर-वाक्यम्'इति वक्तव्यम्; तदयुक्तम्, विभागस्य अप्रतीतेः ।, न च 'विभक्तस्य निर्देश'परम् =इति; स्वतन्त्रो भगवान्विष्णुः'इतिवत् एकस्य निर्देशत्वे 'स्पृष्ट-दुःखा'इत्यस्य वैयर्थ्यापातात् ।, न च 'उभयोद्देशपरम् इदम्' इति; तथापि उद्देशक्रमोल्लङ्घने कारणाभावेन यथोद्देशं वक्तव्यत्वात् ।'' इति–इमाः शङ्काः

परिहरन् अवतारयति तथाऽपीति । 'यद्यपि एवम् उद्देशक्रमेण वक्तव्यम्'इति शेषः ॥

'अन्ये'इति अन्यत्वावच्छेदेन प्रतीतेः, जडस्यापि सङ्ग्राह्यत्वापत्त्या बाधप्रसङ्गात्; अत आह अन्य इति । प्रकरणसङ्कोचकम्; इति भावः ॥

व्यष्टीति । 'अशुङ् भोजने'इति धातोः 'सम्यक् अश्नुवन्ति दुःखम्' इति समष्टयः, 'वि'शब्दस्य 'नञ्'अर्थत्वात् 'न भुञ्जते दुःखम्'इति व्यष्टयः = जीवाः; इति, भेदेन= प्रकारेण; इत्यर्थः ।

'नित्यादुःखैकत्वे प्रमाणसद्भावेन अन्यदपि सिद्धम्'इत्याह अत एवेति ।

[ २४ का. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतनविशेष-निर्देशे—

अ) 'तथाऽपि...नित्येति'इत्यस्य व्याख्याने— १) प्रसक्तक्रमत्यागसहित-उत्तरमूलावतारकतया अवतरणम् । २) मुख्यत्वस्पष्टीकरणञ्च ।

आ) निवर्त्यशङ्काप्रदर्शनपूर्वकम् 'चेतनाः'इत्यस्य अवतरणम् ।

इ) 'एके ..ज्ञातव्यः'इत्यस्य व्याख्याने— १) 'व्यष्टिसमष्टिभेदेन'इत्यस्य अर्थः । २) 'अत्र चागमानां प्रामाण्यम्'इत्यस्य व्याख्याने— आगमप्रदर्शनम् । ३) 'अत एव...ज्ञातव्यः'इत्यस्य द्वेधा व्याख्याने— क) अर्थः, भावश्च । ख) मतान्तरेण अत्र व्याख्यानव्याख्येयभावप्रदर्शनञ्च । ]

प्रक्रान्तक्रमपरित्यागबीजं दर्शयन् उत्तरमूलम् अवतारयति तथाऽपीति । मुख्यत्वञ्च क्रमान्तरात् अवश्यज्ञेयत्वेन ज्ञेयम् ॥

जडस्य दुःखस्पृष्टत्वायोगात् आह चेतना इति ॥

व्यष्टीति । मुक्तामुक्तभेदेन; इत्यर्थः ।

आगमानामिति । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।', 'निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभागिनः ।', 'दुःखस्य

१. 'रति'इत्यपि पाठः उपलभ्यते । २. पद्मपुराणे

योगतो भोगाद्दुर्दर्वान्द्रादयोऽधमाः ।'इत्यागमानाम्; इत्यर्थः ।

अत एव रमातिरिक्तानां सामस्त्येन दुःखस्पृष्टत्वादेव, दुःखास्पृष्टपरतन्त्रचेतने प्रभेदाभावः; ततश्च दुःखस्पृष्टानां प्रभेदाभिप्रायेणैव 'द्वेधैव'इति 'एधाच्'प्रत्ययप्रयोगः; इत्यर्थः । अन्यथा 'द्वे चेतने'इत्यवक्ष्यत्; इति भावः ।

" 'अत एव'इत्यस्य 'अभावात्'इत्यन्तं विवरणम्''इत्यपि आहुः ।

[ २४ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतनविशेषनिर्देशे–

अ 'एके...ज्ञातव्यः'इत्यस्य व्याख्याने– १) 'व्यष्टि..आचक्षते'इत्यस्य पदार्थः । २) 'अत्र चागमानां प्रामाण्यम्'इत्यस्य व्याख्याने– क) अर्थः । ख) विषयभेदेन आगमप्रदर्शनम् । ३) 'अत एव...ज्ञातव्यः'इत्यस्य अर्थः । ख) दुःखस्पृष्टापेक्षयैव'इत्यस्य अर्थः; ग्रन्थान्तरोक्तभावश्च । ]

**व्यष्टिसमष्टीति** । व्यष्टयः= मुक्ताः, समष्टयः= संसारिणः, अनन्त =शेषः ।

**अत्र चागमानामिति** । 'लक्ष्मीव्यतिरिक्तयावदस्वतन्त्रचेतनाः स्पृष्टदुःखा'इत्यत्र, आगमाः प्रमाणम्; इत्यर्थः । तथाहि—

'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।[१]
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ॥'इति श्रुतिः,

'ब्रह्मशेषसुपर्णेशशुक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परोहरिः ॥'इति स्कान्दे ।,

शरीरक्षरणवतां च दुःखं नियतम् एव; स्पष्टं च दुःखम् अवगम्यते गरुडस्य उद्योगपर्वणि मातलिगालवोपाख्याने, भविष्योत्तरे च शेषस्य; इति ।

**अत एवेति** । दुःखास्पृष्टचेतनस्य एकव्यक्तिकत्वात् एव; इत्यर्थः ॥

---

१. 'इत्याद्यागमाः प्रमाणम् इत्यर्थः'इत्येव ग्रन्थान्तरे ।

दुःखस्पृष्टापेक्षयैवेति । 'प्रकारपुरस्कारेण निरूपकस्य प्रकारिवृत्तित्वसूचकतामात्रम्, न तु नियमेन तज्ज्ञापकत्वम्'इति प्रागुक्तरीत्या 'द्वेधैव चेतनम्'-इति'धाल्'अर्थक'एधाच्'प्रत्ययः दुःखस्पृष्टचेतनापेक्षया एव प्रयुक्तो ज्ञातव्यः; इत्यर्थः ।

[ २५ टी. विषयः– अस्वतन्त्रतत्त्व भाव-चेतन-दुःखस्पृष्टद्वैविध्ये–

१) सप्रयोजनं दुःखस्पृष्टविभागोक्तितया 'स्पृष्टदुःखा...द्विधा'इति मूलस्य अवतरणम् ।

२) पदार्थे– क) 'विमुक्ताः'इत्यस्य स्पष्टीकरणम् । ख) 'दुःखसंस्थाः'-इत्यस्य अर्थः ।

३) 'च'शब्दस्य अन्वयः ।

४) एतदुद्देशक्रमनिमित्तप्रदर्शनञ्च । ]

अत एव तद्विभागम् आह 'स्पृष्ट'इति ।

[ ९ त. विषयः– दुःखस्पृष्टद्वैविध्यम् । ]

**स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ॥३॥**

**विमुक्ताः दुःखात्, दुःखसंस्थाः= वर्तमानदुःखाः ।**

**'च'शब्दः 'दुःखसंस्थाः'इत्यतःपरं योज्यः ।**

**अत्र प्राधान्यक्रमेण उद्देशः ।**

२५ स. विषयः– अस्वतन्त्रतत्त्व भाव चेतन-दुःखस्पृष्टद्वैविध्ये–

अ) 'अतः...स्पृष्टेति'इत्यस्य व्याख्याने– १) पूर्वसम्बन्धप्रदर्शकतया अवतरणम् । २) अर्थश्च ।

---

२. 'तथाच द्वेधैव चेतनम्'इति छत्रिन्यायेन औपचारिकप्रयोगः; इति भावः ।'इति ग्रन्थान्तरपाठः । १. का.टि. उद्धरणम् 'अत्र चेति'इति ।

आ) 'विमुक्ताः...वर्तमानदुःखाः' इत्यस्य व्याख्याने– १) 'दुःखसंस्थानामपि विमुक्तत्व'शङ्कानिवारकतया 'विमुक्ताः दुःखात्' इत्यस्य अवतरणम् । २) 'दुःखसंस्थपदान्यथाप्रतीतिनिरासकतया 'दुःखसंस्था वर्तमानदुःखाः' इत्यस्य अवतरणम्; विग्रहार्थश्च । ]

अत एवाह **अत एवेति** । अपवादाभावेन दुःखस्पृष्टावान्तरभेदस्य प्रकारद्वित्वोक्त्या सूचितत्वात् एव; इत्यर्थः ।

'ननु दुःखसंस्थानाम् अपि दुःखात् विमुक्तत्वात्, अयं विभागः अनुपपन्नः' इत्यत आह **विमुक्ता दुःखादिति** ।,

स्पृष्टदुःखानां दुःखाधेयत्वानुपपत्तेः आह **वर्तमानदुःखा इति** । तथाच दुःखस्य संस्थितिः येषु, ते दुःखसंस्थाः; इत्युक्तं भवति ।

[ २५ **के.** विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्टद्वैविध्ये–

अ) 'अत ..स्पृष्टेति' इत्यस्य व्याख्याने– १) पूर्वसम्बन्धप्रदर्शकतया अवतरणम् । २) पदार्थश्च ।

आ) 'विमुक्ताः...वर्तमानदुःखाः' इत्यस्य व्याख्याने–

१) 'तमः प्राप्तानामपि मुक्तत्व'शङ्कानिरासकतया 'विमुक्ताः दुःखात्' इत्यस्य– क) अवतरणम् । ख) भावश्च । २) 'दुःखसंस्थ'पदस्य अन्यथाप्रतीतिनिरासार्थकतया 'दुःखसंस्था वर्तमानदुःखाः' इत्यस्य व्याख्याने– क) अवतरणम् । ख) पदार्थः, विग्रहश्च । ग) 'दुःखसंस्थाः' इत्यत्र विशेषणपरनिपातस्य युक्तत्वम् । घ) 'संस्थ'पदकृत्यम् । ङ) मतान्तरेण पदार्थश्च ।

इ) 'च...योज्यः' इत्यस्य व्याख्याने– १) दुःखसंस्थविभागप्रतीतिनिरासकतया अवतरणम् । २) पदार्थश्च ।

ई) 'अत्र...उद्देशः' इत्यस्य व्याख्याने– १) निर्देशक्रमान्तरशङ्कानिरासकतया अवतरणम् । अभिप्रायश्च । ]

अत एव आह **अत एवेति** । अपवादाभावेन दुःखस्पृष्टावान्तरभेदस्य प्रकारद्वित्वोक्त्या सूचितत्वात् एव; इत्यर्थः ॥

मूले 'विमुक्ताः' इत्यस्य 'संसारात् मुक्ताः' इत्यर्थकत्वे, तमःप्राप्तानाम् अपि संसारात् मुक्तत्वेन तेषाम् अपि अत्रैव प्राप्तौ 'ते च प्राप्तान्धतमसः' इत्युत्तर-ग्रन्थवैयर्थ्यम्; इत्यतः व्याचष्टे **विमुक्ता दुःखादिति**। तमःप्राप्तानां दुःख-विमुक्तत्वाभावात् न तेषाम् अत्र ग्रहणम्, इति न उत्तरग्रन्थवैयर्थ्यम्; इति भावः।

'दुःखसंस्थाः' इतिमूले 'दुःखे, संस्थाः= वर्तमानाः' इति भाति; तद-नुपपन्नम्, जीवानाम् एव दुःखाधिकरणत्वेन दुःखाऽऽश्रयत्वाभावात्; इत्यतः तद्व्याचष्टे **दुःखसंस्था इति**॥ 'सम्यक् तिष्ठति' इति संस्थम्= वर्त-मानम्, इति यावत्; संस्थं दुःखं येषां ते॥ 'वाऽऽहिताग्न्यादिषु' इति विशे-षणस्य परत्वात्। तेन 'दुःखसंस्थाः' इतिमूलस्य 'वर्तमानदुःखाः' इतिव्याख्याने न उक्तानुपपत्तिः; इत्यभिप्रायः।,

'न च सुषुप्त्यवस्थापन्नेषु अव्याप्तिः, तत्रापि शरीरेन्द्रियादिरूपस्य दुःखस्य वर्तमानत्वात्;' इत्याहुः।;

'वर्तमानदुःख' पदेन दुःखप्रागभाव एव विवक्षितः; इत्यपि आहुः॥

'स्पृष्टदुःखत्वेन विमुक्तत्वेन च दुःखसंस्थानाम् अयं विभागः' इत्या-भाति; तत् प्रकृतानुपयुक्तम्, दुःखस्पृष्टानां भेदस्य प्रक्रान्तत्वात्; इत्यतः 'न अत्र यथास्थितः 'च' शब्दः, किन्तु भिन्नक्रमः' इत्यभिप्रेत्य आह **चशब्द इति**। 'दुःखसंस्थाः' इत्यतःपरम् = 'दुःखसंस्थाः' इत्येतदनन्तरम्, योज्यः॥

'ननु अत्र मूले दुःखसंस्थानां प्रथमग्रहणं भवेत्, न मुक्तानाम्; अनु-पदम् एव दुःखसंस्थप्रभेदकथनानन्तरं मुक्तप्रभेदकथनात्; तत् कथं मुक्तानाम् आदौ निर्देशः?' इत्यत आह **अत्रेति**। 'तर्हि प्राधान्यक्रमानुसारेण एव प्रथमं मुक्तभेदः कथनीयः' इत्येतत्तु अनुपदम् एव आशङ्क्य निराकरिष्यते; इत्यवधेयम्।

१. त.सं.श्लो. ७. २. पा.सू. २-२-३७/कौ सू. ९००

[ २५ **वि.** विषयः– अस्वतन्त्रतत्त्व भाव-चेतन दुःखस्पृष्टद्वैविध्ये–
अ) 'अतः...स्पृष्टेति' इत्यस्य व्याख्याने– पदार्थः; विग्रहरूपतात्पर्यञ्च ।
आ) 'विमुक्ताः...वर्तमानदुःखाः' इत्यस्य व्याख्याने– १) 'विमुक्ताः दुःखात्' इत्यस्य व्याख्याने– क) निगडाद्विमुक्तत्वप्रतीतिनिरासार्थकतया अन्वयपूर्वकम् अवतरणम् । ख) सप्रयोजनम् 'दुःख' पदस्य उपलक्ष्यकत्वञ्च । २) 'दुःखसंस्थाः वर्तमानदुःखा' इत्यस्य व्याख्याने– क) अभिप्रेतविग्रहार्थोक्तितया अवतरणम् । ख) सप्रयोजनम् 'दुःख' पदसङ्ग्राह्यप्रदर्शनञ्च ।
इ) 'च...योज्यः' इत्यस्य व्याख्याने– १) अन्यथाऽन्वयनिरासार्थकतया अवतरतम् । २) पदार्थश्च ।
ई) उद्देशक्रमान्तरशङ्कानिवारकतया 'अत्र...उद्देशः' इत्यस्य अवतरणम्; अर्थश्च । ]

**अत एवेति** । दुःखस्पृष्टचेतने प्रभेदसद्भावात्, एव, तस्य= दुःखस्पृष्टचेतनस्य, प्रभेदम्, आह; इत्यर्थः । स्पृष्टं दुःखं यैः ते, तथा– दुःखस्पृष्टाः; इति यावत् ॥

'विमुक्ताः' इत्यस्य 'निगडात् विमुक्ताः' इत्यर्थप्रतीतिनिरासाय आह **दुःखात् विमुक्ता इति** । 'दुःख' पदेन तत्कारणम् अविद्यादिकम् उपलक्ष्यते; इति न सुप्तव्यवच्छेदः ।

'दुखसंस्थाः' इत्यस्य 'संस्था=स्थितिः, येषु, ते 'तथा' इतिविग्रहम् अभिप्रेत्य अर्थम् आह **वर्तमानदुःखा इति** । 'दुःख' पदेन अविद्यादिकम् अपि गृह्यते; तेन सुप्तसङ्ग्रहोऽपि भवति ॥

अत्र 'च' शब्दस्य यथाश्रुतपदान्वयायोगात् आह **च शब्द इति** । दुःखसंस्था इत्यतः = 'दुःखसंस्थाः' इत्येतस्मात्, पैरम्= पश्चाद्भावी, योज्यः = अन्वेतव्यः; इत्यर्थः ॥

'ननु दुखस्पृष्टदुःखास्पृष्टयोः मध्ये अभावस्य भावनिरूप्यत्वात् दुःखस्पृष्टस्य आदौ उद्देशः कृतः, तथा दुःखसंस्थविमुक्तयोः मध्ये अभावस्य

---
१. परः

भावनिरूप्यत्वात् दुःखसंस्थानां प्रथमम् उद्देशः कर्तव्यः' इत्यत आह अत्रेति । अनयोः मध्ये विमुक्तानाम् उत्कृष्टत्वरूपप्राधान्यात्, प्राधान्यक्रमेण तेषाम् आदौ उद्देशः कृतः; इत्यर्थः ।

[ २५ मु. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्टद्वैविध्ये—

अ) 'अतः...स्पृष्टेति' इत्यस्य व्याख्याने— १) त्रिविधशङ्कानिरासकतया अवतरणम् । २) पदार्थश्च ।

आ) 'विमुक्ताः...वर्तमानदुःखाः' इत्यस्य व्याख्याने— १) 'दुःखसंस्थानाम् अपि मुक्तत्व' शङ्कानिवारकतया 'विमुक्ताः दुखात्' इत्यस्य अवतरणम् अर्थश्च ; २) '' 'दुःखसंस्थ' पदार्थानिर्धारणात् विभागानुपपत्ति'' शङ्कानिवारकतया 'दुःखसंस्था वर्तमानदुःखाः' इत्यस्य अवतरणम् ।

इ) 'च...योज्यः' इत्यस्य व्याख्याने— समुच्चयान्वेषणपुरःसरं समुच्चयोक्तिनया अवतरणम् ।

ई) 'अत्र...उद्देशः' इत्यस्य द्वेधा व्याख्याने—

१) अन्यथायोजनानिरासकतया— क) अवतरणम् । ख) शेषः । ग) अत्र-अभावज्ञाननिरूपकभावज्ञानस्य विभज्यपदेनैव सम्भवः इत्यभिप्रायश्च । २) प्रकारान्तरेण उद्देशक्रमप्रकारविषयकसन्देहनिवारकतया अवतरणञ्च । ]

''ननु 'उत्तरमूलम् अनुवादरूपम्' इति प्रतीयते; तदयुक्तम्, प्रयोजनाभावात् ।, न च 'तान् उद्दिश्य द्विधात्वं विधीयते' इति; संज्ञाविधानस्य असङ्गत्वात् ।, न च 'विभागविधानम् एतत्' इति; तथापि नित्यादुःखविभागम् अनुक्त्वा स्पृष्टदुःखविभागकथने निमित्ताभावात् ।'' इति इमाः शङ्काः परिहरन् अवतारयति **अत एवेति** । स्पृष्टदुःखभेदस्यैव प्रमितत्वात् इत्यर्थः ॥

'यस्मात्कस्माच्चित् विमुक्तत्वम् दुःखसंस्थानाम् अस्ति इति नायं विभागः उपपन्नः' इत्यत आह **विमुक्ता इति** । कालविशेषम् आरभ्य सर्वथा दुःखानाश्रयाः; इत्यर्थः ।

" 'दुःखसंस्थाः'इत्यस्य 'दुःखे सम्यक् तिष्ठन्ति'इत्यर्थत्वे बाधात्, दुःखसम्बद्धत्वं तदर्थत्वेन वर्णनीयम्; तदपि अयुक्तम्, यदाकदाचित् दुःखसम्बद्धत्वस्य मुक्तानाम् अपि सत्त्वेन विभागैनुपपत्तेः"इत्यत आह **दुःखसंस्था इति** ॥

'विमुक्ताश्च'इति 'च'शब्दः पूर्वोक्तसमुच्चायकः न सम्भवति, पूर्वम् उचितसमुच्चयस्य अनुक्तेः; नापि वक्ष्यमाणसमुच्चायकः, तस्य अस्वरसत्वात्; इत्यत आह **चशब्द इति** ॥

ननु 'दुःखसंस्था विमुक्ताश्च'इति योजनायां यथास्थान एव 'च' शब्दः उपपन्नः; इत्यत आह **अत्रेति** । उद्देशः 'उचितः'इति शेषः ॥ अयम् अभिप्रायः— उत्सर्गतः प्राधान्यक्रमेण एव उद्देष्टव्यत्वात्, यथास्थितयोजनायां क्रमस्य अप्राधान्यापत्तेः; व्यत्यासेन क्रमः; इति । न च 'अभावस्य भावनिरूप्यत्वात् बाधकात्, अप्रधानक्रम एव अनुसर्तुम् उचितः' इति; 'विमुक्त'पदोक्त-दुःखानाश्रयत्वरूप-अभावस्य दुःखाश्रयत्वरूपप्रतियोगिज्ञानस्य 'दुःखस्पृष्टम्'इतिविभज्यपदेनैव उपपत्तेः तदर्थं प्राधान्यक्रमः अनुसर्तव्यः; इति युक्ता एव व्यत्यासेन योजना इति ।

अथवा 'प्राधान्याप्राधान्यक्रमाभ्याम् उद्देशोपलम्भात्, अत्र केन क्रमेण उद्देशः?'इतिसन्देहे तन्निवृत्त्यर्थम् आह **अत्रेति** ।

[ **२५ का.** विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्टद्वैविध्ये–

अ) 'अतः....स्पृष्टेति'इत्यस्य अर्थः ।

आ) 'विमुक्ताः...वर्तमानदुःखाः'इत्यस्य व्याख्याने– १) 'विमुक्ताः दुःखात्'इत्यस्य व्याख्याने– क) निगडमुक्तवारकतया 'दुःखात्'इत्यस्य अवतरणम् । ख) 'वि'पदस्य कृत्यम्, अर्थश्च । ग) दुःखविमुक्तत्वस्य निष्कर्षः ।

---

१. विभागानुपपत्तिः

२) 'दुःखसंस्थाः वर्तमानदुःखाः' इत्यस्य व्याख्याने– क) 'दुःखसंस्थ'पदान्यथाप्रतीतिनिवारकतया 'वर्तमानदुःखाः' इत्यस्य अवतरणम् । ख) वर्तमानदुःखत्वस्य सप्रयोजनः दलकृत्यस्पष्टीकरणसहितश्च परिष्कारः ।

इ) 'च...योज्यः' इत्यस्य व्याख्याने– क) दुःखस्पृष्टसमुच्चयनिवारकतया अवतरणम् । ख) भावः । ग) 'इत्यतः परं योज्यः' इतिप्रयोगस्य कृत्यञ्च ।

ई) 'अत्र...उद्देशः' इत्यस्य व्याख्याने– १) उद्देशक्रमनिमित्तोक्तितया अवतरणम् । २) भावश्च । ]

**अत एवेति** । दुःखस्पृष्टापेक्षया 'एधाच्'प्रत्यययोगात् एव; इत्यर्थः ॥ निगडमुक्तवारणाय आह **दुःखादिति** । दुःखमुक्तत्वस्य सुषुप्त्यादिसाधारण्यात् आत्यन्तिकदुःखनिवृत्तिलाभाय 'वि'शब्दः ।, आत्यन्तिकत्वञ्च दुःखप्रागभावानवच्छिन्नत्वम् । तथा च 'दुःखप्रागभावानवच्छिन्नदुःखाभावविशिष्टत्वम्= दुःखविमुक्तत्वम्' इति निष्कर्षः ।

दुःखवृत्तित्वरूपदुःखसंस्थत्वस्य जीवेषु असम्भवात् आह **वर्तमान दुःखा इति** ।;

'ननु दुःखविमुक्तानाम् अपि कदाचित वर्तमानदुःखत्वात्, कथम् अयं विभागः; विभिन्नदेशयोः एव विभाजकत्वात् ?' इति चेत्; न. समानकालविभिन्नदेशयोः इव विभिन्नकालसमानदेशयोः अपि धर्मयोः विभाजकत्वे बाधकाभावात् । 'समानदेशयोः परस्परधर्मिव्यावर्तकत्वाभावात् कथं विभाजकत्वम् ?' इति चेत्; न, परस्परोपलक्षितधर्मिस्वरूपव्यावर्तकत्वाभावेऽपि परस्परविशिष्टव्यावर्तकत्वेन विभाजकत्वोपपत्तेः; अत एव 'अयं विशिष्टविभागः' इति गीयते ।,

ननु 'एवम् सुषुप्तिविशिष्टानाम् उभयत्र अप्रवेशात्, त्रैविध्यापत्तिः' इति चेत्; न, 'दुःख-पदस्य दुःखप्रागभावपरत्वात्' इति केचित्, 'दुःखहेतु-अविद्या

परत्वात्’इति अन्ये; **वस्तुतस्तु** एतत्कल्पप्रागभावानधिकरणकालवृत्तिदुःखोपलक्षितत्वम्= वर्तमानदुःखत्वम् । सृज्यजीवसङ्ग्रहाय ‘एतत्कल्पवृत्तित्वम्’ अपेक्षितम्; तेषाम् एतत्कल्पीयदुःखशून्यत्वेऽपि एतत्कल्पप्रागभावानधिकरणीभूत-उत्तरोत्तरकल्पीयदुःखवत्त्वात् सङ्ग्रहः । सुप्तानाम् अपि दुःखोपलक्षितत्वात्, न दोषः । न च ‘तादृशदुःखोऽपलक्षितत्वस्य दुःखविमुक्तसाधारण्यात् साङ्कर्यम्’इति वाच्यम्; प्राक्कालीयमुक्तानाम् एव ‘दुःखविमुक्त’पदेन ग्रहणात् न च ‘एवम् दुःखविमुक्तत्वस्य एतत्कल्पीयदुःखासमानाधिकरणदुःखध्वंसवत्त्व, रूपदुःखविमुक्तत्वस्य विवक्षितत्वात् ।, न च एवम् सृज्यजीवेषु अतिव्याप्तिः तेषाम् एतत्कल्पीयदुःखासमानाधिकरण-उत्तरकल्पीयदुःखध्वंसवत्त्वात्’इति वाच्यम्; पूर्वकल्पीयत्वेन दुःखस्य एतत्कल्पीयत्वेन वा दुःखध्वंसस्य विशेषणीयत्वात् ।, अत एव ‘ध्वंस’पदम् अपि अर्थवत्; दुःखाभाव’मात्रोपादाने दुःखप्रागभावम् आदाय सृज्येषु अतिव्याप्तेः ॥ एवम् साङ्कर्याभावात् तमोयोग्यविभागग्रन्थवत् स्वरूपविभागपर एव अयं ग्रन्थः; इति अवधेयम् ।

‘विमुक्ताश्च’इति ‘च’शब्दस्य स्पृष्टदुःखसमुच्चायकत्वप्रतीतिनिरासाय आह **‘च’शब्द** इति । तथा च उक्तसमुच्चायकेन अनेन विवक्षितस्य दुःखसंस्थसमुच्चयस्य लाभः; इति भावः ।

यद्यपि ‘तत्र चान्यत्र च प्रसिद्धानाम्’इत्यादौ ‘च’शब्दस्य वक्ष्यमाणसमुच्चायकत्वम् अपि अस्ति, तथाऽपि उक्तसमुच्चायक‘च’शब्दान्तरसमभिव्याहृतस्यैव तथात्वम्; इत्याशयेन ‘दुःखसंस्थसमुच्चायकः’इत्यनुक्त्वा ‘दुःखसंस्था इत्यतःपरं योज्यः’इत्युक्तम् ॥

विमुक्तानां प्रथमोद्देशे निमित्तम् आह **अत्र चेति** । बद्धमुक्तयोः मुक्तस्य प्राधान्यं प्रसिद्धम् एव; इति भावः ।

---

१. सृज्यातिव्याप्तेः

[ २५ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन दुःखस्पृष्टद्वैविध्ये–

अ) 'अत...स्पृष्टेति' इत्यस्य व्याख्याने– 'अत एव' इत्यस्य अर्थः ।

आ) 'विमुक्ताः...वर्तमानदुःखाः' इत्यस्य व्याख्याने– १) 'विमुक्ताः दुःखात्' इत्यस्य व्याख्याने– 'प्राप्तान्धतमसामपि मुक्तत्व' शङ्कावारकतया अवतरणम् । २) 'दुःखसंस्थाः वर्तमानदुःखाः' इत्यस्य व्याख्याने– अन्यथाप्रतीतिनिवारकतया अवतरणम् ।

इ) 'च...योज्यः' इत्यस्य व्याख्याने – 'च' शब्दवैयर्थ्यनिरासकतया अवतरणम् । ]

**अत एवेति** । 'थाल्' प्रत्ययेन दुःखस्पृष्टचेतने दुःखस्पृष्टचेतने अवान्तरभेदस्य ज्ञापितत्वात् एव; इत्यर्थः ॥

प्राप्तान्धतमसाम् अपि लिङ्गशरीरात् मुक्तत्वेन 'मुक्त' शब्देन तेषाम् अपि ग्रहणे, वक्ष्यमाणमुक्तविभागादिविरोधापत्तेः; अपेक्षिताध्याहारेण व्याख्याति **विमुक्ता दुःखादिति** ।

'दुःखाधाराणां कथं दुःखाऽऽधेयत्वम्?' इत्यतः 'दुःखसंस्थ' पदस्य अभिप्रेतम् अर्थम् आह **दुःखसंस्था इति** ॥

स्पृष्टदुःखविभागे विमुक्तानाम् एव प्रथमम् उद्दिष्टत्वेन अत्र 'च'-शब्दो व्यर्थः; इत्यत आह **च शब्द इति** ।

[ २६ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट दुःखसंस्थनिरूपणे–

१) दुःखसंस्थप्रभेदोक्तितया 'दुःखसंस्था...द्विधा' इतिमूलस्य अवतरणम् । २) 'अयोग्याः' इत्यस्य स्पष्टीकरणम् । ३) 'च' शब्दयोजना ४) मुक्तियोग्यादि-उद्देशक्रमनिमित्तम् । ५) विमुक्तभेदापेक्षया दुःखसंस्थभेदवचनस्य प्राथम्यनिमित्तञ्च । ]

दुखसंस्थानां प्रभेदम् आह दुखसंस्था इति ।

[ १० त. विषयः– दुःखसंस्थद्वैविध्यम् । ]

# दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥४॥

अयोग्याः मुक्तेः ।

'अयोग्याः' इत्यतः परं 'च'शब्दो ज्ञातव्यः ।

'अत्रापि तदेव उद्देशक्रमे निमित्तम् ।

ननु च प्राधान्यात् विमुक्तभेदः प्रथमं वक्तव्यः; सत्यम्; योग्यायोग्यभेदस्य दुःखसंस्थेषु एव भावात्, तदभिधानानन्तरं मुक्तियोग्यभेदकथनस्य सौकर्यात्, क्रमोल्लङ्घनम् ।

[ २६ स. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-द्वैवि-ये–

अ) अन्यथाप्रतीतिनिरासकतया 'अयोग्याः मुक्तेः'इत्यस्य अवतरणम् ।

आ) द्वैवि-यान्तरसमुच्चायकत्वनिवारकतया 'अयोग्या इत्यतःपरं च-शब्दो ज्ञातव्यः'इत्यस्य अवतरणम् ।

इ) 'तदेव'इत्यस्य अर्थः ।

ई) ननु ..क्रमोल्लङ्घनम्'इत्यस्यव्याख्याने– १ ' मुक्तविभागस्यैवात्र अकर्तव्यत्व'शङ्कात्वेन 'ननु...वक्तव्यः'इत्यस्य अवतरणम् । २) समाधायकतया 'सत्यम्...क्रमोल्लङ्घनम्'इत्यस्य– क) अवतरणम्, भावश्च । ख) क्रमान्तरेण विभागापेक्षया अस्मिन्नेव क्रमे वैशिष्ट्यम् । अज्ञानमूलकशङ्कानिवारकतया 'योग्यायोग्यभेदस्य दुःखसंस्थेष्वेव भावात्'इत्यस्य अवतरणम्, तात्पर्यञ्च । ]

'ननु मुक्तियोग्यानाम् अपि तमोयोग्यत्वात् योग्यायोग्यभेदेन विभागः अनुपपन्नः'इत्यत आह **अयोग्या मुक्तेरिति** ॥

दुःखसंस्थानां प्रकारान्तरेण द्वैविध्यस्य अनुक्तत्वात्, 'इति च द्विधा'-इति-अनुपपन्नम्; इत्यत आह **अयोग्या इत्यत इति** ॥

तदेवेति । प्राधान्यम् एव; इत्यर्थः ॥

"ननु 'स्पृष्टदुःखाः विमुक्ताश्च'इतिविभागानन्तरं 'देवर्षि'इत्यादिना मुक्तविभाग एव कर्तव्यः, प्राधान्यात्; तत्परित्यागेन 'दुःखसंस्था मुक्तियोग्याः'-इत्यादिविभागः अनुपपन्नः"इत्यभिप्रेत्य शङ्कते नन्विति ।

समाधत्ते सत्यमिति । अयं भावः— यदि मुक्तभेदं ऋष्यादिभेदेन आदौ अभिधाय पश्चात् दुःखसंस्थानां योग्यायोग्यविभागम् उक्त्वा मुक्तियोग्यानाम् अपि ऋष्यादिभेदेन पञ्चविधत्वम् उच्यते, तदा उक्तिगौरवम्; यदा दुःखसंस्थानां योग्यायोग्यविभागानन्तरं विमुक्तानां पञ्चविधत्वम् उक्त्वा मुक्तियोग्येषु 'एवं विमुक्तियोग्याश्च'इति तदतिदेशः, तदा उक्तिलाघवम्; इति ।,

यद्यपि प्राधानेन विमुक्तभेदकथनानन्तरं दुःखसंस्थान् विभज्य तत्प्रभेदमुक्तियोग्यान् 'योग्या विमुक्तवत् भिन्नाः'इति अतिदेष्टुम् शक्यते, तथाऽपि 'एवं विमुक्तियोग्याश्च'इत्यनेनैव विभागविशेषातिदेशः सिध्यति इति बोध्यम् ।, अत एव वक्ष्यति " 'देवर्ष्यादिभेदेन पञ्चधा'इत्यस्यानुकर्षणार्थश्चकारः" इति ।;

"ननु कथम् एवम् अतिदेष्टुं शक्यम् ? मुक्तानां पञ्चविधत्वकथनानन्तरं तेषाम् अपि दुःखसंस्थवत् योग्यायोग्यप्रभेदवत्त्वेन तत्कथनस्यैव उचिततया, तदनन्तरम् एव अतिदेशः; योग्यायोग्यभेदकथनानन्तरं च अतिदेशे गौरवम् एव"इत्यत उक्तम् योग्यायोग्येति । तथाच तदनन्तरम् एव अतिदेश-सम्भवात् उक्तिलाघवम्; इति ।

[ २६ के. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ निरूपणे—

अ) 'अयोग्या इत्यतः....ज्ञातव्यः'इत्यस्य व्याख्याने— १) द्वैविध्य-समुच्चयप्रतीतिनिरासार्थकतया अवतरणम् । २) भावश्च ।

१. अतिदेश।'योग्या

आ) 'अत्रापि...निमित्तम्'इत्यस्य व्याख्याने– १) अर्थः । २) 'एव'-कारस्य मत(निमित्त)ान्तरगवेषणानावश्यकतापरत्वम् ।

इ) 'ननु...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने– १) 'सत्यम्'इत्यस्य अभिप्रायः । २) 'योग्यायोग्य...क्रमोल्लङ्घनम्'इत्यस्य द्वेधा व्याख्याने– क) अन्यथाप्रतीतिनिरासकतया अवतरणम् । ख) 'उक्तविभागेन निर्देशसौकर्य'-प्रदर्शनरूपः अर्थश्च । ग) प्रकारान्तरापेक्षया 'एवं विमुक्तियोग्याश्च'इत्यनेनैव विभागविशेषातिदेशसिद्धिश्च । ]

'दुःखसंस्थाः'इतिमूले 'अयोग्या इति च द्विधा'इत्यत्र 'इति'शब्दानन्तरं 'च'शब्दः श्रूयते; तेन "न केवलं पूर्वोक्तरीत्या दुःखसंस्थाः द्विविधाः, 'मुक्तियोग्याः अयोग्याः'इति च द्विधा"इति द्वैविध्यसमुच्चयः क्रियते इति भाति; न च तद्युज्यते, पूर्वं दुःखसंस्थानां द्वैविध्यस्य अनुक्तत्वेन द्वैविध्यसमुच्चयानुपपत्तेः ।, इत्यत आह **अयोग्या इति** । तथाच 'मुक्तियोग्याः अयोग्याश्च इति दुःखसंस्थाः द्विविधाः'इत्यर्थलाभात् न उक्तदोषः; इति भावः ॥

**अत्रापीति** । अयोग्यापेक्षया मुक्तियोग्यानाम् आदौ निर्देशेऽपि प्राधान्यम् एव अभिमतम्; इत्यर्थः । यद्यपि "अत्र 'अभावस्य भावनिरूप्यत्वम् अपि मुक्तियोग्यानाम् आदौ निर्देशे निमित्तम्'इत्यपि वक्तुं शक्यते, इति 'प्राधान्यम् एव'इति-अवधारणम् अयुक्तम्"इत्याभाति; तथाऽपि न अत्र 'एव'शब्देन अन्यनिमित्तं निषिध्यते, किन्तु 'किं मतान्तरगवेषणया ! प्राधान्यम् एव सम्भवति'इत्येवं बोध्यते, इत्यदोषः ॥

**सत्यमिति** । यदि मुक्तभेदं देवर्ष्यादिभेदेन आदौ अभिधाय पश्चात् दुःखसंस्थानां योग्यायोग्यविभागम् उक्त्वा मुक्तियोग्यानाम् अपि देवर्ष्यादिभेदेन पञ्चविधत्वम् उच्येत, तदा उक्तिगौरवम्; यदि तु दुःखसंस्थानां योग्यायोग्यविभागानन्तरं विमुक्तानां पञ्चविधत्वम् उक्त्वा मुक्तियोग्येषु 'एवं विमुक्तियोग्याश्च'इति तत् अतिदिश्येत, तदा उक्तिलाघवम्; इति ।

"ननु न एवम् अतिदेष्टुं शक्यम्, विमुक्तानां पञ्चविधत्वकथनानन्तरं तेषाम् अपि दुःखसंस्थवत् योग्यायोग्यप्रभेदवत्त्वेन तत्कथनस्यैव उचितत्वेन, तदनन्तरम् एव अतिदेशावकाशात्; तत्कथनानन्तरं च अतिदेशे गौरवम् एव;" इत्यतः 'स्यात् एवम् यदि दुःखसंस्थवत् मुक्तानाम् अपि योग्यायोग्यभेदवत्त्वं स्यात्; न च एवम्; अतः मुक्तभेदकथनानन्तरम् एव अतिदेशापत्तेः लाघवम् एव;' इत्याह योग्येति ।,

यद्वा मुक्तियोग्यानां दुःखसंस्थप्रभेदतया दुःखसंस्थविभागकथनेन मुक्तियोग्यानां ज्ञाने सति 'देवर्षिः' इत्यादिना मुक्तामुक्तदेवर्ष्यादिभेदस्य 'एवं विमुक्तियोग्याश्च' इति मुक्तियोग्येषु अतिदेशेन कथनं सुकरं भवति ।, प्राधान्यम् अनुसृत्य विमुक्तभेदस्य प्रथमम् उक्तौ तु, दुःखसंस्थविभागस्य-मुक्तियोग्याज्ञानेन 'एवं विमुक्तियोग्याश्च' इत्यतिदेशायोगेन योग्यप्रभेदकथनं सुकरं न स्यात् ।, प्राधान्यात् विमुक्तभेदकथनानन्तरम् दुःखसंस्थान् विभज्य तत्प्रभेदानाम् मुक्तियोग्यानां 'देवर्षि पितृपनरा इति योग्यास्तु पञ्चधा' इति-विभागोपदेशः दुष्करः स्यात् ।; अतः निर्देशसौकर्यात् तत्क्रमोल्लङ्घनम्; इत्यर्थः ।;

यद्यपि प्राधान्येन विमुक्तभेदकथनानन्तरं दुःखसंस्थान् विभज्य तत्प्रभेदविमुक्तियोग्यानां 'योग्याः विमुक्तवत् भिन्नाः' इति-अतिदेशः शक्यते कर्तुम्, तथाऽपि " 'एवं विमुक्तियोग्याश्च' इत्यनेनैव विभागविशेषातिदेशः सिध्यति" इत्यभिप्रायकः अयं ग्रन्थः । अत एव वक्ष्यति 'देवर्ष्यादिभेदेनेत्यस्यानुकर्षणार्थश्चकारः' इति ।

[ २६ वि. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थद्वैविध्ये—

अ) 'दुःख...संस्था इति' इत्यस्य व्याख्याने— उत्तरवाक्यावतारकतया— १) अवतरणम् । २) पदार्थश्च ।

आ) 'अयोग्याः मुक्तेः'इत्यस्य व्याख्याने– अन्यथाप्रतीतिवारणार्थकतया अन्वयपुरःसरम् अवतरणम् ।

इ) 'अयोग्या इत्यतः...ज्ञातव्यः'इत्यस्य व्याख्याने– अन्यथाप्रतीतिनिरासार्थकतया अवतरणम्, अर्थश्च ।

ई) 'अत्र...निमित्तम्'इत्यस्य व्याख्याने– एतदुद्देशक्रमनिमित्तोक्तितया– अवतरणम्, अर्थश्च ।

उ) 'ननु...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने– १) 'ननु...वक्तव्यः' इत्यस्य व्याख्याने एतद्विभागोक्त्यनुपपत्तिशङ्कात्वेन अवतरणम्, अर्थश्च । २) 'सत्यम्...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने– तच्छङ्कापरिहारकतया अवतरणम्, पदार्थः, शेषः, अन्वयः, अर्थः, भावश्च । ]

उत्तरवाक्यम् अवतारयति **दुःखसंस्थानामिति** । प्रभेदम्= विभागम्, आह; इत्यर्थः । मुक्तियोग्याः= मुक्तेः अर्हाः; इत्यर्थः ॥

'अयोग्याः'इत्यस्य 'देवत्वादेः अयोग्याः'इत्यर्थप्रतीतिवारणाय आह **मुक्तेरयोग्या इति** ॥

'इति च द्विधा'इत्यत्र "अनुक्तद्वैविध्यसमुच्चयार्थः 'च'शब्दः"इतिप्रतीतिनिरासाय आह **अयोग्या इत्यत इति** । 'अयोग्याः', इत्येतस्मात्, शब्दात्, परः= अनन्तरभावी, 'च'शब्दः ज्ञातव्यः; इत्यर्थः ॥

'मुक्तियोग्यायोग्ययोः क्रमेण उद्देशे किं नियामकम् ?'इतिजिज्ञासायाम् आह **अत्रापीति** । अनयोः अपि उद्देशक्रमे, तत् एव = प्राधान्यम् एव, नियामकम्; इत्यर्थः ॥

दुःखसंस्थानां विभागकथनानुपपत्तिम् आशङ्कते **ननु चेति** । दुःखसंस्थापेक्षया विमुक्तानाम् उत्कृष्टत्वात्, तेषां विभागः दुःखसंस्थापेक्षया आदौ वक्तव्यः; इत्यर्थः ।

परिहरति **सत्यमिति** ।;

'दुःखसंस्थापेक्षया विमुक्तानाम् उत्कृष्टत्वम्'इत्येतत् तत्त्वम्; इत्यर्थः ।,

'तथाऽपि'इति शेषः । अस्य 'क्रमोल्लङ्घनम्'इत्यनेन अन्वयः ।,

योग्य.योग्यभेदस्य= मुक्तियोग्यतदयोग्यविभागस्य, दुःखसंस्थेषु, एव, भावात्, तदभिधानानन्तरम्, मुक्तियोग्य-विभाग-अभिधानस्य, सुकरत्वात्, क्रमोल्लङ्घनम्= प्राधान्यक्रमपरित्यागः, कृतः; इत्यर्थः ।,

प्राधान्यक्रमम् अनुसृत्य मुक्तविभागस्य प्राक् एव अभिधाने, मुक्तियोग्येषु 'एवं विमुक्तियोग्याश्च'इति-अतिदेशायोगात्, मुक्तियोग्यविभागः पृथक् वक्तव्यः स्यात्; तथासति गौरवं स्यात्; दुःखसंस्थविभागकथनानन्तरं मुक्तविभागकथने तु मुक्तप्रभेदस्य मुक्तियोग्येषु 'एवं विमुक्तियोग्याश्च'इति-अतिदेशमात्रेण मुक्तियोग्यविभागज्ञानसौकर्यात्; इमं विशेषम् अनुसृत्य प्राधान्यक्रमोल्लङ्घनम्; इति भावः ।

[ २६ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-द्वैविध्ये–

अ) 'दुःख...संस्था इति'इत्यस्य व्याख्याने– १) 'प्रभेदम्'इत्यस्य प्रयोजनोक्तितया अवतरणम्, अर्थश्च ।

आ) 'अयोग्याः मुक्तेः'इत्यस्य व्याख्याने मुक्तियोग्यसाम्यनिरासकतया अवतरणम् ।

इ) 'अत्र...निमित्तम्'इत्यस्य व्याख्याने– 'च'शब्दस्य 'योग्य'शब्देन अन्वयप्रतीतिनिरासार्थकतया अवतरणम्, अभिप्रायश्च ।

ई) 'ननु...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने– शेषः, पदार्थः, भावश्च । ]

'दुःखसंस्थानां प्रभेदम् आह'इत्ययुक्तम्; 'द्विधा'इत्यनेन भेदस्य उक्तत्वात्, 'मुक्तियोग्या अयोग्याः'इत्यस्य वैयर्थ्याच्च; इत्यतः उक्तम् 'प्रभेदम्'-इति । प्रकृष्टत्वं च विभागस्य– विशेषरूपत्वम्, सप्रकारत्वञ्च; इति ज्ञातव्यम् ॥

यस्यकस्यचित् अयोग्यत्वस्य मुक्तियोग्यानाम् अपि साम्येन विभागानुपपत्तिप्रसङ्गात् व्याचष्टे **अयोग्या इति** ।

"'प्रथमातिक्रमे कारणाभावेन, 'च'शब्दः 'योग्य'शब्दे अन्वितः किं न स्यात्?" इत्यत आह **अत्रापीति** । तदेव= प्राधान्यमेव । 'मुक्तियोग्य'शब्देन अन्वये अयोग्या मुक्तियोग्याश्च इत्यर्थत्वे अप्राधान्यक्रमप्रसङ्गात्, सम्भवति प्राधान्यक्रमे तद्ग्रहणस्य अन्याय्यत्वात्; उक्ता एव योजना; इति ॥

'अनन्तरम्'इत्यनन्तरं 'मुक्तभेदोक्तौ'इति शेषः ।

**सौकर्यादिति** । मुक्तियोग्यभेदविशेषातिदेशस्य सुकरत्वात् इत्यर्थः ।

अयं भावः— "देवर्षि'इति मुक्तभेदम् उक्त्वा 'दुःखसंस्थाः'इति दुःखसंस्थभेदोक्तौ 'एवं विमुक्तियोग्याश्च'इति-अतिदेशः कर्तुम् अशक्यः स्यात्; 'देवर्षि'इत्यादेः व्यवहितत्वेन, 'एव'शब्देन मुक्तान् दृष्टान्तीकृत्य "देवर्ष्यादिभेदेन पञ्चधा'इत्यस्य 'च'शब्देन अनुकर्षणायोगात् । यद्यपि 'योग्यास्तु मुक्तवद्भिन्नाः'इति वक्तुं शक्यते; तथाऽपि 'मुक्तियोग्य'आदिशब्देन तदलाभात्, तल्लाभाय 'मुक्ता इव मुक्तियोग्या मिता भिन्नास्तु पञ्चधा'-इत्यादौ ग्रन्थगौरवप्रसङ्गात्; इति ।

[ २६ का. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-द्वैविध्ये—

अ) "अयोग्या मुक्तेः'इत्यस्य व्याख्याने— मूलस्थ'अयोग्य'पदार्थानुपपत्तिनिवारकतया अवतरणम्, पदार्थश्च ।

आ) 'अयोग्या इत्यतः...ज्ञातव्यः'इत्यस्य व्याख्याने— द्वैविध्यान्तर-समुच्चयनिरासकतया अवतरणम् ।

इ) 'अत्र...निमित्तम्'इत्यस्य व्याख्याने— अर्थः अभिप्रायश्च ।

ई) 'ननु...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने— १) 'ननु...वक्तव्यः'-इत्यस्य व्याख्याने 'प्राधान्यात्'पदकृत्यम् । २) 'सत्यम्...क्रमोल्लङ्घनम्'इत्यस्य

व्याख्याने– क) शङ्कासमाधायकतया अवतरणम् । ख) पदार्थः । ग) अभिप्रायः । घ) 'विपक्षे बाधक'रूपो भावः । ङ) 'योग्यायोग्य'पदकृत्यञ्च । ]

यत्रक्वचित्-अयोग्यत्वस्य मुक्तियोग्येष्वपि सम्भवात्, क्वचिदपि-अयोग्यत्वस्य तमोयोग्येष्वपि असम्भवात् आह **अयोग्या मुक्तेरिति** । अत्र; मुक्तियोग्यत्वम्= मुक्तिप्रयोजकदृढभक्त्यादिरूपत्वम्, अतद्रूपत्वम्= तद्विरोधिद्वेषादिरूपवत्त्वम्= मुक्त्ययोग्यत्वम्; इति ध्येयम् ॥

अत्र 'च'शब्दस्य द्वैविध्यान्तरसमुच्चायकत्वायोगात् आह **अयोग्य इत्यतः परमिति** ॥

**अत्रापीति** । दुःखसंस्थविभागे मुक्तियोग्यानां प्रथमोद्देशे प्राधान्यम् एव मुख्यनियामकम्; इत्यर्थः । तेन निरूप्यनिरूपकभावरूपनियामकान्तरसत्त्वेऽपि न एवकारविरोधः, निरुक्तद्वितीयकल्पे तदभावाच्च; इति ध्येयम् ॥

**प्राधान्यादिति** । यद्यपि 'उद्देशक्रमात्'इत्यपि सुवचम्; तथापि प्राधान्यक्रमस्य उद्देशक्रमबाधकत्वेन मुख्यत्वात्, स एव उक्तः ।

समाधत्ते **सत्यमिति** ।

'विमुक्तानां प्राधान्यम्'इत्येतत् सत्यम्; तथाऽपि विमुक्तभेदकथनाव्यवहितोत्तरं मुक्तियोग्यभेदकथनस्य अतिदेशलाघवात्, क्रमोल्लङ्घनम् ।

अन्यथा विमुक्तविभागानन्तरं योग्यायोग्यभेदेन दुःखसंस्थान् विभज्य योग्येषु व्यवहितविमुक्तभेदस्य 'एवम्'इत्यतिदेशायोगात्, विशिष्य देवर्ष्यादिभेदेन पञ्चविधत्वस्य कथनीयतया ग्रन्थगौरवं स्यात्; इति भावः ।

'ननु योग्यायोग्यभेदादिना मुक्तान् विभज्य दुःखसंस्थेष्वेव तदतिदेशे लाघवसम्भवात्, कुतः क्रमोल्लङ्घनम्?'इत्याशङ्कापरिहाराय उक्तम् 'योग्यायोग्य'इत्यादि ।

[ २६ भ. विषयः– अस्वतन्त्रतत्त्व भाव चेतन-दु.खसंस्थद्वैविध्ये–
अ) 'अत्र...निमित्तम्'इत्यस्य व्याख्याने– 'तवदे'इत्यस्य अर्थः ।
आ) 'ननु...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने– १) 'सत्यम्. .क्रमोल्लङ्घनम्'इत्यस्य अर्थः । २) मुक्तभेदप्राथम्यशङ्कानिवारकतया 'योग्यायोग्यभेदस्य'इत्यस्य अवतरणम्, अर्थश्च । ]

**अत्रापि तदेवेति** । प्राधान्यम् एव; इत्यर्थः ॥

**सत्यमिति** । विमुक्तभेदं प्रथमम् अभिधाय अनन्तरं 'दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा'इत्युक्तौ 'एवं विमुक्तियोग्याश्च'इति अतिदेष्टुं न शक्यते; देवर्ष्यादिभेदोक्तेः व्यवहितत्वप्राप्त्या सन्निहितयोग्यायोग्यभेदस्यैव मुक्तियोग्येषु प्रसक्तेः । तस्मात् 'देवर्षि पितृपनरा मुक्तियोग्याश्च पञ्चधा'इति वक्तव्यं स्यात्; तथा सति च उक्तिलाघवरूपसौकर्याभावः प्रसज्यते; तल्लाभार्थम् एवं क्रमोल्लङ्घनम्; इत्यर्थः ।

ननु तर्हि मुक्तभेदं प्रथमम् अभिधाय 'एवं विमुक्तियोग्याश्च'इति मुक्तियोग्यभेदम् अतिदिश्य तदनन्तरम् एव दुःखसंस्थविभागः कथ्यताम्, एवञ्च सौकर्यस्य न हानिः; इत्यत उक्तम् **योग्यायोग्यभेदस्येति** । उद्देशं विना विभागस्य कर्तुम् अशक्यत्वात्, मुक्तियोग्योद्देशस्य च दुःखसंस्थविभागं विना अनुपपद्यमानत्वात्, तद्विभागकथनानन्तरम् एव मुक्तियोग्यभेदकथनस्य अवसरः; न पूर्वम्; इत्यर्थः ।

[ २७ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-विमुक्तविभागे–
अ) मुक्तप्रभेदोक्तितया 'देवर्षि...पञ्चधा'इति मूलस्य अवतरणम् ।
आ) पदार्थे– १) 'प'पदार्थः । २) 'नर'पदार्थः । ३) 'तु'पदस्य व्याख्याने– क) अर्थः । ख) उक्तार्थेन विरुद्धमतनिरासः । ग) उक्तार्थे ग्रन्थान्तरविरोधनिरासश्च । ]

इदानीं मुक्तानां प्रभेदम् आह 'देवर्षि'इति ।

[ ११ त. विषयः– विमुक्तपाञ्चविध्यम् । ]

## देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ॥ ४½ ॥

**पान्ति इति, पाः= चक्रवर्तिनः ।**

**नराः= मनुष्योत्तमाः ।**

**'तु[1]शब्दः अवधारणे । तेन ये मोक्षे तारतम्यं न मन्यन्ते तन्मतं निराचष्टे । गन्धर्वादीनां; केषाञ्चित् एषु एव अन्तर्भावात्, केषाञ्चित् अविवक्षितत्वात्, न ग्रन्थान्तरविरोधः ।**

[ २७ स. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट विमुक्त-पाञ्चविध्ये–

अ) 'पान्तीति पाश्चक्रवर्तिनः'इत्यस्य व्याख्याने– १) अन्यथाविग्रह-मूलकपाञ्चविध्यभङ्गशङ्कानिरासकतया अवतरणम्; भावश्च । २) 'पितृपनरा' इतिप्रयोगस्य साधुत्वञ्च ।

आ) 'तुशब्दः...विरोधः'इत्यस्य व्याख्याने– १) 'निराचष्टे'इत्यस्य भावः । २) 'गन्धर्वादीनां...विरोधः'इत्यस्य व्याख्याने पाञ्चविध्यानुपपत्ति-निरासकतया– क) अवतरणम् । ख) अर्थः । ग) भावश्च । ]

'पितॄन् पान्ति, इति पितृपाः'इति प्रतीयते; अत आह **पान्तीति** । तथाच 'पञ्चधा'इति अनुपपन्नम्; इति भावः ।

'सप्तम्यां जनेर्डः', 'अन्येष्वपि दृश्यते'इत्युक्तेः; 'पितृप'इति साधु । अन्यथा 'पितृपानरा'इति स्यात् ॥

**निराचष्ट इति** । यद्यपि 'देवर्षि'आदिवाक्ये विभागः एव प्रतीयते, स्फुटं न तारतम्यम्; तथाऽपि संसारदशायां तारतम्योपेते ब्रह्मादौ प्रसिद्ध-'देवर्षि'आदिसंज्ञया एव उद्देशात्, तारतम्यम् उक्तप्रायम्; इति भावः ।

---

१. वि.टि. उद्धरणम् 'तुशब्दो विशेषार्थक इति'इति ।

"ननु गन्धर्वाप्सरःप्रभृतीनाम् अपि मुक्तप्रभेदत्वेन

'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च ॥'

इत्यादौ उक्तत्वात्, कथं 'पञ्चधा' इति-उक्तम्?" इत्यत आह **गन्धर्वादीनामिति** । अत्र 'देव'पदेन तात्त्विकानाम् इव कर्मजाजानजानाम् अपि देवानाम् ग्रहणात्;

'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।
आजानदेवास्ते प्रोक्ताः ॥'

इत्युक्तेः तुम्बुरुप्रमुखशतगन्धर्वाणाम् उर्वश्याद्यप्सरसां च आजानजदेवेषु अन्तर्भावात्; तुम्बुर्वाद्यपेक्षया उत्तमगन्धर्वाणां च अष्टानां

'कर्मदेवगणास्त्वष्टगन्धर्वास्तत्परे शतम् ।
आजानदेवाः ॥'

इत्युक्त्या कर्मदेवेषु अन्तर्भावात्; तदन्येषां देवगन्धर्वाणां तारतम्योक्तिपरे अस्मिन्वाक्ये विवक्षाविरहाद्वा; 'क्षितिपा' इत्यादिग्रन्थाविरोधः; इत्यर्थः ।

न हि विभागवाक्यस्य इव अस्य वाक्यस्य न्यूनाधिकसङ्ख्याऽन्यतमान्तर्भावाभावज्ञापनार्थत्वं, येन ग्रन्थान्तरविरोधः स्यात्, किन्तु 'मुक्ताः देवर्ष्यादिभेदेन तारतम्योपेताः' इत्येतत्प्रतिपादकत्वम् एव । अत एव तत्त्वविवेकेऽपि अत्र

' ब्रह्मान्ता उत्तरोत्तरम् ।
मुक्ताः शतगुणाः प्रोक्ताः ॥'

इति तारतम्यम् एव उक्तम्; इति भावः ।

---

१. ब्र.सू.भा. ४–४–१९ इत्यत्रोदाहृतं गारुडवाक्यम् ।

[ २७ के. विषयः– अस्वतन्त्रतत्त्व-भाव चेतन-दुःखस्पृष्ट-विमुक्त-पाञ्चविध्ये–

अ) 'पान्तीति पाश्चक्रवर्तिनः' इत्यस्य व्याख्याने– पितृपत्वभ्रान्तिनिवारकतया अवतरणम् ।

आ) 'नराः मनुष्योत्तमाः' इत्यस्य व्याख्याने– सर्वमनुष्यपरत्वभ्रान्तिनिवारकतया अवतरणम् ।

इ) 'देवर्षिपितृपनराः' इतिमूलस्य भावः ।

ई) 'तुशब्दः...विरोधः' इत्यस्य व्याख्याने– १) 'गन्धर्वादीनां... विरोधः' इत्यस्य व्याख्याने पाञ्चविध्यभङ्गनिरासकतया अवतरणम्, अर्थः, विभागवाक्यस्य तारतम्योपेतत्वे तात्पर्यञ्च । ]

'पितृपत्वम् एकः विभाजकोपाधिः' इतिभ्रान्ति निवारयति **पान्तीति** ।।

'नर' शब्दस्य सर्वमनुष्यपरत्वभ्रान्तिवारणाय आह **मनुष्योत्तमा** इति ।।

यद्यपि 'देवर्षि' इत्यादिवाक्ये विभागः एव प्रतीयते, स्फुटं न तारतम्यम्; तथाऽपि संसारदशायां तारतम्योपेते ब्रह्मादौ प्रसिद्ध 'देवा' आदि संज्ञया एव उद्देशात्, तारतम्यम् उक्तप्रायम्; इति भावः ।।

"ननु 'पञ्चधा' इति- अयुक्तम्, गन्धर्वाणाम्, कर्मदेवानाम् उर्वश्याद्यप्सरसाम्, आजानदेवानाम्; मुक्तप्रभेदत्वस्य

'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च तात्विकाश्च ॥'

इत्यादिना उक्तत्वात्; अन्यथा बृहद्भाष्यविरोधापातात्;" इत्यत आह **गन्धर्वादीनामिति** ।

अत्र 'देव' पदेन तात्त्विकानाम् इव कर्मजानाम् आजानजानां देवनाम् अपि ग्रहणात्;

'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।
आजानदेवास्ते प्रोक्ताः ॥'

इत्युक्तेः तुम्बुरुप्रमुखगन्धर्वाणाम् उर्वश्यादि-अप्सरसां च आजानदेवेषु अन्तर्भावात्; तुम्बुरुप्रमुखेभ्यः अपि उत्तमगन्धर्वाणां च → अष्टानाम्

'कर्मदेवगणा अष्ट गन्धर्वास्तत्परं शतम् ।
आजानदेवाः ॥'

इत्युक्त्या कर्मदेवेषु अन्तर्भावात्, तदन्येषां च→ देवगन्धर्वादीनां तारतम्योक्तिपरे अस्मिन् विभागवाक्ये विवक्षाविरहात्; न 'क्षितपा' इत्यादिग्रन्थान्तरविरोधः ।,

न हि विभागवाक्यस्य इव अस्यापि न्यूनाधिकसङ्ख्याव्यवच्छेदे तात्पर्यम्, किन्तु 'देवर्ष्यादिभेदेन तारतम्योपेता एव' इत्यत्र एव । 'न च ग्रन्थान्तरविरोधः अस्ति' इति ध्येयम् । अत एव तत्त्वविवेके हि अत्र

'... ब्रह्मान्ता उत्तरोत्तरम् ।
मुक्ताः शतगुणाः प्रोक्ताः ॥'

इति तारतम्यम् एव उक्तम् ॥ इदम् अपि अत्र अपि टीकायां 'तेन' इत्यादिना 'मोक्षे न तारतम्यम्' इतिमतनिराकरणपरत्वेन व्याख्यातम् ॥ इति ।

[ २७ वि. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-विमुक्त-भाष्यविषये—

अ) 'इदानीं...देवर्षीति' इत्यस्य व्याख्याने— दुःखसंस्थविभागोक्तिशङ्कावारणार्थकतया अवतरणम्, पदार्थश्च ।

आ) 'पान्तीति पार्श्वकवर्तिनः' इत्यस्य व्याख्याने— १) अन्यथाविग्रहमूलक'प' शब्ददुर्ज्ञेयत्वशङ्कानिवारकतया— अवतरणम्, पदार्थश्च । २) देवादिव्यवच्छेदार्थकतया 'पार्श्वकवर्तिनः' इत्यस्य अवतरणम्, अर्थश्च ।

---

१. श्लो.५.

इ) सकलमनुष्यपरत्वनिरासकतया 'नरा मनुष्योत्तमाः' इत्यस्य– १) अवतरणम् । २) तात्पर्यञ्च ।

ई) 'तुशब्दो...विरोधः' इत्यस्य व्याख्याने– १) 'तुशब्दो विशेषार्थकः' इत्यस्य पदार्थः । २) 'तेन...निराचष्टे' इत्यस्य व्याख्याने– 'तु' शब्दोक्तार्थे अतिशयलाभोक्तिपरतया अवतरणम्, पदार्थश्च । ३) 'गन्धर्वो... विरोधः' इत्यस्य व्याख्याने– विभागवाक्यस्य उक्तसङ्ख्यानिर्धारणार्थकत्वपरतया अवतरणम्, पदार्थश्च । ]

'दुःखसंस्थविभागकथनानन्तरं तत्प्रभेदविभागस्य वक्तव्यत्वात्, दुःखसंस्थविभाग एव उत्तरवाक्ये अभिधीयते' इतिशङ्कावारणाय उत्तरवाक्यम् अवतारयति इदानीमिति । दुःखसंस्थविभागकथनानन्तरम्; इत्यर्थः ।।

'देवाश्च ऋषयश्च पितरश्च पाश्च नराश्च' इतिविग्रहम् अभिप्रेत्य दुर्ज्ञेयत्वात् 'प' शब्दार्थम् आह पान्तीति । रक्षन्ति इति पाः ।। 'पालकत्वस्य देवादिसाधारणत्वात्, 'प' शब्दः रक्षकविशेषपरः' इति-आह पाश्चक्रवर्तिन इति । क्षितिपाः; इत्यर्थः ।

" 'नर' शब्दस्य सकलमनुष्यवाचकत्वात्, तत्परता" इतिप्रतीतिनिरासाय आह नरा मनुष्योत्तमा इति । मनुष्ये उत्कृष्टाः – मुक्तियोग्याः; इति यावत् ।

तुशब्दो विशेषार्थक इति । 'देवर्षिपितृपनरा' इत्यनेन प्रकारेण मुक्ताः 'पञ्चधा एव' इति-अवधारणरूपार्थः वर्तते इत्यर्थः ।,

'तु' शब्दस्य अवधारणार्थे कः अतिशयः? इत्यत आह तेनेति । अवधारणार्थेन 'तु' शब्देन, ये– रामानुजाः, मोक्षे, तारतम्यम्= देवर्षिपितृपनराणां नीचोच्चभावम्, न अङ्गीकुर्वन्ति, तेषां मतम्, आचार्यैः, तिरस्कृतवान्; इत्यर्थः ।,

"ननु

'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः ॥
रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तमाः ।
नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् ॥
गुणैः सर्वैः शतगुणा मोदन्त इति हि श्रुतिः ।'

इत्यादिमुक्तस्वरूपपरवाक्यविरोधात्, 'पूतनाकंसनरकशिशुपालादीनां मुक्तत्वप्रतिपादक'भागवतादिग्रन्थविरोधाच्च; कथं नरोत्तमादिभेदेन मुक्तानां पञ्चविधत्वम् ?'' इति-आशङ्कमानं प्रति 'विभागकथनं न्यूनाधिकसङ्ख्याव्यवच्छेदप्रतीतिप्रयोजनकम्' इति उत्तरम् अभिप्रेत्य आह **गन्धर्वादीनामिति** । गन्धर्वादीनाम्, 'आदि'पदोक्त-अप्सरःप्रभृतीनाम्; एषु, एव, केषाञ्चित्–पूतनाकंसनरकादि दुर्जीवानाम्; अविवक्षितत्वात्= मुक्तत्वेन अनभिप्रेतत्वात्, न अस्य वाक्यस्य, भागवतादिग्रन्थान्तरोक्तवचनविरोधः; इत्यर्थः ।

[ २७ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-विमुक्त-पाञ्चविध्ये–

अ) 'इदानीम्' इत्यस्य अर्थः ।

आ) 'पान्तीति पाश्चक्रवर्तिनः' इत्यस्य व्याख्याने– १) पितृत्वप्रतीतिनिवारकतया अवतरणम् । २) यत्किञ्चिद्रक्षकत्वप्रतीतिनिवारकतया 'चक्रवर्तिनः' इत्यस्य अवतरणम्, अर्थश्च ।

इ) यावन्नरप्रतीतिनिवारकतया 'नरा मनुष्योत्तमाः' इत्यस्य अवतरणम् ।

ई) 'तुशब्दः...विरोधः' इत्यस्य व्याख्याने– पाञ्चविध्यासिद्धिनिवारकतया 'गन्धर्वा...विरोधः' इत्यस्य अवतरणम्, अर्थः, मूलविभागस्य तारतम्योपेतत्वे तात्पर्यञ्च ]

'इदानीम्' इति अवसरप्राप्तम् आह ॥

'पितृप'इत्यस्य ऐकविध्यप्रतीतेः व्याचष्टे **पान्तीति** ॥ यत्किञ्चिद्रक्षकत्वं सर्वसाधारणम्, इति न पृथक् प्रकारः स्यात्; अत आह **चक्रवर्तिन इति** । सार्वभौमत्वं पृथक् प्रकारः; इत्यर्थः ।

नरत्वावच्छेदेन प्रतीतेः आह **नरा इति** ।

गन्धर्वादीनाम् असङ्ग्रहात्, न्यूनाधिकसङ्ख्याऽन्यतमान्तर्भावाभावज्ञापनं विभागफलं न सिद्ध्यति; इत्यत आह **गन्धर्वादीनामिति** । अत्र 'देव'पदेन कर्मजाजानजानां देवानाम् अपि ग्रहणात्;

'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।
आजानदेवास्ते प्रोक्ताः ॥'

इत्युक्तेः, तुम्बुरुप्रमुखशतगन्धर्वाणाम् उर्वश्याद्यप्सरसां च आजानदेवेषु अन्तर्भावात्; तुम्बुरुप्रमुखेभ्यः उत्तमगन्धर्वाणां अष्टानाम्

'कर्मदेवगणा अष्ट गन्धर्वास्तत्परे शतम् ।
आजानदेवाः ॥'

इत्युक्त्या कर्मदेवेषु अन्तर्भावात्; तदन्येषां देव-गन्धर्वादीनां विवक्षाविरहात्; न 'क्षितिपा मनुष्यगन्धर्वाः'इत्यादिग्रन्थान्तरविरोधः ।,

अयमभिप्रायः ।—→ मूलवाक्यस्य 'मुक्ताः देवर्ष्यादिभेदेन तारतम्योपेताः'इत्यत्र एव तात्पर्यम्; न तु 'मुक्ताः देवर्ष्यादिभेदेन पञ्चधा एव, न न्यूनाधिकाः'इत्यत्र । तथाच न उक्तदोषः; इति ।

[ २७ **का.** विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-विमुक्त-पाञ्चविध्ये—

अ) 'इदानीं...देवर्षीति'इत्यस्य व्याख्याने— विभागक्रमान्तरशङ्कानिवारकतया अवतरणम्, अर्थः, भावश्च ।

आ) 'पान्तीति पाश्चक्रवर्तिनः'इत्यस्य व्याख्याने— १) पितृपत्वभ्रान्तिनिवारकतया अवतरणम् । २) देवादिव्युदासार्थकतया 'चक्रवर्तिनः'इत्यस्य [illegible] ।

इ) 'नरा मनुष्योत्तमाः' इत्यस्य व्याख्याने- प्रयोजनोक्तितया 'मनुष्योत्तमाः' इत्यस्य अवतरणम् ।

ई) 'तुशब्दः...विरोधः' इत्यस्य व्याख्याने- १) 'तेन...निराचष्टे'- इत्यस्य व्याख्याने- तारतम्योपपादकावधारणात् साम्यनिरासस्साधनञ्च । २) 'गन्धर्वादीनां...विरोधः' इत्यस्य व्याख्याने- क) पाञ्चविध्यभङ्गनिरासकतया- अवतरणम्, अर्थः, भावश्च । ख) 'केषाञ्चिदविवक्षितत्वात्' इत्यस्य व्याख्याने- सङ्ग्राह्यासङ्ग्रहशङ्कानिवारकतया अवतरणम्, अर्थः, अभिप्रायश्च । ग) मतान्तरेण 'विभागस्य तारतम्यस्फुटीकरणार्थम् उपलक्षणमात्रत्वम्' । घ) त्रैविध्यापेक्षया पाञ्चविध्योक्तौ विशेषश्च । ]

तथाऽपि देवर्ष्यादिभेदेन मुक्तियोग्यान् विभज्य तदतिदेशः एव मुक्ते ! किं न कृतः ? इत्यत्र आह इदानीमिति । दुःखसंस्थविभागानन्तरम् इत्यर्थः । मुक्तामुक्तभेदेन दुःखस्पृष्टविभागे कृते तदुभयविभागस्यैव आकाङ्क्षितत्वात्; इति भावः ।

'पितृपत्वम् एकविभाजकोपाधिः' इतिभ्रान्तिनिरासाय आह पान्तीति ॥ पातृत्वस्य देवादिसाधारण्यात् न विभाजकता; इत्यत. विवक्षितार्थम् आह चक्रवर्तिन इति । देवत्वादिजातिवत् चक्रवर्तित्वजातेः एव विभाजकत्वम्; इति भावः ।

सर्वमनुष्याणां मुक्त्ययोग्यात् आह मनुष्योत्तमा इति ॥

तेनेति । यद्यपि 'पञ्चधा एव' इति अवधारणेन मुक्तानाम् एकजातीयत्वनिरासः एव लभ्यते, तथाऽपि तारतम्योपपादकत्वेन एव पञ्चविधत्वावधारणात् साम्यनिरासः अपि सिद्ध्यति । तथाहि-

"... ब्रह्मान्ता उत्तरोत्तरम् ।

मुक्ताः शतगुणोद्रिक्ताः ॥"

इतितत्त्वविवेकोक्तमुक्ततारतम्यम् अनुपपन्नम्; 'युवा स्यात्'इतिमूलश्रुतौ मनुष्यत्वजातिविशिष्टानाम् एव तारतम्योक्तेः, मुक्तौ च तदभाव त्'' इतिमतं न श्रद्धेयम्, मुक्तानाम् अपि मनुष्यत्वादिजातिविशिष्टत्वेन तत्र तारतम्योपपत्तेः; इति।

ननु 'पञ्चधा'इति अयुक्तम्; गन्धर्वादीनाम् अधिकत्वात्,

'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः।
आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः॥
रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तराः।'

इत्यादौ तेषाम् अपि मुक्तत्वोक्तेः; इत्यत आह **गन्धर्वादीनामिति**। देवगन्धर्वादीनां देवादिषु एव अन्तर्भावात्; इत्यर्थः। आजानज-कर्मज-तात्त्विक-देव-देवगन्धर्व-अप्सरःप्रभृतिसाधारणदेवत्वादेः एव विभाजकत्वेन विवक्षितत्वात्; इति भावः।,

'ननु एवम् असुरगन्धर्वादीनाम् असङ्ग्रहः'इत्याशङ्क्य उक्तं **केषाञ्चिदविवक्षितत्वादिति**। उक्तवचनेऽपि तेषाम् अविवक्षितत्वात् न विरोधः; इत्यर्थः। देवाद्यनन्तर्भूत-अशेषमुक्तानां मनुष्योत्तमेषु अन्तर्भावः, देवादिभिन्नसचेतनमात्रस्य 'मनुष्योत्तम'पदेन विवक्षितत्वात्; इत्यवधेयम्।;

केचित्तु ''येषां तारतम्यं विशिष्य श्रुत्यादिसिद्धं तेषाम् अत्र एव अन्तर्भावात्, अन्येषाम् अविवक्षितत्वात्; न विरोधः। न च एवं विभागस्य न्यूनता, तत्त्वविवेकानुसारेण 'मुक्ताः तारतम्योपेताः एव'इत्यर्थे मूलतात्पर्यात्। पञ्चविधत्वञ्च तारतम्यस्फुटीकरणाय उपलक्षणत्वेन एव उक्तम्।''इति आहुः।;

यद्यपि मन्द्रमध्योत्तमत्वेन त्रैविध्याभिधानेऽपि समस्तमुक्तसङ्ग्रहादिसम्भवः, अवान्तरजातीनां विशिष्य वक्तव्यत्वेऽपि 'देवर्ष्यादिप्रभेदेन मुक्ताः

१. श्लो. ५. २. तैत्तिरियोपनिषत्-आनन्दवल्लिः

बहुविधाः'इत्येव वक्तुम् उचितम्; तथाऽपि 'देवविशेषाः पितरः, मनुष्य-विशेषाः चक्रवर्तिनः'इत्यादिमतनिरासाय पञ्चविधत्वाभिधानम्; इति ।

[ २७ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-विमुक्त-पाञ्चविध्ये–

अ) 'तुशब्दः...विरोधः'इत्यस्य व्याख्याने– १) अवधारणस्य अन्वयपूर्वकम् व्यवच्छेद्योक्तिनया 'तेन...निराचष्टे'इत्यस्य अवतरणम्, पदार्थः भावश्च । २) 'गन्धर्वा...विरोधः'इत्यस्य व्याख्याने– क) सप्रमाण पाञ्च-विध्यभङ्गशङ्कानिवारकतया अवतरणम् । ख) 'आदि'पदसङ्ग्राह्यप्रदर्शनम् । ग) 'केषाञ्चित्'इत्यस्य कृत्यम् । घ) द्वितीय'केषाञ्चित्'इत्यस्य अर्थः । ङ) विवक्षितत्वात्'इत्यस्य अर्थश्च । ]

'पञ्चधा एव'इति अन्वयम् अभिप्रेत्य अवधारणव्यवच्छेद्यम् आह **तेनेति** । ये– रामानुजीयाः । देवर्ष्यादीनां तारतम्यस्य संसारे अविप्रति-पन्नत्वात्; तस्यैव देवर्ष्यादिभेदस्य मुक्तौ अपि सद्भावकथनेन, तत्प्रयोज्यं तारम्यम् अपि तेषां मुक्तौ अङ्गीकार्यम्[1] एव; इति भावः ।

''ननु तैत्तिरीयादिषु गन्धर्वादीनाम् अपि मुक्तत्वेन कथितत्वात्, तथा

'तिरश्चीनाः स्थावराश्च सर्वे ज्ञानाद्विकुण्ठगाः ।
अमुक्ता मुक्तिमायान्ति नियमात्कर्मणः क्षये ॥
पशुवृक्षादिभेदेन जीवा एव स्वतः स्थिताः ।
संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ॥'

इत्यादिना पशुपक्षिमेषवृक्षादीनाम् अपि मुक्तताऽभिधानात्; कथं पाञ्च-विध्यम् ?'' इति आशङ्कायाम् आह **गन्धर्वादीनामिति** ।

'आदि'पदेन सिद्धचारणाप्सरःप्रभृतीनां ग्रहणम् ।,

---

१. अयं भावः ग्रन्थान्तरे नास्ति ।

असुरगन्धर्वादिव्यावृत्त्यर्थं **केषाञ्चिदिति** ।,

पुनः **केषाञ्चिदिति** । पश्वादीनाम् इत्यर्थः ।,

**अविवक्षितत्वादिति** । अल्पाधिकारित्वेन, अविवक्षितत्वात्; इत्यर्थः ।

[ २८ टी॰ विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्तियोग्यविभागे–

अ) व्यवहितविभागप्रदर्शनपूर्वकं मुक्तियोग्यप्रभेदातिदेशकतया 'एवं विमुक्ति योग्याश्च' इत्यस्य अवतरणम् ।

आ) 'च'कारार्थश्च । ]

**'दुःखसंस्थाः मुक्तियोग्यायोग्यभेदात् द्विविधाः' इति-उक्तम् ; तत्र मुक्तप्रभेदम् योग्येषु अतिदिशति 'एवम्' इति ।**

[ १२ त॰ विषयः– मुक्तियोग्यविभागः ।। ]

## एवं विमुक्तियोग्याश्च ॥ ४३ ॥

**'देवर्ष्यादिभेदेन पञ्चधा' इत्यस्य अनुकर्षणार्थः 'च'कारः ।**

[ २८. स॰ विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्तियोग्यपाञ्चविध्ये–

अ) व्यवहितप्रभेदस्मारकतया 'दुःखसंस्थाः...एवमिति' इत्यस्य अवतरणम् । ]

मुक्तप्रभेदकथनेन व्यवहितं दुःखसंस्थप्रभेदं स्मारयति **दुःखसंस्था इति** ।

[ २८ के॰ विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्तियोग्यपाञ्चविध्ये–

अ) 'दुःखसंस्थाः...एवमिति' इत्यस्य व्याख्याने– 'मुक्तप्रभेदम्' इत्यस्य अर्थः । ]

मुक्तप्रभेदम्= मुक्तप्रभेदप्रकारम् ।

[ २८ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्तियोग्यपाञ्चविध्ये–

अ) 'दुःख...एवमिति'इत्यस्य व्याख्याने– १) उत्तरवाक्यावतारकतया अवतरणम् । २) पदार्थश्च ।

आ) मूलस्थपदार्थः ।

इ) 'देवर्ष्यादि...चकारः'इत्यस्य व्याख्याने– 'च'शब्दार्थोक्तितया अवतरणम्, पदार्थश्च । ]

उत्तरवाक्यम् अवतारयति **दुःखसंस्था इति** । तत्र= तयोः मध्ये, मुक्तानां विभागम्, मुक्तियोग्येषु, अतिदिशति= 'तथा'इतिप्रतिपादयति; इत्यर्थः ।

एवम्= यथा मुक्ताः तथा, मुक्तेः योग्याः; इत्यर्थः ।

'च'शब्दार्थजिज्ञासायाम् आह **देवर्ष्यादिभेदेनेति** इत्यस्य– एवंभूत-अर्थस्य; अनुकर्षणम्=समुच्चयः इति यावत्, सः, अर्थः=प्रतिपाद्यः, यस्य, सः तथा; 'च'कारः='च'शब्दः; इत्यर्थः ।

[ २८ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्याञ्चविध्ये –

अ) त्रिविधशङ्कानिवारकतया 'दुःख...एवमिति'इत्यस्य अवतरणम् ।

आ) 'देवर्ष्यादि...चकारः'इत्यस्य व्याख्याने– १) मुक्त्ययोग्येषु एतद्भेदशङ्कावारणार्थकतया अवतरणम् । २) समुच्चयान्तरे अनुपपत्तिप्रदर्शनम्, उक्तसमर्थनञ्च । ३) 'एव, च'शब्दयोः सार्थक्यञ्च । ]

" 'एवं विमुक्तियोग्याश्च'इतिमूले 'विमुक्तौ एवंप्रकारेण योग्याः'-इत्यर्थः प्रतीयते; तदयुक्तम्, मुक्तौ योग्यत्वे कस्यापि प्रकारस्य अनुक्तत्वेन

---

२. 'अमुर. .पुनः'इति ग्रन्थान्तरे नास्ति ।

'एवं'शब्देन परामर्शायोगात् ।, न च 'विमुक्तियोग्याः एवम्'इति-अन्वयेन मुक्तभेदं योग्येषु अतिदिशति, इति; मुक्तियोग्यानाम् अप्रस्तुतत्वेन, तत्र मुक्तभेदातिशयस्य अयुक्तत्वात् ।, न च प्रस्तुतत्वात् अतिदेशः; प्रस्तावकस्य अनुपलम्भबाधितत्वात् ।''इत्येताः शङ्काः परिहरन् अवतारयति **दुःखसंस्था इति ॥**

'मुक्तियोग्यातिरिक्तानाम् अतिदिश्यमानभेदानधिकरणत्वेन तत्समुच्चायक'च'शब्दः अयुक्तः;'इत्यत आह **देवर्ष्यादीति ।**

ननु 'न केवलं मुक्ताः देवर्ष्यादिभेदेन पञ्चधा, किन्तु मुक्तियोग्याश्च एवं भेदेन पञ्चधा'इति 'च'शब्दसमुच्चायकत्वस्य सम्भवात्, किम् अन्यथा व्याख्यायते? इति चेत्; न, एवं सति 'मुक्तवत् मुक्तियोग्याः भिन्नाः'इत्यस्य अर्थस्य अप्राप्तेः ।, 'एवम् अस्तु'इति चेत्; तथात्वे योग्यानां पञ्चधात्वं कुतः? —इत्येतच्छङ्कायाः परिहारोपायाभावप्रसङ्गात् । तथाहि— यदि मुक्तियोग्याः देवादिभेदेन पञ्चधा न, तर्हि मुक्ताः अपि पञ्चधा न स्युः; 'संसारे स्थित'प्रकारस्यैव व्यक्तत्वापन्नस्य मुक्तत्वाङ्गीकारात् ।, मुक्तास्तु उक्तत्रिधया भिन्नाः, अतः योग्याः अपि भिन्नाः ।'इत्यस्य अर्थस्य मुक्तदृष्टान्तकरणे लाभात्,अन्यथा तदलाभात्; इति । अतः उक्तं युक्तम्; इति ।

"ननु एवं सति 'च'शब्द एव व्यर्थः; 'एवम्''शब्देन एव विशिष्टपरामर्शसम्भवात्''इति चेत्; न, अनुकर्षणार्थक'च'शब्दानुक्तौ, 'मुक्तवत् भिन्नाः', 'मुक्तवत् पञ्चधा भिन्नाः'इतिएकदेशस्य अपि 'एवम्'शब्दे परामर्शविषयत्वप्रतीतेः विशिष्टार्थत्वानिश्चयात् ।

अतः सार्थक एव 'च'शब्दः; इति ।

[ १८ का॰ विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्तियोग्यपाञ्चविध्ये—

अ) 'दुःख...एवेति'इत्यस्य व्याख्याने- १) अप्रकृतत्ववारणार्थकतया अवतरणम्, भावश्च। २) पदार्थः, सम्बन्धश्च।

आ) 'देवर्ष्यादि...चकारः'इत्यस्य व्याख्याने- १) समुच्चयान्तर-निरासार्थकतया अवतरणम्। २) 'एवम्, च'इत्युभयस्य प्रकारद्वयेन सार्थ-क्यञ्च। ]

मुक्तियोग्यविभागस्य अप्रकृतत्वशङ्कां वारयितुम् आह **दुःखसंस्था इति**। अत्र 'द्विधा'इत्युक्त्या तद्विभागोऽपि सूचितः; इति भावः।

तत्र= तयोः मध्ये; योग्येषु; इति सम्बन्धः॥

'च'शब्दस्य अयोग्यसमुच्चायकत्वायोगात् आह **देवर्ष्यादीति**।

यद्यपि "एवम्'इत्यस्य एव "देवर्ष्यादिभेदेन पञ्चधा'इत्यर्थकत्वसम्भवः[1] तथाऽपि "न तस्य केवलं समुच्चयार्थकत्वम्, 'यथा मुक्ताः तथा मुक्ति-योग्याः'इति-उपमार्थत्वं च अभिप्रेतम्; अन्यथा 'च'शब्दवैयर्थ्यात्;"[2]इति-भावेन अनुकर्षः कृतः।,

यद्वा "'एवम्'इत्यस्य 'देवर्ष्यादिभेदेन'इति व्याख्यानम्, 'च'शब्दात् "पञ्चधा'इत्यस्य अनुकर्षः"इतिव्याख्येयम्। अतः न अन्यतरवैयर्थ्यम्। अत एव 'देवर्ष्यादिभेदेन'इति-अर्थानुवादः एव कृतः, न तु 'देवर्षिपितृप-नराः'इतिशब्दानुवादः; इत्यवधेयम्।

[ २८ भ.- × ]

---

१. 'सम्भवः'इत्येकत्र।

२. तथापि तस्य यथा मुक्तास्तथा मुक्तियोग्या इत्युपमार्थत्वमेव।, तथापि तस्य समुच्चयार्थत्वं यथा मुक्तास्तथा मुक्तियोग्या इत्युपमार्थत्वमेव।, तथापि तस्य समुच्चयार्थत्वं यथा मुक्तास्तथा मुक्तियोग्या इत्युपमार्थत्वञ्चाभिप्रेतम्।, तथापि न तस्य समुच्चयार्थत्वं यथा मुक्तास्तथा मुक्तियोग्या इत्युपमार्थत्वञ्चाभि-प्रेतम्।; इतिपाठभेदा अत्र उपलब्धाः॥ तेन च एकस्मिन्नपि पाठे स्पष्टं

[ २९ टी. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्यविभागे -

अ) मुक्त्ययोग्यविभागोक्तितया 'तमोगाः...मुक्त्ययोग्याः' इतिमूलस्य अवतरणम् ।

आ) पदार्थे- १) 'तमोगाः' इत्यस्य व्याख्याने- क) विवक्षितार्थ-कथनम् । ख) अन्यार्थनिराकरणं सहेतुकम् । २) 'सृतिसंस्थिताः' इत्यस्य व्याख्याने- पदार्थः ।

इ) उद्देशक्रमनिमित्तकथनम् । ]

**मुक्त्ययोग्यविभागम् आह 'तमोगाः' इति ।**

[ १३ त. विषयः- मुक्त्ययोग्यद्वैविध्यम् । ]

**तमोगाः सृतिसंस्थिताः ॥५॥**

**इति द्विधा मुक्त्ययोग्याः**

---

समुच्चयार्थत्वस्य सर्वथा अनभिप्रेतत्वानुपलम्भात्, 'च'कारबलेन च तत्सहितो-पमार्थत्वस्यैव स्पष्टोक्त्या अयम् अत्र अभिप्रायः दृश्यते यत् 'तथाऽपि तस्य न केवलं समुच्चयार्थत्वम्, अपि तु यथा मुक्तास्तथा मुक्तियोग्या इत्युपमार्थत्व-ञ्चाभिप्रेतम्' इति । 'एव'कारसहितप्रथमपाठभेदे च 'तत्'पदेनैव समुच्चया-र्थक'एव'कारस्य परामर्शः; प्रथमद्वितीयपाठयोः अर्थपदश्च प्रयोजनार्थकः ग्राह्यः ।, तेन नात्र तत्पाठविरोधोऽपि; इति भाति ।

अपि च " 'एवम्'पदेन वैविध्यमात्रस्य अनुकर्षेण उपमायाम् उक्तायां सप्रकारकपाञ्चविध्यानुकर्षार्थं 'च'कारः" इति, अथवा " 'एव'कारेण पाञ्चविध्यमात्रस्य अनुकर्षेण उपमायाम् उक्तायां पञ्चप्रकारानुकर्षार्थं 'च'कारः"-इतिव्याख्यानेनापि 'च'शब्दवैयर्थ्यपरिहारेण व्याख्यानं योज्यम् । यथा हि 'चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः' इति तत्त्वसङ्ख्याने २ श्लोके 'अपि'पदेन 'पूर्वोक्त द्वैविध्य'मात्रस्य अनुकर्षः; इति टीकायां स्पष्टीकृतम् । तथाच टीका ( अस्मिन्ग्रन्थे द्वितीयभागे ६० पृष्ठे ) — " 'न केवलम् अभावो भेदवान्, किन्तु भावोऽपि' इति 'अपि'शब्दः" इति ।

**तमोगाः= तमोयोग्याः ।, न तु प्राप्ततमसः, वक्ष्यमाण-विभागविरोधात् ।,**

**सृतिसंस्थिताः= नित्यसंसारिणः ।**

**अयोग्यताऽतिशयानुसारेण उद्देशः ।**[2]

[ २९ स. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्यद्वैविध्ये–

अ) 'तमोगाः...विरोधात्' इत्यस्य व्याख्याने– १) 'तमोगास्तमोयोग्याः' इत्यस्य भावः । २) 'वक्ष्यमाणविभागविरोधात्' इत्यस्य पदार्थः, भावश्च ।

आ) 'सृतिसंस्थिता नित्यसंसारिणः' इत्यस्य व्याख्याने– 'अन्यथाऽर्थ-मूलकविभागानुपपत्ति' शङ्कानिवारकतया अवतरणम् ।

इ) 'अयोग्यता...उद्देशः' इत्यस्य अर्थः । ]

**तमोगास्तमोयोग्या इति** । अत एव 'चतुर्धैव तमोयोग्याः प्रकीर्तिताः' इतिवक्ष्यति इति भावः ।,

**वक्ष्यमाणेति** । 'ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा' इति-वक्ष्यमाण-इत्यर्थः ।। प्राप्ततमसां सृतिसंस्थत्वाभावात्; इति भावः ।

तमोयोग्यानाम् अपि सृतिसंस्थत्वात् 'तमोगाः सृतिसंस्थिताः' इतिविभागः अनुपपन्नः; इत्यत आह **सृतिसंस्थिता नित्यसंसारिण इति** ।।

**अयोग्यतेति** । विभज्यमानमुक्त्ययोग्यनिष्ठमिथ्याज्ञानलक्षणमुक्त्य-योग्यतातिशयानुसारेण इत्यर्थः ।

[ २९ के. विषयः– अस्वतन्त्रतत्त्व भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्यद्वैविध्ये–

अ) 'तमोगाः...विरोधात्' इत्यस्य व्याख्याने– १) 'तमोगास्तमोयोग्याः' इत्यस्य भावः । २) 'न तु...विरोधात्' इत्यस्य द्वेधा व्याख्याने– क) 'वक्ष्यमाण-विभागविरोधात्' इत्यस्य अर्थः भावश्च । ख) मतान्तरेण उक्तार्थे हेतुप्रदर्शनञ्च ।

---

१. वि.टि. उद्धरणम् 'वक्ष्यमाणविरोधादीति' इति ।

२. का.टि., भ.टि. उद्धरणम् 'अत्रेति' इति ।

आ) 'सृतिसंस्थिता नित्यसंसारिणः' इत्यस्य व्याख्याने– सप्रयोजनं 'तमोगस्थापेक्षया एतेषां भेद' प्रदर्शकतया 'नित्यसंसारिणः' इत्यस्य अवतरणम् ।

इ) 'अयोग्यता...उद्देशः' इत्यस्य व्याख्याने– निर्देशक्रमनिमित्तोक्तितया अवतरणम्, अर्थश्च । ]

**तमोगास्तमोयोग्या इति** । अत एव 'चतुर्धैव तमोयोग्याः प्रकीर्तिताः' इति वक्ष्यति; इति भावः ।,

**वक्ष्यमाणेति** । 'ते च प्राप्तान्धतमसः सृतिसंस्थाः' इतिवक्ष्यमाण-विभागविरोधात् इत्यर्थः । तत्र तमोयोग्यविभागत्वेन प्राप्तान्धतमसाम् उक्त-त्वात्; इति भावः ॥ 'प्राप्ततमसः सृतिसंस्थत्वाभावात्' इत्यपि आहुः ।

ननु सृतिसंस्थानां मुक्त्ययोग्यविभागोक्तिः अयुक्ता, तेषां मुक्त्ययोग्य--अविभागभूत-तमोगाविभागत्वोक्तेः; इत्यतः 'न अत्र उभयत्र सृतिसंस्था एके एव विवक्षिताः, येन उक्तदोषावकाशः स्यात्; किन्नाम भिन्ना एव' इति[1] आह नित्यसंसारिण इति ॥

तमोगानां सृतिसंस्थापेक्षया प्रथमनिर्देशे निमित्तम् आह **अयोग्यतेति** । विभज्यमानमुक्त्ययोग्यनिष्ठमिथ्याज्ञानलक्षणमुक्त्ययोग्यताऽतिशयानुसारेण इति अर्थः ।

[ २९ **वि.** विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःख-संस्थ-मुक्त्ययोग्यद्वैविध्ये–

अ) 'मुक्त्य...तमोगा इति' इत्यस्य व्याख्याने– उत्तरवाक्यावतारकतया अवतरणम् ।

आ) 'तमोगा...विरोधात्' इत्यस्य व्याख्याने– १) 'तमःस्थत्व' प्रती-तिनिरासार्थकतया अवतरणम, तात्पर्यञ्च । २) 'वक्ष्यमाणविरोधात्' इत्यस्य व्याख्याने– अर्थः, भावश्च ।

---

१. इत्यत आह

इ) 'सृतिसंस्थिता नित्यसंसारिण:'इत्यस्य व्याख्याने– सृतिसंस्थत्वार्थ-कत्वपरिहारक-आशयकतया अवतरणम्, तात्पर्यञ्च ।

ई) 'अयोग्यता...उद्देश:'इत्यस्य व्याख्याने– उद्देशक्रमनिमित्तोक्तितया अवतरणम्, अर्थश्च । ]

उत्तरवाक्यम् अवतारयति **मुक्त्ययोग्यविभागमाहेति** ॥

'तमोगा:'इत्यस्य 'तमसि स्थिता:'इत्यर्थप्रतीतिनिरासाय आह **तमो-योग्यास्तमसोऽर्हा इति**[1] । न तु 'प्राप्तम् अन्धतम: यै: ते तथा→ तमो-योग्या:'इति यावत् ।,

वक्ष्यमाणविरोधात्= 'दैत्यरक्ष:पिशाचका: । मर्त्याधमाश्चतुर्धैव तमो-योग्या:'इत्यनेन-उत्तरत्र-उच्यमानतमोयोग्यविभागस्य अयोगात्; इत्यर्थ: । 'तमोगा:'इत्यनेन 'प्राप्ततमस:'इत्यभिधाने, तमोयोग्यानाम् अनुक्तत्वात् उत्तरवाक्येन तद्विभागकथनं न युक्तम्; इति भाव: ।

'सृतिसंस्थिता:'[2]इत्यस्य 'सृतिस्था:'इत्यर्थपरिहाराय 'असाधारण्येन व्यपदेशा: भवन्ति'इत्याशयेन **सृतिसंस्थिता**[3] इति । नित्यसंसारिण:== नित्यम् =सर्वदा, संसारवन्त:; सर्वदा संसारे वर्तमाना:; इति यावत् ॥

'तमोयोग्यानाम् आदौ उद्देशे किं निमित्तम्?'इतिजिज्ञासायाम् आह **अयोग्यताऽतिशयेनेति** । मुक्त्ययोग्यानाम्, अतिशय:= उत्कर्ष:, तद-नुसारेण, उद्देश:→ तमोयोग्यानाम् आदौ उद्देश:, कृत:; इत्यर्थ: ।

[ २९ मु. विषय:– अस्वतन्त्रतत्त्व भाव-चेतन दु:खस्पृष्ट दु:खसंस्थ-मुक्त्ययोग्यद्वैवि-ये–

अ, 'मुक्त्य...तमोगा इति'इत्यस्य व्याख्याने– त्रिविधशङ्कापरिहारक-तया अवतरणम् शेषश्च ।

---

१. अत्र 'तमोयोग्या:'इतिटीकास्थपदस्य 'तमसोऽर्हा:'इति-अर्थानुवादसहितम् इदम् प्रतीकम् इति दृश्यते । २., ३. सृतिसंस्था:

आ) तमोगाः.....विरोधात्'इत्यस्य व्याख्याने– १) विवक्षितार्थ-दर्शकतया अवतरणम् । २) अर्थान्तरनिरासकतया– क) 'न तु प्राप्त-तमसः'इत्यस्य अवतरणम् । ख) तत्र हेतूक्तितया 'वक्ष्य...विरोधात्'इत्यस्य अवतरणम्, अर्थश्च ।

इ) 'सृति...संसारिणः'इत्यस्य व्याख्याने– अन्यथाऽर्थमूलकशङ्का-निवारकतया अवतरणम् ।

ई) 'अयोग्यता...उद्देशः'इत्यस्य व्याख्याने– उद्देशक्रमान्तरशङ्कावारक-तया अवतरणम् । ]

''मूले ''तमोगाः सृतिसंस्थिताः'इतिद्विधा विद्यमानान् उद्दिश्य 'मुक्त्य-योग्याः'इति मुक्त्ययोग्यत्वं विधीयते''इति प्रतीयते; तदयुक्तम्, तेषाम् अप्रस्तुतत्वेन उद्देशायोगात् ।, न च 'मुक्त्ययोग्यान् उद्दिश्य द्विधात्वं विधी-यते'इति; संज्ञाविधानस्य प्रकरणासङ्गतत्वात् ।, न च '' 'द्विधा'इति विभागः न संज्ञा''इति; तथाऽपि आदिविभागस्य व्यर्थत्वात् । ''इति इमाः शङ्काः परिहरन् अवतारयति **मुक्त्ययोग्येति** । विभागम्, 'विशेषोद्देशसहितम्'इति शेषः ॥

विवक्षितम् अर्थं दर्शयति **तमोगा इति** ।,

''अर्थान्तरप्रतीतेः न एतद्व्याख्या युक्ता'इत्यत आह **न त्विति** ।

अर्थान्तरं कुतः न भवति? इत्यत आह **वक्ष्यमाणेति** । 'तमोग'शब्दस्य तमःप्राप्तार्थत्वे तद्भेदकथक उत्तरवाक्ये प्राप्ततमस्त्व-सृतिसंस्थितत्वरूपेण कथनविरोधाच्च; इत्यर्थः ॥

अतिप्रसक्तत्वेन 'सृतौ विद्यमानत्वं'न विभाजकोपाधिः; इत्यत आह **सृतिसंस्थिता इति** ॥

'नित्यसंसारितमोयोग्ययोः नित्यसंसारिणः उत्तमत्वेन आदौ उद्देशः उचितः'इत्यत आह **अयोग्यतेति** ।

---

१. सृतिसंस्था इति ।

[ २९ का. विषयः– अस्वतन्त्रतत्त्व-भाव चेतन-दुःखस्पृष्ट-दुःख-संस्थ-विमुक्तपाञ्चवि-ये–

अ) 'तमोगाः...विरोधात्' इत्यस्य व्याख्याने– १) 'तमोयोग्याः' इत्यस्य अर्थः। २) 'वक्ष्य...विरोधात्' इत्यस्य अर्थः, भावश्च।

आ) 'सृति...संसारिणः' इत्यस्य व्याख्याने– १) विभागानुपपत्ति-शङ्कावारकतया 'नित्यसंसारिणः' इत्यस्य व्याख्याने– अवतरणम्, अर्थः, अभिप्रायश्च।

इ) 'अत्र...उद्देशः' इत्यस्य व्याख्याने– १) प्राधान्यक्रमभङ्गात् उद्देश-क्रम योग्यत्वशङ्कानिवारकतया– अवतरणम्। २) अत्र उभयत्रापि साम्यशङ्का तन्निरसनञ्च। ]

**तमोयोग्या इति**। तमःप्रापकदृढद्वेषादिरूपाः इत्यर्थः।

**वक्ष्यमाणेति**। 'द्वैत्य'[1] इत्यादिना वक्ष्यमाणतमोयोग्यविभागस्य अनु-पपत्तेः; इत्यर्थः। न च तत्र 'तमोयोग्यपदस्य प्राप्ततमस्कपरत्वेन उपपत्तिः शङ्क्या, 'ते च' इत्यादि-विभागविरोधात्; इति भावः॥

'ननु एवम् सृतिसंस्थानाम् अपि तमोयोग्यत्वात् पृथक्-ग्रहणानुप-पत्तिः' अत आह **नित्यसंसारिण इति**। मध्यमनुष्याणां लिङ्गभङ्गानङ्गीकारे नित्यलिङ्गाऽऽलिङ्गितत्वम्=नित्यसंसारित्वम्, तदङ्गीकारे तु सुखदुःखाभि-व्यञ्जकभक्तिद्वेषादिरूपत्वम् एव तत्।

'नित्याऽऽवर्तास्तु मध्यमाः' इत्यस्य अपि 'मिश्रफलाः' इत्यर्थः॥ प्राप्ता-प्राप्तफलकत्वेन तेषाम् अविभागस्तु सर्वदा संसारसमानधर्मत्वाभिप्रायेण एव; इति ज्ञेयम्॥

ननु नित्यसंसारि-अपेक्षया तमोयोग्यानाम् अधमत्वेन अप्राधान्यात्, कथं प्रथमोद्देशः? इत्यत आह **अत्रेति**।

---

१. त.वि.श्लो. ७.

योग्येषु योग्यताऽतिशयेन इव, अयोग्येषु अयोग्यताऽतिशयेन तमोयोग्यानाम् एव प्राधान्यसम्भवात् प्रथमोद्देशः; इत्यर्थः ।

ननु योग्यत्वाभावरूप-अयोग्यत्वस्य उभयत्र समानत्वात्, कथम् एकत्र अतिशयः? इति चेत्; न, स्वरूपतः तदभावेऽपि, फलतः तद्भावात्; द्वेषादिरूपयोग्यतायाः स्वरूपतः अपि अतिशयसद्भावाच्च ।

[ २९ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्यद्वैविध्ये–

अ) 'तमोगाः...विरोधात्'इत्यस्य व्याख्याने– १) सविग्रहाभिप्रायकतया अवतरणम् । २) 'वक्ष्य...विरोधात्'इत्यस्य व्याख्याने– क) पदार्थः । ख) अस्य उपलक्षणत्वञ्च ।

आ) 'सृति...संसारिणः'इत्यस्य द्वेधा व्याख्याने– १) विग्रहार्थाभिप्रायाभ्यां सह अवतरणम् । २) प्रकारान्तरेण 'असाधारण्येन व्यपदेश'-भावार्थकतया अवतरणम् । ]

'तमः, गच्छन्ति=प्राप्नुवन्ति'इतिविग्रहम् अभिप्रेत्य व्याचष्ट **तमोगास्तमोयोग्या इति** ।

**वक्ष्यमाणविभागेति** । "ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा" इति तमोगानां द्वेधा विभागः वक्ष्यते; 'तमोग'शब्देन च प्राप्ततमस्कग्रहणे, तत्र सृतिसंस्थविभागकथनं विरुद्धम् आपद्यते; इत्यर्थः ।

उपलक्षणम् एतत् ।। "चतुर्धैव तमोयोग्याः प्रकीर्तिताः"इति तमोयोग्यानां विभागः वक्ष्यते; तेषां च प्राक् अनुद्दिष्टत्वे, कथं तेषां विभागः उपपन्नः स्यात्? अतः वक्ष्यमाणविभागानुपपत्तिश्च; इति द्रष्टव्यम् ।।

---

२. अतिशयेनैव ।

१. अयं विषयः ग्रन्थान्तरे नास्ति ।

२. त.सं. श्लो. । 'इति वक्ष्यमाणविभागविरोधात्'इत्येव ग्रन्थान्तरे ।

" 'सृतौ सम्यक् स्थिताः'= सृतिसंस्थिताः; स्थितेः सम्यक्ता च सदातनत्वम् एव" इत्यभिप्रेत्य व्याचष्टे **सृतिसंस्थिता इति** ॥ यद्वा " 'अब्भक्षो वायुभक्षः' इत्यादिवत् असाधारण्येन व्यपदेशः अयम्" इतिभावेन व्याचष्टे **सृतिसंस्थिता इति** ॥

ननु तमोयोग्यापेक्षया नित्यसंसारिणाम् उत्तमत्वात् तेषाम् आदौ उद्देशे कर्तव्ये कुतः अयं विपर्ययः ? इत्यत आह **अत्रेति** ।

[ ३० टी. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यविभागे–

अ) 'दैत्य...प्रकीर्तिताः' इत्यस्य व्याख्याने– तमोयोग्यप्रभेदोक्तितय अवतरणम् ।

आ) 'इति' शब्दाध्याहारः ।

इ) 'एव' पदकृत्यम् ।

ई) 'प्रकीर्तिताः' इतिपदोक्तार्थः । तद्विवेचनञ्च । ]

**तमोयोग्यानां प्रभेदम् आह 'दैत्य' इति ।**

[ १४ त. विषयः– तमोयोग्यचातुर्विध्यम् । ]

**दैत्यरक्षःपिशाचकाः ।**
**मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ॥८॥**

'मर्त्याधमाः' इत्यतःपरम् 'इति' शब्दः अध्याहार्यः ।

अप्रसिद्धत्वात् अस्य भेदस्य अश्रद्धेयत्वं निवारयितुम् 'एव' शब्दः ।

'प्रकीर्तिताः' इति अत्र आगमसम्मतिम् आचष्टे । स च अन्यत्र उदाहृतः द्रष्टव्यः । ]

---

३. 'उप...इति' इति ग्रन्थान्तरे नास्ति । ४. कर्तव्ये कार्ये

[ ३० स. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यचातुर्विध्ये–

अ) 'मर्त्या...अध्याहार्यः' इत्यस्य व्याख्याने– मर्त्याधमचातुर्विध्य-भ्रान्तिवारकतया अवतरणम् ।

आ) 'अप्रसिद्धत्वात्' इत्यस्य अर्थश्च । ]

मर्त्याधमानां चातुर्विध्यान्वयभ्रान्तिं वारयितुम् आह **मर्त्याधमा इत्यत इति ।**

**अप्रसिद्धत्वादिति ।** अतिप्रसङ्गाभावात् इत्यर्थः ।

[ ३० के. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यचातुर्विध्ये–

अ) 'मर्त्या...अध्याहार्यः' इत्यस्य द्वेधा व्याख्याने १) 'दैत्यादीनां चातुर्विध्य' भ्रान्तिनिरासकतया अवतरणम् । २) प्रकारान्तरेण मर्त्याधम-चातुर्विध्यभ्रान्तिनिवारकतया अवतरणम् ।

आ) 'अप्रसिद्ध...एवशब्दः' इत्यस्य अर्थः ।

इ) 'प्रकीर्तिताः...द्रष्टव्यः' इत्यस्य व्याख्याने– १) पूर्ववाक्य-सम्बन्धप्रदर्शकतया अवतरणम् । २) पदार्थश्च । ]

''दैत्य' इत्यादिमूले 'दैत्य' इत्यादीनां प्रत्येकं चातुर्विध्यम् उच्यते'' इति भाति, तच्च तमोगानां भेदोक्तेः प्रक्रान्तत्वात् अयुक्तम्; इत्यत आह **मर्त्याधमा इत्यतःपरमिति ।**

यद्वा मर्त्याधमानां चातुर्विध्यान्वयभ्रान्तिं वारयति **मर्त्याधमा इत्यतः परमिति ॥**

**अप्रसिद्धत्वादिति ।** अप्रसिद्धत्वाभावात् इत्यर्थः ॥

अत एव उक्तार्थे 'प्रकीर्तिताः' इति आगमप्रसिद्धिः उक्ता; इत्याह **प्रकीर्तिता इति ।**,

अन्यत्र= तत्त्वविवेके ।

[ ३० वि. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यचातुर्विध्ये –

अ) 'मर्त्या...अध्याहार्यः' इत्यस्य व्याख्याने– 'प्रत्येकं चातुर्विध्य' प्रतीतिनिरासार्थकतया अवतरणम्, पदार्थश्च ।

आ) 'अप्रसिद्ध...एवशब्दः' इत्यस्य व्याख्याने– एवकारप्रयोजनोक्तितया अवतरणम्, पदार्थश्च ।

इ) 'प्रकीर्तिताः...द्रष्टव्यः' इत्यस्य व्याख्याने– १) 'प्रकीर्तिताः'-इत्यस्य वैयर्थ्यनिरासकतया 'प्रकीर्तिताः...आचष्टे' इत्यस्य अवतरणम्, पदार्थश्च । २) उक्तार्थविवरकतया 'स च...द्रष्टव्यः' इत्यस्य अवतरणम्, पदार्थः, उक्तार्थे आगमप्रदर्शनञ्च । ]

'दैत्यरक्षःपिशाचकाः मर्त्याधमाः प्रत्येकं चतुर्धा' इत्यर्थप्रतीतिनिरासाय आह **मर्त्याधमा इत्यत इति** । इति-एतस्मात् शब्दात्, परम्= अनन्तरम्, 'इति' शब्दः, अध्याहर्तव्यः; इत्यर्थः ॥

'एव'कारप्रयोजनम् आह **अप्रसिद्धत्वादिति** । अस्य= एवंविधस्य, भेदस्य= तमोयोग्यविभागस्य, अश्रद्धेयत्वम्= अविश्वसनीयत्वम्, निराकर्तुम्, "एव'कारः, इत्यर्थः ॥

'प्रकीर्तिताः' इत्यस्य वैयर्थ्यम् आशङ्क्य आह **प्रकीर्तिता इति** । प्रकीर्तिताः= आगमैः उक्ताः, इत्यनेन, अत्र– तमोयोग्यप्रभेदे, आगमसम्मतिम् आगमानां संवादम्, आचार्यः, आह; इत्यर्थः ।

'कः तत्र आगमः ?' इतिजिज्ञासायाम् आह **स चेति** । तत्र प्रमाणभूतः तु आगमः, अन्यत्र= ग्रन्थान्तरे, आचार्यैः उदाहृतः, द्रष्टव्यः= अवलोकनीयः; इत्यर्थः ।,

'सात्त्विका राजसाश्चैव तामसाश्च त्रिधा जनाः ।
सात्त्विकास्तत्र देवाद्या राजसाः सृतिगाः सदा ॥

मर्त्याधमास्तामसास्तु दैत्यरक्षःपिशाचकाः ।
स्वरूपभूतविद्वेषाद्धरौ गच्छन्ति ते तमः ॥'

इतिबृहत्संहितावाक्यादिः आगमः उक्तार्थे प्रमाणम् ; इति ज्ञेयम् ।

[ ३० मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यचातुर्विध्ये–

अ) शङ्काद्वयनिवारकतया 'तमो...दैत्येति' इत्यस्य अवतरणम्; पदार्थश्च । ]

'उत्तरमूले चतुर्धा विद्यमानान् उद्दिश्य तमोयोग्यत्वं विधीयते' इति प्रतीयते; तदयुक्तम्, अप्रस्तुतत्वेन उद्देशायोगात् ।, न च 'तमोयोग्यान् उद्दिश्य चतुर्धात्वं विधीयते' इति; तथाऽपि प्रथमभागस्य वैयर्थ्यात् च ।; इत्येताः शङ्काः परिहरन् अवतारयति **तमोयोग्यानामिति** ।

प्रभेदम्= विशेषोद्देशपूर्वकविभागम्; इत्यर्थः ।

[ ३० क्र. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य तमोयोग्यचातुर्विध्ये–

अ) 'तमो...दैत्येति' इत्यस्य व्याख्याने– 'प्रत्येकं चतुर्विध्य' भ्रमनिरासार्थकतया अवतरणम्, अन्वयरूपो भावश्च ।

आ) 'मर्त्या...अध्याहार्यः' इत्यस्य व्याख्याने– अन्वयनिरासार्थकतया अवतरणम् ।

इ) 'अप्रसिद्ध...एवशब्दः' इत्यस्य व्याख्याने– पदार्थः ।

ई) 'प्रकीर्तिताः...द्रष्टव्यः' इत्यस्य व्याख्याने– १) 'एव' पदकृत्यविवरकतया अवतरणम् । २) प्रकीर्तिताः...अचष्टे' इत्यस्य व्याख्याने– पदार्थः, सप्रयोजन'प्रकीर्तिताः' इतिपदसम्बन्धप्रदर्शनरूपो भावश्च । ३) 'स च ...द्रष्टव्यः' इत्यस्य व्याख्याने– क) तदागमप्रदर्शनम् । ख) तदागमार्थः ।

उ) एतन्मूलसम्बद्ध‘तमोयोग्यानां...द्रष्टव्यः’इतिटीकापङ्क्तिव्याख्या-समाप्त्यनन्तरम् अथवा एतदुपलक्षणत्वेन मूलव्याख्याने- १) अत्र उद्देश-क्रमनिमित्तस्य उक्तप्रायता । २) ‘क’प्रत्ययसूचितार्थः, मर्त्याधमानां पृथगुक्तेः एतत्सूचितार्थप्रयोजनकत्वञ्च । ]

‘दैत्यानां प्रत्येकं चातुर्विध्यम् उच्यते’इतिभ्रमनिरासाय **तमोयोग्या-नामिति** । ‘तमोयोग्याः चतुर्विधा’इति अन्वयः, न तु प्रत्येकम्; इति भावः ॥

“ननु एवम् ‘दैत्य’इत्यादेः अनन्वयः”इत्यत आह **मर्त्याधमा इति** ॥

**अप्रसिद्धत्वादिति** । तन्त्रान्तरासिद्धत्वात् इत्यर्थः । अस्य→ तमो-योग्याश्रितस्य, अश्रद्धेयत्वम्= अनिश्चितप्रामाण्यकत्वम्= अप्रामाण्यशङ्काम् इति यावत् ॥

‘ननु एतावता एव कथं तन्निवारणम्?’अत आह **प्रकीर्तिता इति** ।

अत्र→ मुक्त्ययोग्यप्रभेदविषये ॥

प्रकीर्तिताः इत्यस्य पूर्वत्र उत्तरत्र च सम्बन्धेन सर्वत्र एव अप्रामा-णिकशङ्कानिरासः; इति भावः ।

स च आगमः—

‘शृण्वे वीर उग्रमुग्रन्दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥’[1],

‘सात्त्विका राजसाश्चैव तामसास्त्रिविधा जनाः ।
सात्त्विकास्तत्र देवाद्या राजसाः सृतिगास्तथा ॥
मर्त्याधमास्तामसास्तु दैत्यरक्षःपिशाचकाः ।
स्वरूपभूतविद्वेषादधो गच्छन्ति ते तमः ॥’

इत्यादिभाष्यादौ उदाहृत. इत्यर्थः ।,

---

१. ब्र.सू.भाष्ये उदाहृतः ऋ.सं. ६–४७–१६.

वीरः= अध्यवसायान्तगामी परमेश्वरः, सर्वान् , उग्रान्→ दैत्यादीन् दमयन्, विरुद्धान्- देवादीन् संसारम् अतिक्रम्य स्वपदं नयन् , देवादिषु श्रूयते; स एव मुक्तामुक्तनियामकः, मध्यममनुष्यप्रजाः संसारे एव आवर्तयति, न तु साधनानुष्ठानेऽपि मोचयति; यतः, स्वायोग्यप्रयत्नात् एधमानान् द्वेष्टि; इति श्रुत्यर्थः ॥

अत्र 'दैत्यादीनाम् अयोग्यताऽतिशयानुसारेण उद्देशः'इति उक्तप्रायम् ।

मर्त्याधमेभ्यः दैत्यादीनाम् कुत्सार्थक'क'प्रत्ययेन बहुतरायोग्यत्वम् सूचितम् । अत एव एतेषां पृथक् उक्तिः; इति ज्ञेयम् ।

[ ३० भ. विषयः- अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ -मुक्त्ययोग्य तमोयोग्यचातुर्विध्ये-

अ) 'मर्त्या...अध्याहार्यः'इत्यस्य व्याख्याने- विपक्षबाधकरूपः भावः ।

आ) 'अप्रसिद्ध.. एवशब्दः'इत्यस्य व्याख्याने - 'एव'कारप्रयोजनदर्शकतया अवतरणम्, एतत्प्रयोजनस्य सार्थक्यरूपः भावश्च ।

इ) 'प्रकीर्तिताः...द्रष्टव्यः'इत्यस्य व्याख्याने- १) 'प्रकीर्तिताः'इति पदप्रयोजनरूपम वोक्तितया 'प्रकीर्तिताः ..आचो'इत्यस्य अवतरणम् ,भावश्च । २) उक्त-आगमोक्तितया 'स च...द्रष्टव्यः'इत्यस्य व्याख्याने- क) अवतरणम् । ख) अन्वयरूपः अर्थः । ग) 'अन्यत्रोदाहृतः'इत्यस्य अर्थश्च । ]

इति शब्दोऽध्याहार्य इति । अन्यथा दैत्यादीनां प्रत्येकं चातुर्विध्यं प्रसज्ज्येत; इति भावः ॥

"तमोयोग्यचातुर्विध्ये वादिनां पूर्ववत् विप्रतिपत्त्यभावेन तन्निरासरूपप्रयोजनाभावात् एवशब्दः अत्र व्यर्थः"इत्यतः प्रकारान्तरेण प्रयोजनं

दर्शयति **अप्रसिद्धत्वादिति ।** सावधारणोक्तौ हि श्रोतॄणां श्रद्धा समुत्पद्यते; इति भाव: ॥

"ननु 'अप्रसिद्धस्य तमोयोग्यचातुर्विध्यस्य अवधारणम् अपि कथं सम्भवति ?'इत्याशङ्कानिरासाय 'प्रकीर्तिता:'इति पदं प्रवृत्तम्"इतिभावेन आह **प्रकीर्तिता इति ।** अबहुश्रुतानाम् अप्रसिद्धत्वेऽपि; सर्वथा प्रमाणप्रसिद्ध्य-भावाभावात्, अवधारणम् उपपद्यते; इति भाव: ।

'क:[2] असौ आगम: ?'इत्यत आह **स चेति ।;**

आगम: च; इत्यर्थ: ।,

**अन्यत्रोदाहृत इति ।→**

'अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरन्नम: ।
तद्गाढान्तो महीं व्याप्तो सेर्वा व्यापयतोऽनिशम् ॥
असुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिता: ।
मानुषेष्वधमा किञ्चिद्वेपयुक्ता: सदा हरौ ॥
दु:खनिष्ठास्ततस्तेऽपि नित्यमेव न संशय: ।'

इत्यादि-भागवततात्पर्यभारततात्पर्यनिर्णय-आदौ उदाहृत:; इत्यर्थ: ।

[ ३१ टी. विषय:– अस्वतन्त्रतत्त्व-भाव-चेतन-दु:खस्पृष्ट दु:खसंस्थ-मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण विभागे–

अ) 'ते च...द्विधा'इतिमूलस्य व्याख्याने– चतुर्विधतमोयोग्यानां प्रकारान्तरेण द्वैविध्योक्तितया अवतरणम् ।

आ) पदार्थे– १) 'ते च'पदार्थ: । २) 'सृतिसंस्था:'पदार्थ: ।

इ) एतद्विभागस्य 'योग्यता'पदान्यथाप्रतीतिमूलक अनुपपत्तिनिवारणञ्च । ]

---

१. अप्रसिद्ध्यभावात्

२. इदमवतरणम् ग्रन्थान्तरे नास्ति । केवलं प्रतीकमेव वर्तते ।

चतुर्विधा अपि एते प्रत्येकं द्विधा इत्याह 'ते च' इति ।

[ १५ त. तमोयोग्यानां प्रकारान्तरेण द्वैविध्यम् । ]

**ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ॥६॥**

ते च[3] = चतुर्विधा अपि । सृतिसंस्थाः= संसारे वर्तमानाः, न अधुनाऽपि तमः प्राप्ताः ।

योग्यतायाः चैतन्यस्वभावत्वेन, तमोयोग्यानाम् अयं विभागः न अनुपपन्नः ॥

[ २१ स. विषयः— अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण द्वैविध्ये—

अ) 'सृति...प्राप्ताः' इत्यस्य व्याख्याने- १) 'सृतिसंस्थ' पदस्य नित्यसंसारित्वभ्रममूलकशङ्कावारकतया अवतरणम् । २) 'नाधुनाऽपि तमः प्राप्ताः' इत्यस्य भावश्च ।

आ) 'योग्यतायाः...नानुपपन्नः' इत्यस्य व्याख्याने— 'योग्यता' पदान्यथाप्रतीतिमूलकशङ्कावारकतया अवतरणम्, उक्तार्थोपपादकहेतुरूपो भावश्च । ]

ननु 'सृतिसंस्थ' पदेन नित्यसंसारिणाम् उक्तत्वात्, कथं तेषां तमोयोग्यविभागत्वम्? इत्यत आह सृतिसंस्था इत्यादिना ।,

नाधुनाऽपीति । प्राप्स्यमानतमसः इति भावः ।

योग्यतायाः फलप्राप्तिपर्यन्तत्वात्, कथं प्राप्तान्धतमसां तमोयोग्यप्रभेदत्वम्? इत्यत आह योग्यतायाः इति ।,

---

१. वि.टि. 'चतुर्धा' इति उद्धरणम् ।
२. वि.टि. उद्धरणम् 'द्विविधा' इति ।
३. 'ते चतुर्विधा अपीति' इति का.टि., भ.टि. उद्धरणम् ।

'स्वभावाऽऽख्या योग्यता या हठाऽऽख्या याऽनादिसिद्धा सर्वजीवेषु नित्या'[1] इति-उक्तत्वात्; इति भावः ॥

[ ३१ के. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण द्वैविध्ये–

अ) 'सृति...प्राप्ताः' इत्यस्य व्याख्याने– नित्यसंसारित्वार्थकत्वभ्रम-मूलकशङ्कावारणार्थकतया 'सृतिसंस्थ'पदार्थोक्तितया अवतरणम्, पदार्थश्च ।

आ) 'योग्यतायाः...नानुपपन्नः' इत्यस्य व्याख्याने– 'योग्यता'पदार्थ-भ्रममूलक-एतद्द्वैविध्यानुपपत्तिशङ्कावारकतया अवतरणम्, भावश्च । ]

'सृतिसंस्थ'पदेन नित्यसंसारिणाम् उक्तत्वात्, कथं तेषां तमोयोग्य-प्रभेदत्वम्? इत्यतः 'सृतिसंस्थाः'पदं व्याचष्टे **संसार इति** । प्राप्स्यमान-तमसः इत्यर्थः ॥

"ननु च तमोयोग्यानां 'प्राप्तान्धतमसः सृतिसंस्थाः' इतिविभागः न युक्तः; प्राप्तान्धतमसां[2] तमोयोग्यत्वाभावात्, फलप्राप्तिपर्यन्तत्वात्[3] योग्यतायाः" इत्यत आह **योग्यताया इति** ।

'स्वभावाऽऽख्या योग्यता या हठाऽऽख्या याऽनादिसिद्धा सर्वजीवेषु नित्या' इत्युक्तेः योग्यतायाः चैतन्यस्वभावत्वात्, स्वभावस्य च अनपायात्; अदोषः; इति भावः ॥

[ ३१ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट-दुःखसंस्थ-मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण विभागे–

अ) 'चतुर्धा...ते चेति' इत्यस्य व्याख्याने– 'तत्'शब्दान्यथाप्रतीति-निरासार्थक-उत्तरवाक्यावतारकतया अवतरणम्, पदार्थश्च ।

---

१.४. भार.ता.नि. २२–८४. २. तमसान्तं

३. फलप्राप्तिपदार्थत्वाद्योग्यतया

आ) 'ते च...प्राप्ताः' इत्यस्य व्याख्याने– १) 'तत्' शब्दार्थोक्तितया 'चतुर्धाऽपि' इत्यस्य अवतरणम्, अर्थश्च । २) 'प्राप्तान्धतमसः' इतिमूलस्य विग्रहः । ३) 'सृति...प्राप्ताः' इत्यस्य व्याख्याने क) अन्यथाप्रतीतिवारकतया 'सृति..वर्तमानाः' इत्यस्य व्याख्याने अवतरणम्, विग्रहाभिप्रायसहितम् 'संसारे वर्तमानाः' इत्यस्य अवतरणञ्च । ख) 'न...प्राप्ता;' इत्यस्य व्याख्याने– 'सृतिसंस्थाः' इतिपदपर्यवसन्नार्थोक्तितया अवतरणम्, अर्थश्च ।

इ) 'योग्यतायाः... नानुपपन्नः' इत्यस्य व्याख्याने– उक्तविभागायोग्यत्वशङ्कानिवारकतया अवतरणम्, अर्थश्च ।]

" 'ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा' इतिउत्तरवाक्ये 'तत्' शब्दः मर्त्याधममात्रपरः" इतिअन्यथाप्रतीतिनिरासाय उत्तरवाक्यम् अवतारयति **चतुर्धा अपीत इति** । चतुर्धा, अपि, एते– दैत्यरक्षःपिशाचकमर्त्याधमाः, प्रत्येकम्– एकैके, द्विविधा= द्वयोपेताः; इत्यर्थः ॥

'तत्' शब्दार्थम् आह **चतुर्धा अपीति** । दैत्यरक्षःपिशाचकमर्त्याधमाः चतुर्विधा अपि तमोयोग्याः इत्यर्थः ।

प्राप्तम्, अन्धन्तमः, यैः ते– प्राप्तान्धतमसः ।

'सृतिसंस्थिताः' इतिपदवत् 'सृतिसंस्थाः' इत्यस्य अर्थप्रतीतिनिरासाय **सृतिसंस्था इति** ॥ सृतौ, संस्था= स्थितिः, येषां ते– तथा; इतिविग्रहम् अभिप्रेत्य आह **संसारे वर्तमाना इति** ।

तमोगतानाम् अपि कदाचित् संसारे वर्तमानत्वम् अस्ति, इति; पर्यवसन्नम् अर्थम् आह **नाधुनापीति** । इदानीम् अपि तमःप्राप्ताः न भवन्ति इत्यर्थः ॥

ननु तमःप्राप्तानां तमोयोग्यत्वाभावात्, प्राप्ततमसां तमोयोग्यप्रभेदत्वम् अयुक्तम्; इत्यत आह **योग्यताया इति** । तमोयोग्यतायाः, तमोयोग्यचेतनस्वरूपत्वेन, तमोयोग्यानाम्, अयम्– प्राप्ततमस्त्व-सृतिसंस्थत्वाभ्याम्, विभागः, उपपन्नः एव; इत्यर्थः ॥

[ २१ मु. विषयः– अस्वतन्त्रतत्त्व-भाव-चेतन-दुःखस्पृष्ट दुःखसंस्थ -मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण द्वैविध्ये–

अ) 'चतुर्विधा...ते चेति' इत्यस्य व्याख्याने– द्विविधशङ्कानिवारकतया अवतरणम्, पदार्थश्च ।

आ) 'योग्यतायाः ...नानुपपन्नः' इत्यस्य व्याख्याने– 'योग्यता' पदस्वरूप भ्रममूलकशङ्कानिवारकतया अवतरणम्, भावश्च । ]

" 'ते च' इति 'तत्' शब्देन केषाञ्चित् एव तमोयोग्यानां परामर्शः क्रियते" इति प्रतीयते; तदयुक्तम्, सर्वपरामर्शकत्वे सम्भवति एकदेशपरामर्शकत्वायोगात् ।, न च अनया एव अनुपपत्त्या चतुर्धा अपि परामर्शविषयाः इति; तथाऽपि व्यवस्थया द्वैविध्यविधानायोगात् ।; इत्यत आह चतुर्विधा अपीति । अपिः अभिव्याप्तौ ।

ननु न अयं तमोयोग्यानां विभागः युक्तः, योग्यतायाः फलसाधनानुष्ठितार्थत्वेन फलपर्यन्तत्वेन प्राप्ततमस्सु तदयोगात्; इत्यत आह योग्यतायाश्चेति । 'स्वभावाऽऽख्या योग्यता या हठाऽऽख्या' इतिप्रमाणेन[1] योग्यतायाः स्वरूपत्वेन प्रमितत्वात्, स्वरूपस्य प्राप्ततमस्सु च सत्त्वात्, न दोषः; इति भावः ॥

[ २१ का. विषयः– अस्वतन्त्रतत्त्व भाव चेतन-दुःखस्पृष्ट-दुःखसंस्थ -मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण द्वैविध्ये–

अ) 'चतुर्विधा...ते चेति' इत्यस्य व्याख्याने– 'तत्' पदार्थभ्रमनिरासकतया अवतरणम् ।

आ) पदार्थे– १) 'ते...अपि' इत्यस्य व्याख्याने– 'च' शब्दार्थभ्रममूलकविरोधनिवारकतया अवतरणम्, भावश्च । २) 'सृति...प्राप्ताः' इत्यस्य व्याख्याने– क) नित्यसंसारित्वार्थकत्वनिरासकतया 'संसारे वर्तमानाः' इत्यस्य

१. भार.ता.नि. २२–८४

अवतरणम्, अर्थश्च । ख) प्राप्ततमस्कसाङ्कर्यनिवारकतया 'न...प्राप्ता:' इत्यस्य व्याख्याने- अवतरणम्, द्विविधार्थनिष्पत्तिरूप: भावश्च ।

इ) 'प्राप्तान्धतमस:' इतिमूलस्य व्याख्याने- प्रयोगसाधुत्वम् ।

ई) 'योग्यताया:...नानुपपन्न:' इत्यस्य व्याख्याने- अनुपपत्तिशङ्का-निवारकतया अवतरणम्, योग्यतास्वरूपनिरूपणात्मको भाव:, एतदर्थे प्रमाणोदाहरणञ्च ।

उ) चेतनविभागसमाप्तिश्च । ]

"मर्त्याधमानाम् एव 'ते च' इत्यनेन परामर्श:" इतिप्रतीतिं वारयितुं **चतुर्विधा अपीति** ॥

ननु एवम् दैत्यादिव्यावर्तक'च'शब्दविरोध:; इत्यत आह **ते च[1] चतुर्विधा अपीति** । 'ते च' इति च: 'अपि' अर्थ:, न 'तु' अर्थ:; इति भाव: ।

'सृतिसंस्थ' शब्दस्य नित्यसंसारिपरत्वभ्रमभङ्गाय आह **संसार इति** । अविद्याऽनुबद्धा:, इत्यर्थ: ॥ ननु प्राप्ततमस्कानाम् अपि कदाचित् साङ्कर्यम्; अत आह **नाधुनाऽपीति** । तथाच एतत्कल्पानुभूयमानदु:खमात्रा: प्राप्ततमस्का:, तदन्यत्वविशिष्टत्वं वा; एतत्कल्पीयाविद्योपलक्षितत्वं वा[2]; सृतिसंस्थत्वम् ।, अत: न साङ्कर्यम्; इति भाव: ॥

समासान्तविधे: अनित्यत्वात् 'प्राप्तान्धतमस:' इति सम्भवति ॥

ननु प्राप्तान्धतमसानां कथं तमोयोग्यप्रभेदत्वम्? अत आह **योग्यताया इति** । तत्प्रागभावाधिकरणत्वरूपतद्योग्यताया: स्वरूपत्वेन सर्वदा एव सत्त्वात्; इति भाव: । यथाऽऽहु: आचार्या:[3]—

'स्वरूपाऽऽख्या योग्यता या हठाऽऽख्या
याऽनादिसिद्धा सर्वजीवेषु नित्या' इति ॥

इति चेतनविभाग: ॥

---

१. 'ते चतुर्विधा' इत्यपि पाठ: उपलभ्यते ।
२. एतत्कल्पीयविद्योप    ३. मध्वाचार्या: भार.ता.निर्णये २२-८४

[ ३१ भ. विषय:– अस्वतन्त्रतत्त्व-भाव-चेतन-दु:खस्पृष्ट-दु:खसंस्थ -मुक्त्ययोग्य-तमोयोग्यानां प्रकारान्तरेण द्वैविध्ये–

अ) 'ते...अपि'इत्यस्य व्याख्याने– 'च'शब्दार्थात्मकभावोक्तितया अवतरणम् ।

आ) सप्रयोजनविवक्षितार्थोक्तितया 'सृति...वर्तमाना:'इत्यस्य व्याख्याने– 'संसारे वर्तमाना:'इत्यस्य अवतरणम्; एतदर्थविवरकतया 'न... प्राप्ता:'इत्यस्य अवतरणञ्च ।

इ) 'योग्यताया:...नानुपपन्न:'इत्यस्य व्याख्याने– 'योग्यता'पदार्थभ्रम-मूलकविभागानुपपत्तिशङ्कानिरासकतया अवतरणम्; उक्तार्थे प्रमाणोदाहरणात्मको भावश्च । ]

" 'च'[1]शब्द: 'अपि'अर्थ:''इतिभावेन व्याचष्टे **चतुर्विधा अपीति** ॥

'सृतिसंस्थित'पदेन प्राक् नित्यसंसारिणां गृहीतत्वात्, तेषां तमोयोग्यप्रभेदत्वानुपपत्ते: अत्र 'सृतिसंस्थ'पदस्य विवक्षितम् अर्थम् आह **संसार इति** ।

तस्यैव[2] विवरणम् **नाधुनाऽपीति** ॥

ननु[3] योग्यताया: फलप्राप्तिपर्यन्तत्वात्, कथं प्राप्तान्धतमसानां तमोयोग्यप्रभेदत्वम्! इत्यत आह **योग्यताया इति** ।

'स्वभावाऽऽख्या योग्यता या हठाऽऽख्या याऽनादिसिद्धा सर्वजीवेषु नित्या ।' इत्युक्ते:[4]; इति भाव: ॥

॥ इति चेतननिरूपणम् ॥

---

१,२,३. एतद्विषयजातं ग्रन्थभेदेन उपलभ्यते ।

४. भार.ता.नि. २२–८४.

[ ३२ टी. अस्वतन्त्रतत्त्व-भाव-अचेतननिरूपणे-

अ) पूर्वोत्तरग्रन्थसङ्गतिप्रदर्शनपूर्वकम् अचेतनविभागोक्तितया 'नित्या-...मतम्'इतिमूलस्य अवतरणम् ।

आ) पूर्वोक्ततत्त्वानाम् अपि नित्यत्वादिग्रहणस्य अविरुद्धता ।

इ) पदार्थे- १) 'नित्यानित्यविभागेन'इत्यस्य अर्थः, अभिप्रायश्च । २) 'एव'कारप्रयोजनम् । ३) 'मतम्'पदसूचितार्थः, तद्विवरणञ्च ।

ई) उद्देशक्रमनिमित्तञ्च । ]

एवम् चेतनविभागम् विस्तरेण अभिधाय अवसरप्राप्तम् अचेतन-विभागम् आह 'नित्या'इति ॥

**नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥७॥**

अत्र अपि 'अचेतनम् एव एवंविभागवत्'इति अर्थानभ्युप-गमात्, पूर्वोक्ततत्त्वानाम् अपि प्रमाणान्तरेण नित्यत्वादिग्रहणम् न विरुद्धम् ॥

'नित्यानित्यविभागेन'इत्यस्य 'नित्यानित्यत्वेन, तद्विभागेन' च'इत्यर्थः । तथाच 'नित्यानित्यम्, नित्यम्, अनित्यञ्च च' इति अचेतनम् त्रिविधम्; इति उक्तं भवति ।

केचित् सर्वं क्षणिकं मन्यमानाः नित्यं न मन्यन्ते, अपरे तु सत्कार्यवादिनः अनित्यं न अङ्गीकुर्वन्ति, सर्वे अपि नित्यानित्यं विरोधात् न अभ्युपगच्छन्ति; तन्निरासाय[2] 'एव'कारः ।

न[3] प्रतिज्ञामात्रेण अर्थसिद्धिः, इति; प्रामाणिकत्वम् उक्तविभा-गस्य सूचयति 'मतम्'इति । तच्च लेशतो दर्शयिष्यामः ॥

यद्यपि 'नित्यम्, नित्यानित्यम्, अनित्यम्'इति उद्देशः कार्यः, प्राधान्यात्; तथापि उक्तिलाघवाय क्रमोल्लङ्घनम् ।

---

१. वि.टि., मु.टि. 'ततश्चेति'इति प्रतीकम् । २. का.टि., भ.टि. 'तन्निरासार्थमिति'इति प्रतीकम् । ३. वि.टि. 'न हीति'इति प्रतीकम् ।

[ ३२ म. अस्वतन्त्रतत्त्व-भाव-अचेतनत्रैविध्ये-

अ) 'अत्रापि. विरुद्धम्' इत्यस्य व्याख्याने- १) पूर्वोक्तस्वतन्त्रादितत्त्वेषु नित्यत्वाद्यभावशङ्कानिवारकतया अवतरणम् । २) 'आदि'पदसङ्ग्राह्यप्रदर्शनम् । ३) उक्ततत्त्वेषु नित्यत्वादिविवेकश्च ।

आ) 'नित्यानित्य..दर्शयिष्यामः' इत्यस्य व्याख्याने- १) 'अपार्थनिरासकतया 'नित्यानित्य. .भवति' इत्यस्य अवतरणम् । २) 'केचित्...एवकारः' इत्यस्य व्याख्याने तन्निरासार्थम् इत्युक्तनिरसनप्रकारस्थलनिर्देशः । ३) 'न ...दर्शयिष्यामः' इत्यस्य व्याख्याने, 'लेशतो दर्शयिष्यामः' इत्यस्य अर्थश्च ।

इ) 'यद्यपि...क्रमोल्लङ्घनम्' इत्यस्य व्याख्याने- १) 'इत्युद्देशः कार्यः' इत्यस्य भावः । २) 'लाघवाय' इत्यस्य लाघवविवरणात्मको भावश्च । ]

ननु स्वतन्त्रतत्त्वम्, अभावतत्त्वम्, चेतनतत्त्वं च; नित्यम्, अनित्यम्, नित्यानित्यं वा ? न अन्यतरत् अपि, त्रयस्यापि अचेतनप्रभेदत्वेन उक्तत्वात्; इत्यत आह अत्रापीति । 'नित्यत्वादि' इति 'आदि' पदेन नित्यानित्यत्वानित्यत्वग्रहणम्[1] । तत्र स्वतन्त्रचेतनतत्त्वयोः अभावतत्त्वमध्ये अपि अत्यन्ताभावस्य नित्यत्वम्, प्रागभावप्रध्वंसयोः तु नित्यानित्यत्वम् इति विवेकः ॥

'नित्यानित्यविभागे' इत्यस्य 'नित्यत्वानित्यत्वभेदेन' इतिवत् 'नित्यत्वानित्यत्वाभ्यां विभागे' इत्यर्थः' इति प्रतीयते; तत् अनुपपन्नम्, त्रैविध्योक्तिविरोधात्; इत्यत आह नित्यानित्यविभागेनेत्यस्येति ।

तन्निरासार्थमिति । निरसनप्रकारश्च तत्त्वविवेके[2] एव द्रष्टव्यः[3] ।

लेशत इति । वेदस्य नित्यत्वं 'नित्या वेदाः समस्ताश्च'[3] इत्यनेन दर्शयिष्यामः[4]; इत्यर्थः ॥

---

१. नित्यत्वानित्यत्वग्रहणम् २. त.वि.पृ. ६९,७०.
३. वि.त.नि पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।
४. त.सं.श्लो. ८ टीकायाम् ।

**इत्युद्देश इति**। अत एव तथा एव निर्देशं करोति; इति भावः।

**लाघवायेति**। नित्यानित्यत्वस्य प्रथमोद्देशे विभागपदेन तद्विभागभूनयोः ग्रहणसम्भवात् उक्तिलाघवम्; अन्यथा 'नित्यत्वानित्यत्वनित्यानित्यत्वभेदेन' इतिविभागोक्तिप्रसक्त्या गौरवं स्यात्; इति भावः।

[ ३२ के. विषयः– अस्वतन्त्रतत्त्व भाव-अचेतनत्रैविध्ये–

अ) 'अत्रापि..विरुद्धम्' इत्यस्य व्याख्याने– स्वतन्त्रादितत्त्वानां नित्यत्वाद्यभावशङ्कानिवारकतया– २) अवतरणम्। १) 'अनभ्युपगमात्' इत्यस्य उपलक्षणता। ३) 'पूर्वोक्ततत्त्वानाम्' इत्यस्य अर्थः। ४) 'प्रमाणान्तरेण' इत्यस्य व्याख्याने तत्प्रमाणप्रदर्शनम्। ५) 'आदि' पदसङ्ग्राह्यप्रदर्शनम् सप्रयोजनम्।

आ) 'नित्यानित्य..भवति' इत्यस्य व्याख्याने– त्रैविध्यानुपपत्तिशङ्कावारकतया अवतरणम्।

इ) 'न..दर्शयिष्यामः' इत्यस्य अर्थः।

ई) 'यद्यपि–क्रमोल्लङ्घनम्' इत्यस्य व्याख्याने– १) निर्देशक्रमशङ्कानिर्धारकतया 'यद्यपि–प्राधान्यात्' इत्यस्य अवतरणम्; अस्य उपलक्षणता च। २) 'तथाऽपि–क्रमोल्लङ्घनम्' इत्यस्य व्याख्याने– क) उक्तिलाघवप्रदर्शनम्। ख) विपक्षे-गौरवप्रदर्शनरूपो भावश्च। ]

'ननु स्वतन्त्रतत्त्वम्, अभावतत्त्वम्, चेतनतत्त्वं च; नित्यानित्यम्, नित्यम्, अनित्यं वा? उत न त्रयम् अपि? त्रयस्यापि अचेतनप्रभेदत्वेन उच्यमानत्वात्' इत्यत आह **अत्रापीति**।

'अनभ्युपगमात्' इति उपलक्षणम्; 'अचेतनं त्रिविधम् एव, न पुनः एकविधं द्विविधं च' इति-अर्थाभ्युपगमात् इत्यपि द्रष्टव्यम्।;

**पूर्वोक्ततत्त्वानामिति**। स्वतन्त्रचेतनतत्त्व-अभावतत्त्व-चेतनतत्त्वानाम् इत्यर्थः।,

**प्रमाणान्तरेणेति** । 'नित्यो[1] नित्यानाम्', 'जीवो नित्यो धातुरस्य त्वनित्यः' इत्यादिप्रमाणान्तरेण; इत्यर्थः ।,

नित्यत्वादि' इति 'आदि' पदेन नित्यानित्यत्वपरिग्रहः, प्रागभावप्रध्वंसाभावयोः नित्यानित्यत्वात्[2]; इति ध्येयम् ॥

ननु 'नित्यानित्यविभागेन' इत्यनेन विधाद्वयस्य एव उक्तेः, त्रैविध्योक्तिः अनुचिता; इत्यत आह **नित्येत्यादि** ।

**तच्चेति** । 'नित्या[3] वेदाः समस्ताश्च', 'पुराणानि[4] तदर्थानि', 'सर्वे[5] निमेषा जज्ञिरे', 'विकारोऽव्यक्तजन्म हि' इत्यादिना प्रामाणिकत्वं दर्शयिष्यामः; इत्यर्थः ॥

ननु अयं निर्देशः न तावत् प्राधान्यक्रमेण, तथा सति 'नित्यम्, नित्यानित्यम्, अनित्यम्' इति नित्यस्य एव आदौ निर्देशप्रसक्तेः; इतिभावेन शङ्कते **यद्यपीति** । उपलक्षणम् एतम्, 'अनित्यम्, नित्यानित्यम्, नित्यम्' इति-उद्देशः कार्यः अप्राधान्यात्; इत्यपि द्रष्टव्यम् ।

**उक्तिलाघवायेति** । नित्यानित्यस्य प्रथमोद्देशे हि 'विभाग' पदेन तद्विभागभूतयोः नित्यानित्ययोः ग्रहणसम्भवात् उक्तिलाघवं भवति । अन्यथा 'नित्य नित्यानित्य-अनित्यत्वेन' इत्यादिरूपेण विभागोक्तिप्रसङ्गेन[6] गौरवं स्यात्; इति भावः ।

[ ३२ **वि.** विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतनत्रैविध्ये–

अ) 'एवं नित्येति' इत्यस्य व्याख्याने – चेतनविभागपरत्वभ्रमनिरासार्थकोत्तरवाक्यावतारकतया अवतरणम्, पदार्थश्च ।

---

१. श्वे.उप. ६=१३./काठ.उप. २–५–१३ २. नित्यत्वानित्यत्वात्
३. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।
४. ,, २५५ ,, ,,
५. नारायणोपनिषत् ६. प्रसङ्गेणगौरवम्

आ) 'अत्रापि..विरुद्धम्'इत्यस्य व्याख्याने– विष्ण्वादीनां नित्यत्वादि-विरोधशङ्कानिरासकतया अवतरणम्, पदार्थश्च ।

इ) 'नित्यानित्य..दर्शयिष्यामः'इत्यस्य व्याख्याने– १) अन्यार्थ-प्रतीतिनिरासार्थं विवक्षितविग्रहाभिप्रायकथनपूर्वकं तदुक्तितया– क) 'नित्या-नित्यविभागेनेत्यस्य..भवति'इत्यस्य अवतरणम् । ख) 'नित्यानित्यत्वेन'-इत्यस्य अभिप्रायकथनपूर्वकम् तदुक्तितया अवतरणम् । ग) अन्वयोक्तितया 'तद्विभागेन च'इत्यस्य अवतरणम्, प्रकारद्वयेन विग्रहार्थौ च । घ) वाक्यार्थो-क्तितया 'ततश्च..भवति'इत्यस्य अवतरणम्, पदार्थश्च । २) 'केचित्..एव-कारः'इत्यस्य व्याख्याने– क) 'एव'कारनिरासमतोक्तितया 'केचित्..अभ्यु-पगच्छन्ति'इत्यस्य अवतरणम्, पदार्थश्च । 'तन्निरासार्थमेवकारः'इत्यस्य व्याख्याने विग्रहः, अर्थश्च । ३) 'न..दर्शयिष्यामः'इत्यस्य व्याख्याने– क) 'न..मतमिति'इत्यस्य पदार्थः । ख) उक्तविभागस्य प्रामाणिकत्वप्रकारक-जिज्ञासानिवर्तकतया 'तच्च लेशतो दर्शयिष्यामः'इत्यस्य अवतरणम्, भावश्च ।

ई) 'यद्यपि..क्रमोलङ्घनम्'इत्यस्य व्याख्याने– १) उद्देशक्रमशङ्कात्वेन 'यद्यपि..प्राधान्यात्'इत्यस्य अवतरणम् । २) तच्छङ्कापरिहारकतया 'तथाऽपि क्रमोलङ्घनम्'इत्यस्य अवतरणम्, पदार्थश्च । ]

'उत्तरवाक्यम् अपि चेतनविभागपरम्'इतिमन्दानां-प्रतीतिनिरासाय उत्तरवाक्यम् अवतारयति **एवमिति** । एवम्= उक्तप्रकारेण इत्यर्थः ॥

ननु नित्यादीनां भावप्रभेदत्वरूप-अचेतनप्रभेदत्वे 'विष्णु'आदीनां नित्यत्वाङ्गीकारः विरुद्धः; इति-आशङ्क्य आह **अत्रापीति** ।

'भावाभावौ द्विधेतरत्'इतिवाक्ये इव, अत्र अपि = अस्मिन् वाक्ये अपि, अचेतनम्, एव, एवम्= उक्तप्रकारेण, विभागवत्, इति अर्थ-अनङ्गी-कारेण; पूर्वोक्ततत्त्वानाम्= पूर्ववाक्योक्तानां विष्णुरमादिचेतन-अत्यन्ताभाव-रूपतत्त्वानाम्, प्रमाणान्तरेण= प्रमाणविशेषेण= नित्यत्वादिग्राहकप्रमाणेन इति यावत्, नित्यत्वग्रहणम्= नित्यत्वाङ्गीकरणम्, 'आदि'पदोक्त प्रध्वंसादेः तत्त्वस्य नित्यानित्यत्वाङ्गीकरणं च, न, विरुद्धम्; इत्यर्थः ॥

'नित्यानित्यविभागेन'इत्यस्य 'नित्यम् अनित्यं च, इतिविभागेन'-इत्यर्थप्रतीतिपरिहाराय 'नित्यञ्च तत् अनित्यञ्च, इति नित्यानित्यविभागम्, तेन'इतिविग्रहम् अभिप्रेत्य विवक्षितम् अर्थम् आह **नित्यानित्यविभागेनेत्यस्येति ॥,**

'नित्यानित्य'शब्दः भावप्रधानः; इति-अभिप्रायेण आह **नित्यानित्यत्वेनेति ।,**

''विभागस्य सम्बन्धिनिरूप्यत्वात्; सम्बन्धजिज्ञासायाम्, प्रकृतयोः 'नित्यानित्य'शब्दार्थयोः नित्यानित्ययोः सम्बन्धितया अन्वयः''इति-आशयेन आह **तद्विभागेन चेति ।** तयोः→ नित्यानित्ययोः, विभागेन= 'नित्यम् अनित्यम्'इतिविभागेन च; इत्यर्थः । यद्वा ताभ्याम्→ नित्यत्वानित्यत्वाभ्याम्, विभागः; तत्प्रयुक्तेन विभागेन च; इत्यर्थः ।;

एवं पदार्थम् उक्त्वा वाक्यार्थम् आह **ततश्चेति ।** ततश्च= तथा सति = 'नित्यानित्यविभागेन'इत्यस्य नित्यानित्यत्वेन, नित्यानित्यविभागेन च'इत्यर्थे सति; 'नित्यानित्यम्, नित्यम्, अनित्यम् च'इति, अनेन वाक्येन उक्तं भवति; इत्यर्थः ।

'एव'कारस्य प्रयोजनं वक्तुं मतान्तराणि अनुवदति **केचिदित्यादिना ।,**

'सर्वं वस्तु, क्षणिकम्= स्वोत्पत्त्युत्तरक्षणवर्तिध्वंसप्रतियोगि'इति-अभिमानवन्तः, नित्यम्, न अङ्गीकुर्वन्ति; इत्यर्थः ॥ सत्कार्यवादिनः= 'सत्= विद्यमानम्, सर्वम्; कार्यम्'इति-वादिनः; इत्यर्थः ॥ सर्वे वादिनः → स्वव्यतिरिक्ताः सर्वे वादिनः, नित्यानित्यम्, विरोधात्= नित्यत्वानित्यत्वयोः सहानवस्थानरूपविरोधात्, न अङ्गीकुर्वन्ति; इत्यर्थः ।;

**तन्निरासार्थमिति ।** तस्य मतद्वयस्य; निराकरणार्थम्, 'एव'कारः । न्यूनाधिकसङ्ख्याव्यवच्छेदार्थः 'एव'शब्दः प्रयुक्तः; इत्यर्थः ।

**न हि प्रतिज्ञामात्रेणेति** । 'अचेतनं त्रिधैव' इतिप्रतिज्ञामात्रेण– हेतुरहितप्रतिज्ञया, तत्सिद्धिः= 'तस्य– प्रतिज्ञातार्थस्य– अचेतनत्रैविध्यस्य, सिद्धिः= प्रमितः', न हि भवति; इति हेतोः; उक्तविभागस्य– अचेतनत्रैविध्यस्य, प्रामाणिकत्वम्= प्रमाणसिद्धत्वम्, आचार्यः, 'मतम्= विदुषां सम्मतम्' इत्यनेन, सूचयति= ज्ञापयति; इत्यर्थः ।,

कथं प्रामाणिकत्वम् ? इतिजिज्ञासायाम् आह **तच्चेति** । उक्त-अचेतनविभागत्रैविध्यस्य प्रामाणिकत्वं तु, लेशतः= लेशेन, दर्शयिष्यामः । वेदादीनां नित्यत्वादौ एकप्रमाणोपन्यासेन ज्ञापयिष्यामः; इति भावः ॥

'नित्यानित्यम्, नित्यम्, अनित्यं च' इति-उद्देशकरणं न सम्भवति; इति शङ्कते **यद्यपीति** । यद्यपि प्राधान्यक्रमात् 'नित्यम्, नित्यानित्यम्, अनित्यं च' इति-उद्देशः कर्तव्यः; इत्यर्थः ।,

परिहरति **तथापीति** । उक्तेः अचेतनविभागप्रतिपादकवचनस्य, लाघवाय, क्रमोल्लङ्घनम्= प्राधान्यक्रमपरित्यागः; इत्यर्थः ।

[ ३२ सु. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतनत्रैविध्ये–

अ) 'एवं...नित्येति' इत्यस्य व्याख्याने– शङ्काद्वयनिरासकतया अवतरणम् ।

आ) 'अत्रापि...विरुद्धम्' इत्यस्य व्याख्याने– १) त्रिविधशङ्कावारकतया अवतरणम् । २) प्रकारद्वयेन समुच्चयस्य भावः ।

इ) 'नित्यानित्य...दर्शयिष्यामः' इत्यस्य व्याख्याने– १) अन्यथाविभ्रममूलकत्रैविध्यभङ्गशङ्कानिरासकतया क) 'नित्यानित्यविभागेनेत्यस्य...चेत्यर्थः' इत्यस्य अवतरणम्, 'नित्यानित्यविभागेन' इतिप्रयोगस्य साधुत्वम् । ख) 'तच्च...भवति' इत्यस्य व्याख्याने– 'नित्यानित्यविभागेन' इत्यस्य अन्यथाप्रतीतिनिरासार्थकतया अवतरणम् २) 'केचित्...एवकारः' इत्यस्य व्याख्याने 'तन्निरासार्थम्' इत्यस्य भावः । ३) 'न...दर्शयिष्यामः' इत्यस्य व्याख्याने– 'मतम्' इत्यस्य भावः । ]

"ननु उत्तरमूले त्रिधा अनुवादेन अचेतनविधानं न सम्भवति, अप्राप्तत्वेन अनुवादायोगात्; न च 'अचेतनम् उद्दिश्य विभागः कथ्यते'इति, चेतनविभागकथनप्रसङ्गे तद्विभागस्य अनवसरदुष्टत्वात्;"इति-इमाः शङ्काः परिहरन् अवतारयति **एवमिति** ॥

ननु स्वतन्त्रतत्त्वादीनां नित्यत्वादिकम् आचार्यैः अनुक्तत्वात् न ग्राह्यम्; न च तदभावे अपि प्रमाणान्तरेण ग्राह्यम्, आचार्योक्तिविरुद्धत्वेन प्रमाणस्य अपि अतदर्थत्वात्; न च "आचार्योक्तेः 'अचेतनम् एव एवंविभागवत्' इत्यर्थानभ्युपगमेन, न तद्विरोधः"इति, तथाऽभिप्रायकविभागवाक्यप्रायपाठ-[1] विरुद्धत्वेन तदर्थत्वाभावात्; इत्यत आह **अत्रापीति** ॥ न केवलं पूर्वत्र ।, तथाच न न प्रायपाठविरोधः[2]; इति भावः । यद्वा 'यथा पूर्वविभागवाक्यस्य न एतादृशं तात्पर्यम्, एवम् एतद्वाक्यस्य अपि'इतिदृष्टान्तार्थे तत्समुच्चयः; इति भावः ॥

'नित्यानित्ययोः विभागेन भेदेन'इतिद्वैविध्यम् प्राप्तम्, तत् कथं त्रैविध्यम् उच्यते? इत्यत आह **नित्यानित्यविभागेनेत्यस्येति** ॥ 'नित्या-नित्य'इतिभावप्रधानः व्यपदेशः । नित्यानित्यत्वं च तद्विभागश्च नित्या-नित्यत्वविभागम्; 'सर्वो द्वन्द्वो विभाषया एकवद्भवति'[3]इति एकवद्भावः, 'स नपुंसकम्'[4]इति नपुंसकता च उपपन्नाः; इति भावः ।,

नित्यानित्यविभागेन'इत्यस्य'नित्यानित्यत्वं त्रिविधम्[5]– नित्यम्, नित्यानित्यम् अनित्यानित्यम्'इत्यादि-अर्थप्रतीतेः आह **ततश्चेति** ।

---

१,२. प्रायःपाठ

३. परिभाषा ३४. । 'विभाषैकवद्भवति'इतिपरिभाषापाठे पाठः दृष्टः ।

४. पा सू. २–४–१७/ सि.कौ.सू.११७५.

५. द्विविधम् नित्यं नित्यानित्यत्वमनित्यानित्यानित्यत्वम्

**तन्निरासार्थमिति** । विभागस्यैव निरासफलकत्वे अपि, तत्साधनाय निरासप्रतिज्ञार्थम् 'एव'कारः; इति भावः ।

**मतमितीति** । न हि अप्रामाणिकं प्रेक्षावतां सम्मतं भवति; इति भावः ।

[ ३२ का. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतनत्रैविध्ये–

अ) 'एवं..नित्येति'इत्यस्य व्याख्याने– 'अवसरप्राप्तम्'इत्यस्य अर्थः ।

आ) 'अत्रापि..विरुद्धम्'इत्यस्य व्याख्याने– १) एवकारान्वयभ्रम-मूलकशङ्कानिरासकतया– अवतरणम् । २) 'चेतनादिषु नित्यत्वाद्यनुक्ति'-शङ्कासमाधानस्य विभाजकधर्मप्रतिपत्तिपूर्वस्थत्वे अवसरदुष्टत्वशङ्का, तन्निरसनञ्च

इ) 'नित्या..दर्शयिष्यामः'इत्यस्य व्याख्याने– १) अन्यविग्रहभ्रम-मूलक-त्रैविध्यानुपपत्तिनिवारकतया 'नित्या..भवति'इत्यस्य क) अवतरणम्, भावश्च । ख) नित्यत्वानित्यत्वयोः विभाजकत्वानुपपत्तिशङ्का तद्वारणञ्च । २) 'केचित्..एवकारः'इत्यस्य व्याख्याने– क) 'एव'कारव्यावर्त्यमतान्तरोक्तितया 'केचित्..गच्छन्ति'इत्यस्य अवतरणम् । ख) पदार्थे– १. 'केचित्..मन्यन्ते'इत्यस्य व्याख्याने– क. 'केचित'पदार्थः; ख. 'क्षणिकत्वम्'इत्यस्य– १– निष्कर्षः, २– अन्यमतोक्तनिष्कर्षविमर्शश्च; २. 'अपरे..कुर्वन्ति'इत्यस्य व्याख्याने– क. 'अपरे'पदार्थः; ख. 'सत्कार्यवादिनः'इत्यस्य विग्रहार्थौ च; ३. 'सर्वे...गच्छन्ति'इत्यस्य व्याख्याने– क. 'सर्वे'पदार्थः; ख. 'विरोधात्'-पदार्थः । ग) 'तन्नि..एवकारः'इत्यस्य भावश्च । ३) 'न..दर्शयिष्यामः'इत्यस्य व्याख्याने– 'उत्तरमूले'इतिपदस्य आदित्वेन अध्याहारः ।

ई) 'यद्यपि...क्रमोल्लङ्घनम्'इत्यस्य व्याख्याने– १) 'प्राधान्यात्'इत्यस्य अभिप्रायः । २) लाघवप्रदर्शनम्, विपक्षे गौरवप्रदर्शनरूपः भावश्च । ]

**अवसरप्राप्तमिति** । अवश्यवक्तव्यत्वेन बुद्धिस्थम्; इत्यर्थः ॥

'ननु भावरूप-अचेतनस्य एव नित्यानित्यविभागत्वे; चेतनस्य नित्यत्वम्, प्रागभावादेः नित्यानित्यत्वं(च) प्रमाणान्तरसिद्धं विरुध्येत'इत्यत

आह **अत्रापीति** । यद्यपि विभाजकधर्मप्रतिपत्त्यनन्तरम् एषा शङ्का सम्भवति, तथाऽपि विशेष्यसङ्गतत्वात् अस्याः प्रथमं निरासः; विशेषणव्याख्याने सति तत्सङ्गतशङ्कानिरासस्य एव अवसरप्राप्तेः ॥

'नित्यानित्ययोः विभागेन' इतिव्याख्याने त्रैविध्यानुपपत्तेः, अन्यथा व्याचष्टे **नित्येति** । 'नित्यानित्यम्' इति कर्मधारयः भावप्रधानश्च, तद्घटक-विशेष्यविशेषणधर्मपर'विभाग'शब्देन च द्वन्द्वैकवद्भावः; इति भावः ।,

यद्यपि नित्यानित्यत्वघटकनित्यत्वानित्यत्वयोः नित्यानित्यसाधारणत्वात् न विभाजकत्वम्; तथाऽपि 'विभाग'शब्दस्य परस्परविविक्तविभागार्थतया केवलनित्यानित्यत्वे विभाजकत्वेन विवक्षिते । स्पष्टयिष्यते च एतत् ।

'त्रिधैव' इति 'एव'कारव्यावर्त्यमतान्तराणि आह **केचित्विति** ।;

चार्वाकादयः इत्यर्थः ॥ क्षणिकत्वम्= एकक्षणमात्रवृत्तित्वम्=स्वाधिकरणक्षणोत्तरक्षणावृत्तित्वम् इति यावत् । 'स्वोत्पत्त्यव्यवहितोत्तरवृत्तिध्वंसप्रतियोगित्वम् तत्' इति अन्ये: तत्र 'उत्पत्त्युत्तर'पदयोः कृत्यं चिन्त्यम् ।,

अपरे— साङ्ख्याः ॥ **सत्कार्यवादिन इति** । 'सत् एव कार्यम् तत्तत्काले अभिव्यज्यते' इतिवादिनः; इत्यर्थः ।,

**सर्वेऽपीति** । नित्यानित्यभेदेन द्वैविध्यम् अङ्गीकुर्वन्तः अपि तार्किकादयः; इत्यर्थः ॥ विरोधात्= निर्वक्ष्यमाणनित्यानित्यत्वघटकनित्यत्वानित्यत्वयोः विरोधभ्रमात्, न तु कूटस्थत्वतदभावरूप-नित्यत्वानित्यत्वयोः विरोधात्; इत्यर्थः; सिद्धान्ते तदनिरासात् ॥,

**तन्निरासार्थमिति** । 'एव'कारस्य निरुक्तएकविधत्वद्विविधत्व-व्यवच्छेदकत्वात्; इति भावः ।

**दर्शयिष्याम इति** । 'उत्तरमूले' इति आदिः ॥

**प्राधान्यादिति** । नित्यस्य अनित्यं प्रति उपजीव्यत्वेन, प्राधान्यात्; इत्यर्थः ।,

**उक्तिलाघवायेति** । नित्यानित्यस्य प्रथमोद्देशे एव 'विभाग'पदेन तद्विभागभूतयो: लाभात्, लाघवम्; अन्यथा पृथक् एव त्रयाणां निर्देश्यतया, गौरवात्; इति भावः ।

[ ३२ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतनत्रैविध्ये–
अ) 'अत्रापि..विरुद्धम्'इत्यस्य व्याख्याने 'पूर्वोक्ततत्त्वानाम्..विरुद्धम्' इत्यस्य अर्थः ।
आ) 'नित्या..दर्शयिष्यामः'इत्यस्य व्याख्याने– १) 'केचित्.. एवकारः'इत्यस्य व्याख्याने– क) 'केचित्, अपरे, सर्वेऽपि'पदार्थः । ख) 'तन्निरासार्थमेवकारः'इत्यस्य अर्थः । २) 'न..दर्शयिष्यामः'इत्यस्य व्याख्याने– क) 'मतम् इत्यस्य अर्थः, भावश्च । ख) 'तच्च'इत्यस्य अर्थः। ]

**पूर्वोक्ततत्त्वानामिति** । हरेः, अशेषचेतनानाम्, अत्यन्ताभावस्य च नित्यत्वम्; प्रध्वंसाभावस्य नित्यानित्यत्वम्; प्रागभावस्य अनित्यत्वं च; 'नित्यो नित्यानाम्'[2]इत्यादिप्रमाणबलेन ग्राह्यम्, अविरुद्धत्वात्; इत्यर्थः ॥

केचित्→ वैभाषिकसौत्रान्तिकाः ॥ अपरे→ साङ्ख्याः ॥ सर्वेऽपि= काणादादयः ।,

**तन्निरासार्थमिति** । 'त्रिधा एव'इति-अवधारणेन ऐकविध्यद्वैविध्य-निरासः भवति; इत्यर्थः ।

**मतमिति** । सतां सम्मतम्; इत्यर्थः । सतां सम्मतिश्च अप्रामाणिके अर्थे न भवति, इति प्रामाणिकत्वं सूचितं भवति; इति भावः ।,

**तच्चेति** । अप्रामाणिकत्वं च; इत्यर्थः ।

[ ३३ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यनिरूपणे–
अ) यथाक्रमं 'नित्य'दर्शकतया 'नित्या वेदाः'इतिमूलस्य अवतरणम् ।
आ) 'नित्य'पदनिष्कर्षः; तस्य वेदेषु प्रमाणेन सिद्धिश्च ।
इ) 'वेदाः'पदस्य व्याख्याने– अस्य उपलक्षणता, तत्र बीजञ्च । ]

---

१. भूतयोर्लाघवम् । २. श्वे.उप. ६–१३/का.उप.२–५–१३.

क्रमेण त्रयं[1] दर्शयिष्यन् नित्यं तावत् दर्शयिष्यति 'नित्या' इति ।

[ १७ त. विषयः– 'नित्य'प्रदर्शनम् । ]

## नित्या वेदाः ॥७ १८॥

अत्र नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम्[2] । तच्च वेदानां 'नित्या[3] वेदाः समस्ताश्च' इत्यादिप्रमाणसिद्धम् ।

अत्र 'वेदाः' इति उपलक्षणम्; पञ्चाशद्वर्णानाम्[4] अव्याकृत-आकाशस्य च तथाभावात्[5] ।

[ ३३ स. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-'नित्य'निर्देशे–

अ) 'अत्र...सिद्धम्' इत्यस्य व्याख्याने– १) 'नित्य'लक्षणान्वितया 'अत्र..शून्यत्वम्' इत्यस्य अवतरणम् । २) प्रकृत्यादिव्यावृत्तिप्रयोजनकतया 'कूटस्थतया' इत्यस्य अवतरणम् ।

आ) 'अत्र वेदा..तथाभावात्' इत्यस्य व्याख्याने- १) 'वेदानां कूट-स्थत्व'ानुपपत्तेः, वर्णादीनामसङ्ग्रहशङ्कायाश्च निवारकतया 'अत्र वेदा इत्युप-लक्षणम्' इत्यस्य अवतरणम्, 'उपलक्षणा' पदस्य अजहत्स्वार्थपरत्वञ्च । २) 'पञ्चाशत्..तथाभावात्' इत्यस्य व्याख्याने– क) लक्षणीयदर्शकतया अवतरणम् अभिप्रायश्च । ]

नित्यत्वं नित्यानित्यत्वव्यावृत्तत्वेन निर्वक्ति अत्रेति ।

स्वरूपेण आद्यन्तशून्यत्वं प्रकृत्यादिसाधारणम्; अत आह कूटस्थ-तयेति ॥

---

१. तत्र

२. 'अन्तशून्यत्वम्' इत्येकत्र ।

३. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।

४. मु.टि. उद्धरणम् 'एकपञ्चाशदिति' इति प्रतीकम् ।

५. मु.टि.– 'तथात्वात्' इति उद्धरणम् ।

"ननु क्रमविशेषविशिष्टाः वर्णाः एव वेदाः, न तु अव्याकृत-आकाशवत् अर्थान्तरम्; वर्णाश्च नित्याः, सर्वगताः, स्वतःक्रमशून्याः; अतः बौद्ध एव क्रमः आस्थेयः।,

तदुक्तम्—

वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥'इति।;

तत् कथं वेदानां कूटस्थत्वम्? कथञ्च वर्णानाम्, अव्याकृत-आकाशस्य च कूटस्थत्वेन प्रमितस्य, नित्यत्वेन अनिर्देशः?" इत्यत आह **अत्र वेदा इत्युपलक्षणमिति** ॥ अत्र 'उपलक्षण'पदेन च अजहत्स्वार्थलक्षणा उच्यते।,

लक्षणीयं दर्शयति **पञ्चाशदिति**। एवं चेत् 'नित्या वेदाः समस्ताश्च'[2]इति पूर्वोक्तम्, 'तत्क्रमेणैव तैर्वर्णैस्तैः स्वरैरेव नान्यथा'[3]इति 'आदि'शब्दसङ्गृहीतं वाक्यं वर्णानां कूटस्थनित्यत्वे मानम्; इति उक्तं भवति।

[ ३३ के. विषयः—अस्वतन्त्रतत्त्व-भाव-अचेतन-'नित्य'निर्देशे—
अ) 'अत्र नित्यत्वं..सिद्धम्'इत्यस्य व्याख्याने १) नित्य नित्यत्व्यावृत्त्यर्थम् 'आद्यन्तशून्यत्व'पदव्याख्यानमात्रत्वेन 'कूटस्थतया'इत्यस्य अवतरणम्, अर्थः, भावश्च। २) मतान्तराभ्यां विशेष्यविशेषणयोः कृत्यादिकञ्च।
आ) 'अत्र नित्यत्वं..तथाभावात्'इत्यस्य व्याख्याने— १) कृतकक्रमविशिष्टवर्णात्मकवेदस्य नित्यत्वानुपपत्तिशङ्का, तन्निरसनञ्च। तत्र 'न हि वयं' इतितत्त्वनिर्णयटीकायाः एतद्ग्रन्थानुसारेण अर्थयोजना च। २) वेदनित्यत्वे — क) पाठभेदानुसारेण एतट्टिप्पणीकर्तृमतम्। ख) एतदनुसारेण अत्र वेदाः इत्युपलक्षणम्'इत्यस्य अवतरणम्। ग) 'उपलक्षणा'पदार्थे— १. अस्य लक्षणासामान्यपरत्वम्, अजहत्स्वार्थलक्षणायाः निषेधः, तत्प्रयोजनस्य भावश्च; २. अजहत्स्वार्थलक्षणपक्षे अनुपपत्तिनिर्देशश्च। ३) 'पञ्चाशत्..तथाभावात्' इत्यस्य व्याख्याने— लक्षणीयदर्शकतया अवतरणम्, अभिप्रायश्च। ]

---

१. तन्त्रसारः १—२०
२. पृ. २—१५३. ३. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम्।

स्वरूपेण आद्यन्तशून्यत्वस्य प्रकृतौ अपि सद्भावात् कथम् अनेन नित्यानित्यव्यावृत्तिः ? इत्यतः तद्व्याख्यानम् कूटस्थत्वमिति । निर्विकारत्वम् इत्यर्थः । ततश्च न प्रकृत्यादौ नित्यानित्ये अतिप्रसङ्गः, नापि विशेष्ये वैयर्थ्यम्; इति भावः ।

केचित् तु 'अन्त्यावयविनि अतिव्याप्तिवारणाय विशेष्यभागः' इति आहुः ।,

आद्यन्तशून्यत्वम् एव नित्यत्वम्, कूटस्थत्वं च तत्र हेतुतया उपात्तम्; इत्यपि आहुः ॥

''ननु क्रमविशिष्टवर्णाः एव वेदः न तु अव्याकृत-आकाशवत् अर्थान्तरम्, वर्णाश्च नित्यत्वात् सर्वगतत्वाच्च स्वतःक्रमशून्याः; इत्यतः क्रमः बुद्धिनिमित्त एव स्थेयः; उक्तं हि–

'वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥' इति[1];

तत् कथं कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नित्यत्वम् उच्यते ? अत एव उक्तं तत्त्वनिर्णयटीकायाम्[2] 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः' इति, 'क्रमस्य कृतकत्वेऽपि' इति च; तत् कथम् एतत् ?'' इति चेत्; अत्र वदन्ति– एतट्टीकाऽनुसारेण 'न हि वयं वेदस्य' इत्यादितत्त्वनिर्णयटीकाग्रन्थः व्याख्येयः; अत्र 'नित्या वेदाः' इतिप्रमाणोपन्यासेन एतद्ग्रन्थस्य प्राबल्यात् । युक्तञ्च एतत्; क्रमस्य सदा एव ईश्वरबुद्धिस्थत्वात् । अत एव उक्तं तत्त्वनिर्णयेऽपि[3] 'सर्वज्ञत्वेन ईश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इति । न च एवं टीकायां तन्निषेधानुपपत्तिः असमदादीन् प्रति प्रमापकत्वोपयुक्तस्य अस्मदादिबुद्धिस्थस्य क्रमस्य उच्चारणाद्यधीनत्वेन कृतकत्वात्' इत्यभिप्रायेण तस्य उपपन्नत्वात्; इति ।

---

१. तन्त्रसारः १-३०. २. वि.त.नि.पृ.२४४. ३.वि.त.नि.पृ. २६०

वयं तु ब्रूमः– न क्रमस्य अनादिनित्यत्वम् अङ्गीकारार्हम्; तथा सति वर्णधर्मस्य क्रमस्य यावद्द्रव्यभावित्वेन वर्णैः अत्यन्ताभेदप्रसङ्गेन, वर्णानां परस्परभेदवताम् अत्यन्ताभेदप्रसङ्गात् ।, अत एव चन्द्रिकायाम् अपि इमाम् एव अनुपपत्तिं मनसि निधाय 'कृत्वा चिन्तया वा अनादिनित्यत्वोक्तिः' इति उक्तम् ।,

ततश्च कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नित्यत्वासम्भवात्, कथं तन्नित्यत्वोक्तिः? कथञ्च अव्याकृत-आकाशस्य कूटस्थतया प्रमितत्वात् नित्यानित्यादिभावेन अनिर्दिष्टस्य नित्यत्वेन अनिर्देशः?' इत्यत आह **अत्र वेदा इत्युपलक्षणमिति** । अत्र 'उपलक्षण'पदेन लक्षणासामान्यम् उच्यते, न तु अजहत्स्वार्थलक्षणा;

'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ।'

इत्यादौ लक्षणासामान्येऽपि तत्प्रयोगदर्शनात् । तथा च वर्णानाम् अव्याकृत-आकाशस्येव च कूटस्थनित्यत्वेन अभिप्रेतत्वात्; न सङ्ग्राह्यस्य असङ्ग्रहः, असङ्ग्राह्यस्य च सङ्ग्रहः; इति भावः ।,

यत्तु 'वेदानाम् एव शृङ्गिग्राहकतया नित्यत्वप्रदर्शनम् अनुपपन्नम् अव्याकृत-आकाशादेः अपि तथाभूतत्वात्' इत्याशङ्क्य 'अजहत्स्वार्थलक्षणया 'वेद'पदेन वर्णादेः अपि सङ्गृहीतत्वात्, अदोषः' इत्येवंपरत्वेन 'अत्र' इति ग्रन्थावतरणम्; तत्तु उक्त अनुपपत्तिग्रस्तम्; इति दिक् ।

लक्षणीयं दर्शयति **पञ्चाशदिति** । एवञ्च; तच्च वेदानाम्, 'नित्या वेदाः' इत्यादिपूर्ववाक्यस्य अपि कूटस्थत्वम्, वर्णानां 'नित्या वेदाः समस्ताश्च'

---

४ एकत्र 'वयं तु..सङ्ग्रहः इति भावः' इति नास्ति । ५. परस्परभेदमत्यन्ताभे०

६. 'वानादित्वोक्तिः' इत्येकत्र । 'वानानादित्वोक्तिः' इति चैकत्र ।-

७. अनुव्याख्यानम् १-४-२-११.

८. 'ननु वेदानामेव..सङ्गृहीतत्वात्; इतिभावेन लक्षणीयं दर्शयति' इति एकत्र । 'चतुर्वेदानामेव' इत्येकत्र । उपर्युक्तपाठस्तु ग्रन्थचतुष्टये ।

९. 'वेदानाम्' इत्येकः पाठः ।

इत्यादिप्रेमाणे 'तत्क्रमेणैव तैर्वर्णैः' इतियदुत्तरवाक्यम्, तेन सिद्धम्; इत्यर्थः । अत एव 'इत्यादि' इति 'आदि' पदप्रयोगः; इति ध्येयम् ।

[ ३२ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-'नित्य' निर्देशे–

अ) 'क्रमेण..नित्या इति' इत्यस्य व्याख्याने– निर्देशक्रमभङ्गशङ्का-निवारकतया– अवतरणम्, अर्थश्च ।

आ) 'अत्र नित्यत्वं .सिद्धम्' इत्यस्य व्याख्याने– १) 'नित्यत्व' पदार्थ-भ्रमनिवारकतया 'अत्र .शून्यत्वम्' इत्यस्य व्याख्याने– क) अवतरणम्, पदार्थः, भावश्च । ख) दलकृत्ये - 'आदि, अन्त, कूटस्थतया' इत्येषां कृत्यानि च । २) 'तच्च..सिद्धम्' इत्यस्य व्याख्याने– क) वेदनित्यत्वसाधकप्रमाणोक्तितया अवतरणम्, पदार्थः, अधिकप्रमाणोदाहरणञ्च ।

इ) 'अत्र वेदाः..तथाभावात्' इत्यस्य व्याख्याने– १) 'वेदाः' पदस्य वाच्यार्थमात्रपरत्वनिरासार्थकतया अवतरणम्, पदार्थश्च । २) 'अव्याकृत.. तथाभावात्' इत्यस्य व्याख्याने– क) 'अव्याकृत' पदकृत्यम् । ख) अव्याकृता-काशस्य लक्षकत्वे प्रयोजकोक्तितयां 'तथाभावात्' इत्यस्य अवतरणम्, सम्बन्ध' अर्थः, भावश्च । ३) 'उक्तार्थस्य तत्त्वनिर्णयटीकया विरोध' परिहारे– क) परि-हारप्रकारस्य चन्द्रिकायां निर्देशः । ख) 'विपक्षे..बाधक' प्रदर्शने– १. वेद-रूपस्यावेदकवाक्यानां शास्त्रे गतिकथनायोगः; २. भगवत्पादोक्तिविरोधप्रसङ्गः ३. तत्त्वविवेकटीकोक्तिविरोधः; ४. प्रमाणलक्षणटीकोक्तिविरोधः; तत्त्व-प्रकाशिकोक्त्ययोगश्च । ४) मतान्तरानुसारेण 'उपलक्षणा' पदस्य जहत्स्वार्थ-परत्वेन विष्णुतत्त्वनिर्णयटीकाविरोधपरिहारश्च । ]

ननु तर्हि उद्देशानुसारेण नित्यानित्यस्य आदौ निर्देशः कार्यः; इत्यत आह **क्रमेणेति** । प्राधान्यक्रमेण, अचेतनत्रयं 'ज्ञापयिषुः, **नित्यम्** तावत्– नित्यानित्यापेक्षया आदौ, निर्दिशति= 'इदम्' इति **निरूपयति**; इत्यर्थः ॥

'नित्या वेदाः' इत्यनेन उक्तं वेदानां नित्यत्वं यदि अविनाशित्वम् अभिप्रेतम्, तर्हि नित्यानित्यस्य पुराणादेः अविनाशित्वरूपनित्यत्वस्य सत्त्वात् नित्यानित्यत्वस्य नित्यात् भेदः न युक्तः; इत्यत आह **अत्रेति** । अत्र–

१. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् । २. प्रमाणाद्

वयं[४] तु ब्रूमः– न क्रमस्य अनादिनित्यत्वम् अङ्गीकारार्हम्; तथा सति वर्णधर्मस्य क्रमस्य यावद्द्रव्यभावित्वेन वर्णैः अत्यन्ताभेदप्रसङ्गेन, वर्णानां परस्परभेदवताम् अत्यन्ताभेदप्रसङ्गात्[५]। अत एव चन्द्रिकायाम् अपि इमाम् एव अनुपपत्तिं मनसि निधाय 'कृत्वा चिन्तया वा अनादिनित्यत्वोक्तिः'[६] इति उक्तम्।

ततश्च 'क्रमकक्रमविशिष्टवर्णात्मकस्य वेदस्य नित्यत्वासम्भवात्, कथं तन्नित्यत्वोक्तिः? कथञ्च अव्याकृत-आकाशस्य कूटस्थतया प्रमितत्वात् नित्यानित्यादिभावेन अनिर्दिष्टस्य नित्यत्वेन अनिर्देशः?' इत्यत आह अत्र वेद इत्युपलक्षणमिति। अत्र 'उपलक्षण'पदेन लक्षणासामान्यम् उच्यते, न तु अजहत्स्वार्थलक्षणा;

'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः।'[७]

इत्यादौ लक्षणासामान्येऽपि तत्प्रयोगदर्शनात्। तथा च वर्णानाम् अव्याकृत-आकाशस्य च कूटस्थनित्यत्वेन अभिप्रेतत्वात्; न सङ्ग्राह्यस्य असङ्ग्रहः, असङ्ग्राह्यस्य च सङ्ग्रहः; इति भावः।

यत्तु[८] 'वेदानाम्[९] एव श्रृङ्गिग्राहकतया नित्यत्वप्रदर्शनम् अनुपपन्नम्, अव्याकृत-आकाशादेः अपि तथाभूतत्वात्' इत्याशङ्क्य 'अजहत्स्वार्थलक्षणावेण'पदेन वर्णादेः अपि सङ्गृहीतत्वात्, अदोषः' इत्येवंपरत्वेन 'अत्र' इति ग्रन्थावतरणम्; तन्तु उक्त अनुपपत्तिग्रस्तम्; इति दिक्।

लक्षणीयं दर्शयति पञ्चाशदिति। एवञ्च; तच्च वेदानाम्, 'नित्या वेदाः' इत्यादिपूर्ववाक्यस्य अपि कूटस्थत्वम्, वर्णानां 'नित्या वेदाः समस्ताश्च

---

४ एकत्र 'वयं तु...सङ्ग्रहः इति भावः' इति नास्ति। ५. परस्परभेदमत्यन्ताभे

६. 'वानादित्वोक्तिः' इत्येकत्र। 'वानानादित्वोक्तिः' इति चैकत्र।-

७. अनुव्याख्यानम् १-४-२-११.

८. 'ननु वेदानामेव...सङ्गृहीतत्वात्; इतिभावेन लक्षणीयं दर्शयति' इति एकत्र 'चतुर्वेदानामेव' इत्येकत्र। उपर्युक्तपाठस्तु ग्रन्थचतुष्टये।

९. 'वेदानाम्' इत्येकः पाठः।

इत्यादिप्रमाणे 'तत्क्रमेणैव तैर्वर्णैः'इतियदुत्तरवाक्यम्, तेन सिद्धम्; इत्यर्थः । अत एव 'इत्यादि'इति'आदि'पदप्रयोगः; इति ध्येयम् ।

[ ३३ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-'नित्य'निर्देशे–

अ) 'क्रमेण..नित्या इति'इत्यस्य व्याख्याने– निर्देशक्रमभङ्गशङ्का-निवारकतया– अवतरणम्, अर्थश्च ।

आ) 'अत्र नित्यत्वं..सिद्धम्'इत्यस्य व्याख्याने– १) 'नित्यत्व'पदार्थ-भ्रमनिवारकतया 'अत्र ..शून्यत्वम्'इत्यस्य व्याख्याने– क) अवतरणम्, पदार्थः, भावश्च । ख) दलकृत्ये - 'आदि, अन्त,कूटस्थतया'इत्येषां कृत्यानि च । २) 'तच्च..सिद्धम्'इत्यस्य व्याख्याने– क) वेदनित्यत्वसाधकप्रमाणोक्तितया अवतरणम्, पदार्थः, अधिकप्रमाणोदाहरणञ्च ।

इ) 'अत्र वेदाः..तथाभावात्'इत्यस्य व्याख्याने– १) 'वेदाः'पदस्य वाच्यार्थमात्रपरत्वनिरासार्थकतया अवतरणम्, पदार्थश्च । २) 'अव्याकृत.. तथाभावात्'इत्यस्य व्याख्याने– क) 'अव्याकृत'पदकृत्यम् । ख) अव्याकृता-काशस्य लक्षकत्वे प्रयोजकोक्तितयां 'तथाभावात्'इत्यस्य अवतरणम्, सम्बन्धः, अर्थः, भावश्च । ३) 'उक्तार्थस्य तत्त्वनिर्णयटीकया विरोध'परिहारे– क) परि-हारप्रकारस्य चन्द्रिकायां निर्देशः । ख) 'विपक्षे..बाधक'प्रदर्शने– १. वेदो-त्पत्त्यावेदकवाक्यानां शास्त्रे गतिकथनायोगः; २. भगवत्पादोक्तिविरोधप्रसङ्गः ३. तत्त्वविवेकटीकोक्तिविरोधः; ४. प्रमाणलक्षणटीकोक्तिविरोधः; तत्त्व-प्रकाशिकोक्त्ययोगश्च । ४) मतान्तरानुसारेण 'उपलक्षणा'पदस्य जहत्स्वार्थ-परत्वेन विष्णुतत्त्वनिर्णयटीकाविरोधपरिहारश्च । ]

ननु तर्हि उद्देशानुसारेण नित्यानित्यस्य आदौ निर्देशः कार्यः; इत्यत आह **क्रमेणेति** । प्राधान्यक्रमेण, अचेतनत्रयं 'ज्ञापयिषुः, नित्यस्य तावत्– नित्यानित्यापेक्षया आदौ, निर्दिशति= 'इदम्'इति निरूपयति; इत्यर्थः ॥

'नित्या वेदाः'इत्यनेन उक्तं वेदानां नित्यत्वं यदि अविनाशित्वम् अभिप्रेतम्, तर्हि नित्यानित्यस्य पुराणादेः अविनाशित्वरूपनित्यत्वस्य सत्त्वात् नित्यानित्यत्वस्य नित्यात् भेदः न युक्तः; इत्यत आह **अत्रेति** । अत्र–

---

१. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् । २. प्रमाणात्

अस्मिन् वाक्ये; वेदानाम् उक्तं नित्यत्वं नाम; कूटस्थतया== कूटम्= आकाशम्, तद्वत् तिष्ठति, इति कूटस्थम्, तस्य भावः, कूटस्थतया– एकप्रकारेणविद्यमानतया इत्यर्थः; आद्यन्तशून्यत्वम्= उत्पत्तिविनाशरहितत्वम्; इत्यर्थः। नित्यानित्यस्य पुराणादेः, विवक्षितकूटस्थनित्यत्वस्य अभावेन नित्यात् भेदः युक्तः; इति भावः।;

'अन्तशून्यत्वम्'इत्येव उक्ते, प्रध्वमे अतिव्याप्तिः; तद्वारणाय 'आदि' पदोपादानम्।,

'आदिशून्यत्वम्'एव उक्ते, प्रागभावे अतिव्याप्तिः; तन्निरासाय 'कूटस्थतया'इति विशेषणम्। कालप्रवाहस्य निमेषाद्यंशरूपेण उत्पत्तिविनाशयोः सत्त्वात्. प्रकृतेः उपादेयमहदादिरूपेण उत्पत्तिविनाशयोः सत्त्वात्; एकप्रकारेण विद्यमानरूपकूटस्थत्वाभावात् 'कूटस्थतया'इत्यनेन तयोः व्यवच्छेदः।

ननु वेदानाम् एतादृशं नित्यत्वं कुतः सिद्धम्? इत्यत आह **तच्चेति**

तत् तु = वेदानाम् एतादृशनित्यत्वं तु;

'नित्या[1] वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः।
सर्गे सर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च॥
तत्क्रमेणैव तैर्वर्णैस्तैः स्वरैरेव नान्यथा।
अतः श्रुतित्वमेतसां श्रुता एवाखिलैर्जनैः॥',
'विज्ञेयं[2] परमं ब्रह्म ज्ञापिका परमा श्रुतिः।
अनादिनित्या सा तच्च विना तां न स गम्यते॥',
'अनादिनिधना[3] नित्या वागुत्सृष्टा स्वयंभुवा।'

इत्यादिप्रमाणैः, सिद्धम्= प्रमितम्; इत्यर्थः॥

---

१. वि.त.नि.पृ. २८३, २५२ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम्।
२. ,, २४० इत्यत्रोदाहृता कात्यायनश्रुतिः।
३. ब्र.सू. भाष्ये ४–२–२–४ इत्यत्रोदाहृता स्मृतिः।

ननु 'नित्या वेदाः पुराणाद्याः' इति वाक्ये 'वेदाः' इतिपदं वाच्यार्थमात्रपरम्, इतिप्रतीतिनिरासाय आह अत्र वेदा इति। अस्मिन् वाक्ये, 'वेदाः इतिपदं, पञ्चाशत् वर्णानाम्= केवलपञ्चाशद्वर्णानाम्, अव्याकृत-आकाशस्य, च, उपलक्षणम्; 'उपलक्षण' पदस्य अजहत्स्वार्थलक्षणायां प्रयोगबाहुल्यसद्भावात् अजहत्स्वार्थलक्षकम्; इत्यर्थः ।,

'अव्याकृत' पदं भूताकाशव्यावृत्त्यर्थम् । तस्य लक्षकत्वे प्रयोजकम् आह तथाभावादिति । षष्ठ्यन्तपदद्वयम् अनेन अपि सम्बध्यते । तथाभावात्= कूटस्थनित्यत्वात्; इत्यर्थः । वेदानाम् इव शुद्धवर्णात्मकशब्दजातस्य, अव्याकृत-आकाशस्य च कूटस्थनित्यत्वेन अविशेषात्, विशिष्य; वेदानाम् एव नित्यत्वोक्तौ नियामकाभावात् 'त्रिविधा' इति 'धाल्' प्रत्ययप्रयोगेन नित्यानित्यस्य इव अनित्यस्य इव च नित्यस्य अपि अवान्तरभेदस्य सूचितत्वात् च, 'वेदाः' इतिपदस्य उक्तलक्षणया; लक्षकत्वम् अभ्युपेयम्; इति भावः ।

न च " 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः; किन्तु, शब्दतः अर्थतश्च एकप्रकारताम् एव' इत्यादिविष्णुतत्त्वविर्णयटीकावाक्यविरोधः" इति वाच्यम्; गौयत्र्यधिकरणे चन्द्रिकायाम् उक्तरीत्या विरोधपरिहारसम्भवात् । अन्यथा--

१) ईश्वरबुद्धिस्थवेदक्रमस्य उत्पत्तिमत्त्वे, वेदोत्पत्त्यावेदकवाक्यानां शास्त्रे गतिकथनायोगात्; ईश्वरबुद्धौ सर्वदा प्रतीयमानत्वात् ।,

२) 'नित्यत्वादेव शब्दानां तत्स्वभावः कथं ततः',
'वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽखिलं यतः ।',

---

४. पृ. २४४. ५. ब्र.सू. १-१-११अ.
६. द्वादशस्तोत्रम् १-७.

'   देशः कालः श्रुतिस्तथा ।',
'   वेदा नित्यत्वान्मानमुत्तमम् ।'

इत्यादिभगवत्पादोक्तिविरोधप्रसङ्गाच्च ।,

३] तत्त्वविवेकटीकायां 'देशः कालः श्रुतिस्तथा'इतिवाक्यव्याख्यानावसरे 'श्रुतिः वेदः'इत्युक्त्ययोगाच्च ।,

४] प्रमाणलक्षणटीकायाम् ''आगमः द्विविधः, नित्यः अनित्यश्च; वेदः नित्यः, अनित्यः पुराणादिः। वर्णानां सर्वत्र नित्यत्वेऽपि=उत्पत्तिरहितत्वेऽपि, प्रबन्धविशेषस्य= आनुपूर्वीविशेषस्य, नित्यत्वानित्यत्वाभ्याम्= अनुत्पन्नत्वोत्पन्नत्वाभ्याम्, अयम् विभागः = 'नित्यः अनित्यश्च'इतिविभागः ।''इत्युक्त्ययोगाच्च; वेद-पुराणयोः अविनाशित्वरूपनित्यत्वसाम्येन अनुत्पत्त्युत्पत्तिभावाभावाभ्याम् एव विशेषस्य वक्तव्यत्वाभावात् ।,

५] तत्त्वप्रकाशिकायां 'न विलक्षणत्वादस्य तथात्वं च शब्दात्'इतिसूत्रभाष्य-व्याख्यानावसरे 'बहुकालीनत्वमात्रेण नित्यत्वोपचारः किं न स्यात्? इत्यत आह 'अनादि'इति । अनादिनिधना नित्या, न तु बहुकालीनत्वमात्रेण नित्यत्वोपचारः; इत्यर्थः ।''इत्युक्त्ययोगाच्च ।

केचित् तु 'विष्णुतत्त्वनिर्णयटीकावाक्येषु भारं निधाय 'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः'इत्यनुव्याख्याने 'उपलक्षणा'पदस्य लक्षणायां प्रयोगात्; अत्र वाक्ये, 'वेदाः'इतिपदम्, उपलक्षणम् जहत्स्वार्थलक्षणया, =पञ्चाशद्वर्णानाम् अव्याकृत-आकाशस्य च जहत्स्वार्थलक्षणया लक्षकम्; अतः न विष्णुतत्त्वनिर्णयटीकाविरोधः ।''इत्याहुः ।

[ ३३ मु. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-'नित्य'निर्देशे—

अ) 'क्रमेण..नित्या इति'इत्यस्य व्याख्याने— त्रिविधतद्व्यावारकतया अवतरणम् ।

---

७. त.वि.श्लो. ८.   ८. अणुभाष्यम् २–१   ९. श्लो. ८.

१. ब्र.सू.भा. २–१–२–४.

आ) 'अत्र नित्यत्वं..सिद्धम्'इत्यस्य व्याख्याने– १) सप्रयोजन-'नित्य'शब्दार्थनिर्धारकतया अवतरणम् । २) दलकृत्ये– क) 'आदि, अन्त, आद्यन्तशून्यत्वम्'इत्येषां कृत्यानि । ख) अत्यन्ताभावस्य लक्ष्यत्वम् । ग) एतन्नित्यत्वस्य लक्ष्मीविष्णुबुद्धिगतवेदाभिप्रायकत्वञ्च । ३) 'तच्च .सिद्धम्'-इत्यस्य व्याख्याने– क) 'वेदानाम् उक्तनित्यत्व'साधकतया अवतरणम् ख) टीकोक्तप्रमाणात् विवक्षित'नित्य'पदार्थलाभः । ग) 'न हि वयं'इत्यादितत्त्व-निर्णयटीकायाः अभिप्रायविशेषप्रकटनपूर्वकम् उक्तार्थे विरोधपरिहरणञ्च ।

इ) 'अत्र वेदाः तथाभावात्'इत्यस्य द्वेधा व्याख्याने– १) प्रथमतः – क) प्रकृत'वेद'शब्दस्य मुख्यवृत्तिनिवारकतया अवतरणम् । ख) 'उप-लक्षण'पदस्य 'अजहत्'परता । ग) मुख्यवृत्तिनिषेधकारणोक्तितया 'एकपञ्चाशत् ..तथात्वात्'इत्यस्य अवतरणम्, पदार्थः, सप्रयोजन-अजहल्लक्षणाङ्गीकरणरूपो-भावश्च । २) प्रकारान्तरेण व्याख्याने– क) 'वेदस्य कूटस्थत्वानुपपत्तेः', 'अव्याकृताकाशस्य कूटस्थत्वानुक्त्या प्राप्तायाः न्यूनतायाश्च'निवारकतया अवतरणम् । ख) लक्षणीयदर्शकतया 'पञ्चाशत्..तथात्वात्'इत्यस्य अवतरणम्, अर्थः, अभिप्रायश्च । ]

"ननु 'नित्या वेदाः'इतिमूले 'वेदाः नित्याः'इति वेदानां नित्यत्व-कथनम् अयुक्तम्, वेदनित्यत्वादेः अनाकाङ्क्षितत्वात्; न च 'नित्यम् अन्ते-तनम् 'वेदाः'इत्यनेन निर्दिश्यते'इति, नित्यानित्यत्वादेः अदर्शनेन न्यूनताऽऽ-पत्तेः; न च 'इदं प्रदर्श्य तत्प्रदर्श्यते'इति, तथाऽपि विनिगमनविरहेण तदेव प्रदर्श्य इदं प्रदर्श्यताम्''इत्येताः शङ्काः परिहरन् अवतारयति क्रमेणेत्यादिना॥

'नित्य'शब्दस्य " 'स्वरूपेण वा प्रकारान्तरेण वा ध्वंसाप्रतियोगि-त्वं'ादेः नित्यानित्यसाधारण"ार्थप्रतीतेः आह अन्तेति ।;

अन्तशून्यत्वं ध्वंसे प्रसक्तम्; अतः 'आदि'इति ।,

आदिशून्यत्वं भावरूप-अविद्यादौ; अतः 'अन्त'इति । निर्विकारतया इत्यर्थः ।,

---

१. विनिगमनाविरहेण

न च 'कूटस्थत्वम् एव अस्तु' इति वाच्यम्; निर्विकारयोः प्रागभाव-प्रध्वंसयोः अतिप्रसङ्गपरिहारार्थत्वेन अवैयर्थ्यम् 'आद्यन्तशून्य'पदद्वयस्य ।,

न च अत्यन्ताभावे विशिष्टाभावस्य अतिप्रसक्तिः, तस्यापि लक्ष्यत्वेन अदोषत्वात् ; इति ।;

लक्ष्मीविष्णुबुद्धिगतवेदाभिप्रायेण एतत् नित्यत्वम्; न अन्यबुद्धि-गतानाम् ।

उक्तरूपनित्यत्वं वेदानां कुतः ? इत्यतः आह तच्चेति ।;

वेदानां कूटस्थनित्यत्वम्; 'नित्या[२] वेदाः' इति नित्यत्वम् उक्त्वा 'यन केनापि रूपेण नित्यत्वं किम् ?' इत्याकाङ्क्षानिवृत्त्यै 'शाश्वताः' इति-शश्वदेकप्रकारार्थक'शाश्वत'पदेन उक्तम्; इत्यर्थः ।

न च 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः, किन्तु शब्दतः अर्थतश्च एकप्रकारताम् एव; ततश्च क्रमस्य कृतकत्वेऽपि पुरुषाभिप्राय प्रवेशेऽपि स्वतन्त्रस्य वक्तुः अभावात् अपौरुषेयत्वम्; उपपद्यते ।' इतिविष्णु-[३]तत्त्वनिर्णयविरोधः । स्यात् एतत् एवम् यदि प्रातीतिकाभिप्रायः स्यात्; न च एवम्, अभिप्रायविशेषात् ॥ तथाहि—

'यदि वेदानां पुरुषाभिप्राय[४]प्रवेशवत्ता, कथं तर्हि अपौरुषेय[५]त्वम्; अभिप्रायस्य स्वतन्त्रवक्तृधर्मत्वात् ?' इत्याशङ्कानिवर्तकत्वेन 'शाश्वताः' इतिपदम् अवतार्य 'शश्वदेकप्रकाराः' इति व्याख्याय च पूर्वपक्षनिराकरणाय 'पूर्वं स्थितानि एव वेदवाक्यानि कानिचित् कैश्चित् पुरुषैः स्वाभिप्रायप्रवेशेन प्रयुज्यन्ते, न तु

२. वि.त.नि.पृ. २४२ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।
३. पृ. २४४.
४. पत्रस्योपरि अस्य 'पुरुषाभिप्रायक्रमोपहितक्रमः' इत्यभिप्रायः सूचितः ।
५. अस्य च 'पुरुषाभिप्रायक्रमोपहितक्रमवर्जितत्वम्' इत्यभिप्रायः सूचितः ।

अपूर्वाणि[6] क्रियन्ते'[7]इत्यभिप्रायं च वर्णयित्वा एतन्निवर्त्यत्वेन 'वर्णाः तावत् नित्यत्वात् सर्वगतत्वात् च स्वतःक्रमशून्याः, न च क्रमेण विना पदवाक्यभावः नापि तमन्तरेण प्रामाण्यम्; अतः क्रमः पौरुषेय एव आस्थेयः; तत् कथं वेदस्य अपौरुषेयत्वम्' इति-शङ्कान्तरं च प्रस्ताव्य तन्निवर्तकत्वप्रकारप्रदर्शनाय हि प्रवृत्तस्य 'न हि वयं वेदस्य'इत्यादेः अयम् अर्थः– वेदस्य कूटस्थत्वं पुरुषाभिप्रायवर्जितत्वं 'शाश्वत'शब्दार्थत्वेन न ब्रूमः, किन्तु शब्दतः अर्थतः च एकप्रकारताम् एव; ततश्च क्रमस्य कृतकत्वेऽपि, तस्यैव व्याख्यातृपुरुषाभिप्रायप्रवेशेऽपि, स्वतन्त्रस्य वक्तुः अभावात्, अर्थं बुद्ध्वा असतः सत्ताप्रापकलक्षणकारणाभावात्, अपौरुषेयत्वम् उपपद्यते । पूर्वपक्ष्युक्त-अपौरुषेयत्वाभावेऽपि पुरुषकृत्युत्पाद्यत्वाभावलक्षणम् अपौरुषेयत्वम् उपपन्नम्; इति ॥ एवञ्च सति न टीकाविरोधः; इति ॥

'वेद'शब्दस्य अत्र मुख्यवृत्त्या अर्थवत्त्वं प्रतीयते; अत आह **अत्रेति** । 'वेदाः'इतिपदम्, उपलक्षणम्= अजहल्लक्षणावृत्तिमत् इत्यर्थः ।,

मुख्यवृत्तिः किं न स्यात्? इत्यत आह **एकपञ्चाशदिति** । तथात्वात्– नित्यत्वात् । मुख्यवृत्तित्वे तदसङ्ग्रहापत्त्या न्यूनत्वापत्तेः अजहल्लक्षणा अङ्गीक्रियते; इति भावः ।

**यद्वा** "ननु क्रमविशेषविशिष्टाः वर्णाः एव वेदः, न तु अव्याकृत-आकाशवत् अर्थान्तरम्; वर्णाश्च नित्यत्वात् सर्वगतत्वाच्च स्वतः क्रमशून्याः; अतः क्रमः बुद्धिनिमित्तः एव आस्थेयः, उक्तं हि–

---

६. अपूर्वाः

७,९,१०.–वि.त.नि.पृ. २४३,२४४ टीकायाः शब्दार्थाभ्याम् अनुवादः ।

८. पत्रस्योपरि अस्य 'कृतकत्वेऽपि तस्यैव व्याख्यातृपुरुषाभिप्रायः'इत्यभिप्रायः सूचितः ।

'वर्णानां देवतानाञ्च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥'

इति ।, तत् कथं वेदानां कूटस्थत्वम् ? वर्णानाम् अव्याकृत-आकाशस्य च कूट-स्थतया प्रमितत्वात् तन्नित्यत्वानुक्तेः न्यूनता च;''इत्यत आह **अत्र वेदा इति** । अत्र उपलक्षणपदेन लक्षणा उच्यते 'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः'इतिवत् ।,

लक्षणीयं दर्शयति **पञ्चाशदिति** । एवञ्च "तच्च वेदानां 'नित्या वेदाः' "इत्यादिपूर्वंवाक्यस्य अपि; ''तच्च- कूटस्थत्वम्, वर्णानाम्, 'नित्या वेदाः समस्ताश्च'इत्यादिप्रमाणे 'तत्क्रमेणैव तैर्वर्णैः'इतियदुदाहृतं वाक्यम् तेन सिद्धम्; इत्यर्थः । अत एव 'इत्यादि'इति'आदि'पदप्रयोगः इति ज्ञेयम् ।

[ ३३ क्र. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-'नित्य'निर्देशे-

अ) 'क्रमेण..नित्या इति'इत्यस्य व्याख्याने- पदार्थः ।

आ) 'अत्र नित्यत्वं..सिद्धम्'इत्यस्य व्याख्याने-

१) प्रकृत्यादिव्यावृत्तनित्यत्वनिर्वचनतया 'अत्र..शून्यत्वम्'इत्यस्य- क) अवतरणम् । ख) शेषः, तद्बलात् तत्त्वविवेकविरोधपरिहारसूचनञ्च । ग) 'कूटस्थतया'इत्यस्य व्याख्याने- १. मतत्रयेण कृत्यप्रदर्शनम्, तेषाम् अभिप्रायश्च; २. तन्मतत्रयेऽणाऽपि तत्परिहरणञ्च ।

२) 'तच्च सिद्धम्'इत्यस्य व्याख्याने- क) 'शब्दानित्यत्वद्वारा वेदा-नित्यत्व'शङ्कानिरासकतया-- अवतरणम्, आशयश्च । ख) पूर्वापरीभावापन्न-बुद्धिविषयत्वरूपक्रमघटितविशिष्टरूपवेदस्य नित्यत्वानुपपत्तिशङ्का, तस्याः पञ्च-विधमतैः निरासश्च । तत्र १. प्रथमविधायाम्- साम्प्रदायिकमतत्वेन- क. वेदस्य पञ्चाशज्जातीय-अनन्तवर्णानां स्वाभाविकक्रमवत्त्वम्, ख. एतत्पक्षानुसा-रेण 'न हि वयं'इत्यादितत्त्वनिर्णयटीकायाः अभ्युपगमवादेन प्रवृत्तत्वम्, 'सम-न्यायेन पुराणादीनां नित्यत्व'शङ्कानिरासश्च; २- द्वितीयप्रकारे-- केचित्पक्ष-

---

१. अनुव्याख्यानम् १-४-२-११. ३. इत्यादीत्यादिषट्प्रयोगः
२. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।

त्वेन– क. उक्तपक्षे दोषोद्भावनपुरःसरं 'वेद'पदस्य जहल्लक्षणया वर्णाकाशादि-परत्वम्, ख. 'नित्या वेदाः समस्ताश्च'इति प्रमाणस्य 'न हि वयं'इत्यादितत्त्व-निर्णयटीकानुसारेण योजना च; ३. तृतीयप्रकारे-अन्यपक्षत्वेन– उभयप्रमाणा-विरोधतया– वेदक्रमस्य नित्यत्व-अनित्यत्वाभ्यां द्वैविध्यं कृत्वा 'ईश्वरबुद्धि-घटितस्य नित्यत्वम्, अस्मदादिबुद्धिघटितस्य च अनित्यत्वम्' इति व्यवस्था; ४. चतुर्थप्रकारेण - अपर पक्षत्वेन– क. उक्तपक्षदोषोद्भावनपूर्वकम् ईश्वर-सङ्कल्पाधीननित्यक्रमविशिष्टवेदस्य नित्यत्वम्, ख. 'वर्णानाम् अभेद'-प्रसङ्गनिरासश्च; ५. पञ्चमप्रकारे– उपाध्यायपक्षत्वेन– क. 'उक्तपक्षे दोषो-द्भावन'पुरःसरं 'क्रमेण भासमानवर्णानां'वेदत्वम् (नित्यानां व्यक्तिक्रमः), ख. उक्तार्थे प्रमाणम्, ग. निष्कर्षश्च, घ. सप्रयोजनं वेदस्य सामान्यरूपेण क्रमिक-भानविशिष्टवर्णत्वरूपत्वम्, ङ. अश्रावणत्वनिरासः, च. यस्य यद्रूपेण आद्य-न्तशून्यत्वम् तस्य तद्रूपेण नित्यत्वाङ्गीकरणम्, छ. साक्षात्कूटस्थत्वस्य निषेधः, वर्ण रूपेण कूटस्थत्वस्य अभिप्रेतता च; इत्यादि । ग) नित्य-त्वेन वेदस्य सङ्ग्रहोपपत्तिरूपः अभिप्रायश्च ।

इ) 'अत्र वेदाः ..तथाभावात्'इत्यस्य व्याख्याने– १) आकाशाद्य-सङ्ग्रहमूलकन्यूनताशङ्कापरिहारकतया अवतरणम् । २) 'उपलक्षण'पदस्य 'अजहत्'परत्वञ्च । ]

**क्रमेण त्रयं दर्शयिष्यन्निति** । प्राधान्यक्रमेण नित्यदर्शनोत्तरं नित्या-नित्यं प्रदर्श्य अनित्यं दर्शयिष्यन्; इत्यर्थः ॥

ननु वेदानाम् एव नित्यत्वोक्तिः अयुक्ता, प्रकृत्यादीनाम् अपि नित्यत्वात्; इत्यतः तद्व्यावृत्तं नित्यत्वं निर्वक्ति **अत्रेति** ॥ 'अस्मिन् ग्रन्थे विवक्षितम्'इति शेषः । तेन[1] 'तत्त्वविवेकादौ प्रकृत्यादेः नित्यत्वोक्तौ अपि न विरोधः, तत्र अन्यविधनित्यत्वस्य विवक्षितत्वात्'इति सूचितम् ।

अत्र "नित्यत्वं च आद्यन्तशून्यत्वम्, तत्र हेतुः 'कूटस्थतया'इति । अपरिणामितया इत्यर्थः ।"इति प्राञ्चः ॥ "आद्यन्तशून्यत्वस्य प्रकृत्यादौ

---

१. 'तेन'इतिपदं नास्ति ।

अतिव्याप्तिः, इत्यतः तद्व्याख्यानं 'कूटस्थतया' इति । निर्विकारत्वरूपम् इत्यर्थः ।" इति केचित् ॥ "उक्त-अतिव्याप्तिवारणाय 'कूटस्थत्वे सति' इति-विशेषणोपादानम् ।" इति अन्ये ।,

तेषाम् अयम् आशयः ।– आद्यमते तावत्, 'आद्यशून्यत्वम्= आद्यन्तवदत्यन्तभिन्नत्वम्; तच्च न आद्यन्तवद्विकाराभिन्नप्रकृत्यादौ अति-व्याप्तम्; अतः न कूटस्थत्वं लक्षणघटकम्;' इति । द्वितीयमते, 'यथाश्रुतस्य आद्यन्ताभाववत्त्वस्य प्रकृत्यादिसाधारणत्वात्, कूटस्थत्वं विवक्षितम्; तच्च विकारसामान्यशून्यत्वम्; ध्वंसप्रागभावादेः अपि जन्मादिविकारवत्त्वेन एव व्यावृत्तेः, न आद्यन्तशून्यत्वम्' पृथक् उपादेयम्" इति । तृतीयमते च, 'अप-रिणामित्व[२]रूपकूटस्थत्वस्य एव विवक्षितत्वात्, ध्वंसादिव्यावर्तकत्वेन आद्यन्ता-भाववत्त्वे सार्थक्यम् ।" इति ।,

'अथ मतत्रये अपि असम्भवः; नित्यानाम् अपि द्वित्वादिगुणा-त्मना परिणामित्वात्, तेन भेदाभेदाङ्गीकाराच्च' इति चेत्, अत्र आहुः— कूटस्थत्वं नाम द्रव्यरूपेण अपरिणामित्वम्= द्रव्यानारम्भकत्वम् इति यावत्; नित्यानां च द्रव्यानारम्भकत्वात् न दोषः ।, न च 'नित्यानाम् अपि एत-द्देशकालादिविशिष्टरूपद्रव्यारम्भकत्वम् अस्ति' इति शङ्क्यम् विशिष्टस्य अद्रव्य-त्वात; इति ॥ एतत् च तृतीयमते एव सङ्गच्छते, न पूर्वमतयोः; आद्य-न्तवद्द्रव्यभिन्नत्वस्य द्रव्यविकारवैधुर्यस्य वा विवक्षायां प्रागभावादौ अति-व्याप्तितादवस्थ्यात् । तस्मात् आद्ये स्वनिष्ठगुणादिभिन्नत्वेन 'आद्यन्तवत्'-विशेषणीयम् । द्वितीये च विकारः; तेन वेदादेः सङ्ग्रहः, प्रागभावादेः व्यावृत्तिश्च; इति ।

ननु शब्दस्यैव अनित्यत्वात् कथं वेदानाम् उक्तविधत्वम्? अत आह तच्चेति ।,

---

२. अपरिणामितत्व

'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।
सर्गे सर्गेऽमुनैवैन उद्गीर्यन्ते तथैव च ॥
तत्क्रमेणैव तैर्वर्णैस्तैःस्वरैरेव नान्यथा ।"

[3]इत्यादिप्रमाणविरोधात् एव वर्णात्मकशब्दानाम् अपि नित्यत्वम् एव; इत्याशयः ।

"ननु क्रमविशिष्टवर्णा एव वेदः, न तु आकाशवत् अर्थान्तरम्; क्रमश्च नित्यानां साक्षात् पौर्वापर्यरूपः सम्भवति इति पूर्वापरीभावापन्नबुद्धिविषयत्वरूपः वक्तव्यः; तथाच तादृशबुद्धीनाम् अनित्यत्वात्, कथं तद्घटितविशिष्टरूपस्य वेदस्य नित्यत्वम् ?" इति चेत् ;—

अत्र **एके साम्प्रदायिकाः** "स्वाभाविक एव वैदिकवर्णक्रमः ।,

न च नित्यानां क्रमायोगः, ईश्वरशक्त्या तदुपपत्तेः ।,

न च " 'ग'कारादेः स्वत एव 'क'कारोत्तरत्वे तस्य तत्पूर्वत्वं क्वापि न स्यात्, विरोधात्" इति वाच्यम्; वैदिकवर्णानाम् आनन्त्येन, एकस्य उत्तरत्वेऽपि अन्यस्य पूर्वत्वोपपत्तेः ।,

न च वर्णानां पञ्चाशत्त्वविरोधः, पञ्चाशत्-जातीयत्वमात्र-उपगमात् ।,

न च " 'वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥'

इति[4]तन्त्रसारविरोधः" इति वाच्यम्; तत्र देशकालकृतक्रममात्रनिषेधेन, स्वाभाविकक्रमाविरोधात्; व्यक्तिक्रमकथनस्य च प्रणवादीनाम् उत्पत्तिक्रमस्वरूपनिरूपणपरत्वात् ।,

न च "एवम् 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः'[5]इतितत्त्वनिर्णयटीकाविरोधः" इति वाच्यम्, तस्य अभ्युपगमवादेन प्रवृत्तत्वात्; अन्यथा एत-

---

३. वि.त नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।
४. १–३०. ५. पृ. २४५

ट्टीकाविरोधात्, सप्रमाणत्वेन एतस्याः प्राबल्यात् ।,

न च "एवं पुराणादीनाम् अपि नित्यत्वापत्तिः, लौकिकवर्णानां स्वाभाविकक्रमानङ्गीकारात् ।,

एवञ्च वेदनित्यत्वे न कश्चित् विरोधः ।" इत्याहुः ।;

केचित् तु "पञ्चाशद्वर्णैः एव सकललौकिकवैदिकव्यवहारोपपत्तेः प्रमाणाभावाच्च न पूर्वोक्तबहुकल्पना युक्ता, नापि क्रमस्य स्वाभाविकत्वम् अङ्गीकारार्हम्; तथा सति, वर्णधर्मस्य क्रमस्य यावद्द्रव्यभावित्वेन वर्णैः अत्यन्ताभिन्नतया वर्णानां परस्पराभेदप्रसङ्गात्; तथाच क्रमस्य कृतकत्वात्, न तद्विशिष्टवर्णात्मकस्य वेदस्य नित्यत्वम् ।,

न च 'एवं मूलविरोधः'; तत्र 'वेद'पदेन पञ्चाशद्वर्णानाम् एव ग्रहणात्, 'उपलक्षणम्'इतिटीकायाश्च जहत्स्वार्थलक्षणया 'वर्ण-आकाशपरम्'-इत्यर्थसम्भवात् ।,

न च " 'नित्या वेदाः समस्ताश्च'[६]इतिप्रमाणविरोधः, तत्र वर्णानां पृथक् ग्रहणेन तदुपलक्षणायोगात्" इति वाच्यम्; 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः, किन्तु शब्दतः अर्थतश्च सदा एकप्रकारताम्'[७]इतिटीकाऽनुसारेण तद्व्याख्यानात् ।,

न च 'एवम् अत्र तदुदाहरणासङ्गतिः', 'तैर्वर्णैः'[८]इति वर्णानां कूटस्थनित्यत्वोक्तेः; अत एव टीकायाम् 'इत्यादि' इति 'आदि' पदप्रयोगः ।" इति वर्णयन्ति ।;

अन्ये तु " 'वैदिकवर्णक्रमः यदि नित्य एव तदा तत्त्वनिर्णयटीकाविरोधः, यदि च अनित्यएव तदा 'तत्क्रमेणैव'[९]इत्युदाहृतप्रमाण-

६. वि.त.नि.पृ.२४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यत् ।
७. वि.त.नि.टि.पृ. २४४
८,९. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यत् ।

विरोधः' इति-अर्थापत्त्या, द्विविधः एव अङ्गीकार्यः 'ईश्वरबुद्धिघटितः नित्यः, असमदादिबुद्धिघटितः तु अनित्यः' इति । ततश्च तत्तद्विशिष्टरूपस्य वेदस्य अपि द्वैविध्यम् एव ॥ तथाच वेदनित्यत्वप्रतिपादकानाम् ईश्वरबुद्धिघटित-क्रमविशिष्टपरत्वात्; तदनित्यत्वप्रतिपादकानाम् असमदादिबुद्धिघटितक्रमविशिष्ट-परत्वात्; न विरोधः ।'' इत्याचक्षते ।;

अपरे तु ''न वेदद्वैविध्यं युक्तम्, प्रमाणाभावात् । तथात्वे च असमदादिपठ्यमानस्य प्रणीतत्वेन अप्रामाण्यप्रसङ्गात्; अभ्युदयसाधनत्वाभाव-प्रसङ्गात् च; 'ऋग्वेद एवाग्नेरजायत' इत्यादेःअभिव्यक्त्यर्थतया व्याख्यान-वैयर्थ्यात् च; वेदस्य बुद्धिघटितत्वासम्भवात् च, अन्यथा बुद्धेः अश्रावणत्वेन वेदस्य अश्रावणत्वप्रसङ्गात् । तस्मात् साङ्कल्पिकक्रमविशिष्टवर्णानाम् एव वेदत्वम्; यथा हि मानससङ्कल्पात्[1] विप्राणां पूजादौ क्रमः, तथा नित्यानाम् अपि तदुपपत्तेः ।,

न च सङ्कल्पस्य अश्रावणत्वेन वेदस्य अश्रावणत्वप्रसङ्गः, 'सङ्कल्पा-घटितः वर्णधर्मः क्रमः अस्ति' इत्यङ्गीकारात् । एवञ्च ईश्वरसङ्कल्पाधीनस्य वैदिकवर्णक्रमस्य नित्यत्वात् वेदस्य नित्यत्वं सिद्धम् ।,

न च एवम् उक्तप्रकारेण वर्णानाम् अभेदप्रसङ्गः, अन्योन्याभाववत् एकवर्णप्रतियोगिकक्रमस्य अपरवर्णनिष्ठत्वेन अनेकधर्मत्वाभावात् ।,

एवं कालिदासादिवाक्येषु अपि तत्तत्सङ्कल्पाधीनः क्रमः उत्पद्यते ।'' इति वदन्ति ।;

उपाध्यायाः तु एवम् आहुः— ''साङ्कल्पिकः अपि क्रमः किं पौर्वापर्यरूपः ? उत अन्यः ? नाद्यः, नित्यानां पौर्वापर्यस्य व्याहतत्वात्; नान्त्यः, प्रमाणाभावात्, विप्रेषु अपि क्रमिकपूजाविषयत्वातिरिक्तक्रमविशे-षस्य असिद्धेः । एवम् तत्तद्वक्तृसङ्कल्पात् एव तत्र तत्र क्रमविशेषाङ्गीकारे पदार्थमात्रे अपि तथाविधक्रमाङ्गीकारप्रसङ्गः । तस्मात् नित्यानां स्वाभावि-

१ .यजमानसङ्कल्पात्

क्रमायोगात्, व्यक्तिक्रम एव वक्तव्यः ।, तदुक्तम्-

'वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥'

इति[२] ॥ तथाच 'क्रमेण भासमानाः वर्णाः वेदः'इति फलितम् ।,

यद्यपि क्रमेण भासमानत्वम् एकवर्णोत्तरभानविशिष्ट-अपरवर्णत्वरूपम् न यावद्वर्णसाधारणम्, तथाऽपि तादृशवर्णत्वरूपवाक्यानुपूर्वीघटकभानविशिष्टवर्णत्वं बोध्यम् । एवञ्च तादृशभानस्य ईश्वरीयस्य नित्यत्वात् वेदनित्यत्वम् ।,

न च नित्यत्वे क्रमायोगः, उत्पत्त्यभावे अपि व्यक्तिविशेषेण तदुपपत्तेः ।,

न च क्रमिकव्यक्त्यङ्गीकारे,

'वैकुण्ठस्याखिला वेदा उदीर्यन्तेऽनिशं यतः ।'

इति[३]-अचार्योक्तिविरोधः; अनन्तमुखैः अखिलवेदोच्चारणे अपि एकैकमुखेन क्रमिकव्यक्त्यविरोधात् ।,

न च अस्मदादिबुद्धिकमस्य अनित्यत्वात् वेदानित्यत्वप्रसङ्गः; सामान्यतः क्रमिकभानविशिष्टवर्णानाम् एव वेदत्वात्, तादृशविशिष्टस्य च सर्वदा एव सत्त्वात् । तदुक्तं तत्त्वनिर्णयटीकायाम्[४] 'क्रमविशिष्टवर्णाः एव हि वेदः; क्रमश्च बुद्धिनिमित्त एव । ततश्च सर्वेषां सर्वथा वर्णविषयविवक्षितक्रमोपाधिभूतबुद्ध्युपरम एव वेदे विनाशः वक्तव्यः । न च ईश्वरस्य तथाविधबुद्ध्युपरमः युज्यते ।'इति ।,

एतेन 'क्रमस्य कालघटितत्वात्, कालस्य अनित्यत्वात्, न वेदनित्यत्वम्'इत्यपास्तम्, सामान्यरूपेण नित्यत्वाविरोधात् । अत एव न उक्त-अप्रामाण्यप्रसङ्गः ।,

---

२. तन्त्रसारः १-३०. ३. द्वादशस्तोत्रम् १-७. ४. पृ. २६१.

सामान्यतो वेदस्य प्रामाण्याद्यवधारणात्, विशेषस्य च सामान्यानति-रेकात्; नापि अश्रावणत्वप्रसङ्गः, साक्ष्युपनीतक्रमविशिष्टवर्णानां श्रावणत्वोप-पत्तेः। अन्यथा उक्तटीकाविरोधात्।,

न च 'एवम् पुराणादीनाम् अपि नित्यत्वप्रसङ्गः, तत्रापि ईश्वर-बुद्धिक्रमस्य ध्वंसप्रागभावाप्रतियोगित्वेन नित्यत्वात्' इति वाच्यम्; यस्य यद्रू-पेण, आद्यन्तावधिशून्यत्वम्= कृत्स्नकालवृत्तित्वम् इति यावत्, तस्य तद्रूपेण नित्यत्वाङ्गीकारात्; पुराणादीनां च, यः क्रमः तद्विशिष्टरूपेण कृत्स्नकाल-वृत्तित्वाभावात्, न तद्रूपेण नित्यत्वम्। सामान्यतः बुद्धिविषयत्वविशिष्ट-वर्णादिरूपेण तु नित्यत्वम् इष्यते एव।,

न च एवम् कालस्यापि कालत्वादिरूपेण कृत्स्नकालवृत्तित्वात् नित्यत्वाऽऽपत्तिः; धर्मिरूपेण कूटस्थत्वस्य विवक्षितत्वात्, कालस्य च क्षणादि-रूपस्य निर्विकारत्वरूपकूटस्थत्वाभावात्।,

न च 'एवम् तत एव ध्वंसप्रागभावव्यावृत्तेः, आद्यन्तशून्यत्वं व्यर्थम्' इति वाच्यम्; यत्किञ्चिद्ध्वंसप्रागभावविशिष्टआकाशादौ अतिव्याप्ति-वारकतया तत्सार्थक्यात्।,

एतेन "वेदस्य कूटस्थत्वाङ्गीकारे, 'न हि वयम्' इत्यादितत्त्वनिर्णय-टीका[6]विरोधः। न च असौ अभ्युपगमवादः; 'नित्या वेदाः' इत्यादिप्रमा-णोक्तनित्यत्वव्याघातप्रसङ्गात्, 'अखिलैरप्येकप्रकारेणैव पठ्यन्ते; एतदेव अनादिनित्यत्वम्' इतिटीकाविरोधात् च, 'अत आकाशादिगुणैः शब्दैर्व्यज्य-माना वर्णादयः, तत्क्रमात्मको वेदश्च नित्य एव' इतिमूले 'वेदनित्यत्वस्य पृथ-ग्विधत्वात् पृथक् उपसंहारः' इतिटीकाविरोधात् च, 'न हि वयं वेदं कूटस्थ-

६- पृ. २४४ ७. वि.त.नि.पृ. २४६ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम्।

८. वि.त.नि.टी.पृ. २५८ ९. वि.त.नि.पृ. २६६

१. 'वेद' पदं तट्टीकावाक्ये नोपलब्धम्।

नित्यं ब्रूमः' इतिसुधा[२]विरोधात् च।''इत्यादिकम् अपास्तम्; तत्र साक्षात्कूटस्थत्वस्य निषिद्धत्वात्, अत्र पुनः वर्णरूपेण कूटस्थत्वस्य अभिप्रेतत्वेन विरोधाभावात्।'';

इत्थञ्च 'नित्या वेदाः'इतिमूले[३], 'तच्च वेदानाम्'इतिटीकायाम्[४], 'श्रुतिर्वेदः'इतितत्त्वविवेकटीकायां[५] च वेदग्रहणं सङ्गच्छति; अचेतनत्रैविध्यं च उपपद्यते। अन्यथा वेदस्य नित्यानन्तर्भावे तच्चातुर्विध्यप्रसङ्गात्। इति अन्यत्र विस्तरः॥

ननु तथाऽपि, आकाशादीनां नित्यत्वानुक्त्या मूलस्य न्यूनता; इत्यत आह अत्रेति।

उपलक्षणम्= अजहत्स्वार्थलक्षणया[६] यावन्नित्यपरम्; इत्यर्थः।

[ २३ भ. अस्वतन्त्रतत्त्व भाव-अचेतन-'नित्य'निर्देशे-

अ) 'अत्र नित्यत्वं..सिद्धम्'इत्यस्य व्याख्याने- १) 'अत्र..शून्यत्वम्' इत्यस्य व्याख्याने- क) नित्यलक्षणनिर्धारकतया अवतरणम्। ख) पदार्थे- १. 'कूटस्थत्व'पदार्थविचारे- क. 'निर्विकारत्व'निषेधः, अत्रार्थे तत्त्वनिर्णयटीकया अविरोधश्च; ख. उक्तार्थेन अव्याप्त्यतिव्याप्तिनिरासश्च; २. 'आद्यन्तशून्यत्व'पदार्थविचारे- क. सप्रयोजनं विवक्षितार्थकथनम्; ख. अनादिनित्यक्रमप्रवाहविशिष्टत्वेन वेदस्य अनादिनित्यत्वम्, सप्रयोजनः 'सर्वथा आद्यन्तशून्यत्व'स्य निषेधश्च। ग) दलकृत्ये- 'आद्यन्तशून्यत्वम्'इत्यस्य क्षणे--अतिव्याप्तिनिरासार्थकत्वम्। घ) 'नित्य'लक्षणनिष्पत्तिः। ङ) मतान्तरोक्ते 'कूटस्थत्वस्य हेतुत्वे'दोषप्रदर्शनञ्च। २) 'तच्च..सिद्धम्'इत्यस्य व्याख्याने- क) पूर्वोक्तप्रतिज्ञासम्बन्धप्रदर्शनपूर्वकं नित्यवस्तुनि-प्रमाणोक्तितया अवतरणम्। ख) 'एतत्प्रमाणेन भागशः साधित'प्रमेयद्वयप्रदर्शनम्।

---

२. श्रीमन्न्यायसुधा १-१-१ पृ. ८४ पं. २५. ३. त.सं. ८ श्लोके
४. त.सं.श्लो. ८ टीका / अस्मिन्ग्रन्थे पृ. २-१६१.
५. त.वि.श्लो.८ टीका पृ. ७१ ६. जहत्

आ) 'अत्र वेदाः..तथाभावात्'इत्यस्य व्याख्याने– १) 'अत्र वेदा इत्युपलक्षणम्'इत्यस्य व्याख्याने– क) 'नित्यत्वे सङ्कोच-सङ्ग्राह्यासङ्ग्रह'भ्रम-निवारकतया अवतरणम् । ख) सम्बन्धप्रदर्शनञ्च । २ 'पञ्चाशत्..तथा-भावात्'इत्यस्य व्याख्याने- क) उपलक्षणहेतूक्तितया अवतरणम् । ख) 'क्ष'-कारस्य अपृथक्त्वेन पञ्चाशत्त्वसमर्थनम् । ग 'तथाभावात्'इत्यस्य अर्थः ।

इ) परिष्कृतलक्षणे निर्विकारत्वरूपकूटस्थत्वस आद्यन्तशून्यत्वस्यापि निवेशाभावेऽपि अदोषत्वञ्च ।

ई) ग्रन्थोदानुसारेण- १) 'जहदजहल्लक्षणया वर्णानाम् एव ग्रहण'-स्य निरासः । २) यावन्नित्यसङ्ग्राहकलक्षणोक्तिश्च । ]

"किम् [१]अत्र नित्यत्वं नाम ध्वंसाप्रतियोगित्वं वा ? आद्यन्तशून्य-त्वम् ? नाद्यः. पौरुषेयग्रन्थे अतिव्याप्तेः; न द्वितीयः, काले प्रकृतौ च अति-व्याप्तेः; अतः कथं नित्यलक्षणाऽऽक्रान्ततया वेदानां निर्देशः ? इति ।" तत्र आह **अत्र नित्यत्वं नामेति ।**;

[२]अत्र कूटस्थत्वं नाम न निर्विकारत्वं विवक्षितम्, पदवाक्यभावहेतु-भूतक्रमविशेषावच्छिन्नस्य एव वर्णजातस्य वेदत्वात्; क्रमश्च बुद्ध्युपाधिकत्वात्

१. 'नित्यस्य लक्षणमाह'इत्येव अवतरणम् ग्रन्थान्तरे ।
२. 'अत्र..विवक्षितम्'इत्यस्य स्थाने 'अत्र कूटस्थताशब्देन निर्विकारता-विवक्षायां तु वेदेषु लक्षणाभावापत्तिः ।'इति; तथा 'भ्रमः...राहित्यम्'इत्यस्य स्थाने''भ्रमः; किन्तु शब्दतः अर्थतश्च सदा एकप्रकारताम्'इतितत्त्वनिर्णय-टीकादिविरोधोऽपि परिहृतः; तत्र कूटस्थशब्दस्य निर्विकारताऽर्थकत्वात्, अत्र च शश्वदेकप्रकारतार्थकत्वात् ।'' इति ग्रन्थान्तरे ।

इतोऽग्रेपि ''न च– 'वेदाः इत्युपलक्षणम्, पञ्चाशद्वर्णानाम् अव्या-कृताकाशस्य च तथाभावात्;'इतिवक्ष्यमाणानुरोधेन 'वेद'पदेन जहदजहल्ल-क्षणया वर्णानाम् एव ग्रहणम्; –इति वाच्यम्; तथा सति वेदानां कुत्रापि अन्तर्भावाभावेन तत्त्वस्यैव असम्भवापातात्; 'नित्या वेदाः समस्ताश्च'इत्यादि-प्रमाणोदाहरणासम्भवात् च, तत्र वेदानाम् एव विवक्षितत्वात् । शश्वदेक-प्रकारतालक्षणं तु नियतप्रकारेषु वेदेषु, निर्विकारेषु, अव्याकृताकाशे च सर्वत्र विद्यते; इति न कश्चित् दोषः ।''इत्येव ग्रन्थान्तरे ।

कृत्रिम एव, इति तद्रूपेण वेदस्य विकारावश्यंभावात् । अत एव 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः'[3] इतितत्त्वनिर्णयटीकायां[4] न स्पष्टं वेदानां कूटस्थत्वाभावः अभिहितः; किन्नाम अन्यथाभावराहित्यम् ।,

एतच्च प्रतिकल्पं शब्दतः अर्थतश्च नियत-एकप्रकारेषु वेदेषु न अनुपपन्नम् । अनुपपन्नं च काले क्षणलवादिरूपेण उत्पत्तिविनाशवति, महदादिरूपेण उत्पत्तिविनाशवत्यां प्रकृतौ च; इति न अव्याप्तिः नापि अतिव्याप्तिः ।;

आद्यन्तशून्यत्वं च त्रैकालिकसत्तावत्त्वं विवक्षितत्, अतः न असति प्रसङ्गः ।,

ननु क्रमस्य जनिविनाशवत्त्वेन कथं तद्विशिष्टस्य वेदस्य आद्यन्तशून्यत्वम्? इति चेन्; सत्यम्; तथाऽपि क्रमप्रवाहस्य अनादिनित्यत्वेन, तद्विशिष्टस्य अपि वेदस्य अपि तथात्वोपपत्तेः । न हि सर्वथा आद्यन्तशून्यत्वं निवेशितम्, येन वेदे तदसम्भवः स्यात्; इति ।;

अत्र कूटस्थत्वमात्रोक्तौ एकैकस्मिन् काले क्षणे अतिव्याप्तिः; तस्य तस्मिन्नेव क्षणे स्वरूपत एव ध्वंसात्, घटादिवदवस्थान्तरापत्तिरूपविनाशाभावात्; अतः 'आद्यन्तशून्यत्वम्'इति ।;

**तथाच** अन्यथाभावरहितत्वे सति सदा विद्यमानत्वं नित्यत्वम् इति लक्षणनिष्पत्तिः ।;

केचित् तु 'आद्यन्तशून्यत्वे कूटस्थत्वं हेतुतया एव उपात्तम्, न तु लक्षणान्तर्गतम्;' इति आहुः । तन्न; कालक्षणे[5] व्यभिचारात् ।

'तच्च लेशतो दर्शयिष्यामः'[6]इतिप्रतिज्ञातत्वात् नित्यवस्तुसद्भावे तावत् प्रमाणं दर्शयति **तच्चेति** ।,

---

३. वि.त.नि.टी.पृ. २४४ ४. 'न'कारो नास्ति ।
५. कालक्षणे व्यभिचारात्, कालादौ अतिव्याप्तेश्च ।
६. २-१५० पृष्ठे २२ पङ्क्तौ टीकायाम् ।

अत्र 'नित्या वेदाः समस्ताश्च शाश्वता'इत्येतावत् अन्यथाभावराहित्य-रूपकूटस्थत्वे प्रमाणम्; 'विष्णुबुद्धिगाः'इति च आद्यन्तशून्यत्वे सर्वज्ञत्वात् ईश्वरस्य, तद्बुद्धौ सर्वदा प्रतीयमानत्वात्'इति उपपाद्यमानत्वात् उत्तरत्र तत्त्वनिर्णये ॥

अत्र नित्यत्वस्य वेदमात्रनिष्ठता भ्रमनिवारणाय, वर्णादीनाम् अन्यत्र अनन्तर्भावेन तत्सङ्ग्रहाभावप्रसङ्गनिवारणार्थञ्च आह **अत्रेति** ।

'पञ्चाशद्वर्णानाम् अव्याकृताकाशस्य च'इतिवक्ष्यमाणम् अत्रापि सम्बध्यते ।;

कुतः उक्तलक्षणम्? इत्यत आह **पञ्चाशद्वर्णानामिति** ।;

'क्ष'कारस्य 'क्''ष्'योगात्मकत्वेन अपृथग्वर्णत्वात् 'पञ्चाशत्'इत्युक्तिः।;

**तथाभावादिति** । कूटस्थतया आद्यन्तशून्यत्वात्; इत्यर्थः ॥

'ननु अत्र निर्विकारत्वरूपम् एव कूटस्थत्वम् उच्यते, सर्वथा आद्यन्तशून्यत्वञ्च; तत् कथं लक्षणपरिष्कारे तदुभयनिषेधः?'इति चेत्; उच्यते → 'परिष्कृतलक्षणं हि वर्णादिसर्ववृत्ति; न प्रतीतलक्षणम्, वेदे तदभावस्य उपपादितत्वात् ।, नापि सद्भावमात्रेण लक्षणतया निवेशः सम्भवति, येन निर्विकारत्वाद्यपि लक्षणीकर्तुं शक्येत ।; अतः न तन्निषेधः दोषाय'इति ।

[ ३४ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यविभागे–

अ) विभागेन नित्यानित्योक्तिनया 'पुराणाद्याः..प्रोक्तम्'इतिमूलस्य अवतरणम् ।

आ) विधात्रयप्रदर्शने– १) पदार्थसहितम् प्रथमविधावद्वस्तुप्रदर्शनम् । २) द्वितीयविधावद्वस्तुप्रदर्शनम् । ३) तृतीयविधावद्वस्तुप्रदर्शनञ्च । ]

---

७,८. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतम् ब्रह्माण्डवाक्यम् ।

नित्यानित्यं विभागेन आह 'पुराणाद्याः'– इति ।

[ १८ त. विषयः– नित्यानित्यत्रैविध्यम् । ]

**पुराणाद्याः कालः प्रकृतिरेव च ।**
**नित्यानित्यं त्रिधा प्रोक्तम्** ॥ ७ ३४ ॥

पुराणाद्याः पौरुषेयग्रन्थाः एका विधा । कालः अपरा । प्रकृतिः अन्या ।

[ ३४ स.– × ]

[ ३४ के. विषयः– अस्वतन्त्रतत्त्व भाव-अचेतन-नित्यानित्यत्रैविध्ये–

अ) 'पुराणाद्याः..विधा' इत्यस्य व्याख्याने– 'आदि' पदसङ्ग्राह्यतावच्छेदकोक्तितया 'पौरुषेयग्रन्थाः' इत्यस्य अवतरणम् । ]

'पुराणाद्याः' इति 'आदि' शब्दसङ्ग्राह्यतावच्छेदकं धर्मम् आह पौरुषेयग्रन्था इति ।

[ ३४ वि. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये-

अ) 'नित्यानित्यं पुराणाद्या इति' इत्यस्य व्याख्याने उत्तरवाक्यावतारकतया अवतरणम् ।

आ) 'पुराणाद्याः..अन्या' इत्यस्य व्याख्याने– १) 'पुराणाद्याः विधा' इत्यस्य व्याख्याने– क) 'आद्य' शब्दप्रयोगकृत्यम् । ख) 'पौरुषेयग्रन्थाः'- इत्यस्य अर्थः । ग) अन्यथाप्रतीतिनिरासकतया 'एका विधा' इत्यस्य अवतरणम्, अर्थश्च २) 'अपरा' इत्यस्य अर्थः । ३) 'अन्या' इत्यस्य अर्थः । ४) 'इति' पदशेषः, तदर्थश्च ।]

उत्तरवाक्यम् अवतारयति **नित्यानित्यमिति** ।

विभागेन सह नित्यानित्यं निदर्शयति; इत्यर्थः ॥

'पुराणाद्याः' इत्यत्र प्रभृत्यर्थक 'आद्य' शब्दस्य असङ्कुचितवृत्तित्वेन, तदर्थस्य पुरुषायुषा अपि 'इदम्, इदम्' इति प्रत्येकं वक्तुम् अशक्यत्वात् (आह) 'पुराणाद्याः' इति ।,

१. का.टि. उद्धरणम् 'प्रकृतिश्च' इति ।

पौरुषेयग्रन्था:= पुरुषकृतक्रमवन्ति वाक्यानि इत्यर्थः; तेन पदावली-ज्ञानमात्रेण प्रयुक्तस्य शुकबालादिवाक्यस्य सङ्ग्रहः भवति; इति ज्ञेयम् ।,

'पुराणाद्याः, कालः, प्रकृतिः, नित्यानित्यं च त्रिधा'इति-अन्यथा-प्रतीतिनिरासाय आह[1] **एका विधा इति** । एकः भागः ।

कालः, अपरा= अपरः भागः ।

प्रकृतिः, अन्या विधा = अन्यः भागः ।

'इति'[2]इति शेषः । इति= अनेन प्रकारेण, नित्यानित्यं त्रिधा एव; इत्यर्थः ।

[ ३४ **मु.** विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये–

अ) 'नित्यानित्यं..पुराणाद्या इति'इत्यस्य व्याख्याने– १) चतुर्विध-शङ्कानिवारणसहित-अवतारकतया अवतरणम् । २) शेषश्च ।

आ) 'पुराणाद्याः..अन्या'इत्यस्य व्याख्याने– १) नवविधत्वप्रसङ्ग-निवारकतया अवतरणम् । २) अन्वयः । ३) भावश्च । ]

"उत्तरमूले 'पुराणाद्यादेः अनुवादेन नित्यानित्यत्वं विधीयते'इति प्रतीयते; तदयुक्तम्, पुराणादेः असिद्धत्वेन अनुवादायोगात् ।, न च 'नित्या-नित्यम् अनूद्यते'इति; तस्य पुराणादित्वविधाने 'त्रिधा'इत्यस्य वैयर्थ्यापत्तेः ।, न च 'त्रिधात्वं विधीयते'इति; संज्ञाविधानस्य प्रकरणाननुगुणत्वेन असङ्गत्या-पत्तेः ।, न च 'न इदं संज्ञाविधानम्, किन्तु विभागविधानम्'इति; तथाऽपि, 'पुराणाद्याः'इत्यादेः वैयर्थ्यात् ।;"इति-इमाः शङ्काः परिहरन् अवतारयति **नित्यानित्येति** । विभागेन[3]; 'सोदाहरणम्'इति शेषः ।

" 'पुराणाद्याः, कालः, प्रकृतिः'इत्येतद्रूपं नित्यानित्यं त्रिधा प्रोक्तम्" इतिव्याख्याने नवविधत्वप्रसङ्गात् आह **पुराणाद्या इति** । 'नित्यानित्यं त्रिधा प्रोक्तम्'इति आदौ योज्यम् । तत्र 'काः तिस्रो विधाः?'इति-आका-

१. आह, पुराणाद्या एका विधा एको भागः । २. अन्यो भागः इति शेषः ।
३. विभागं

ज्ञानिवृत्त्यै प्रवृत्तस्य 'पुराणाद्याः'इत्यादेः क्रमेण 'एका विधा'इत्यादिना अन्वये, न नवविधत्वप्रसङ्गः; इति भावः ।

[३४ का. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये— अ) 'नित्यानित्यं..पुराणाद्या इति'इत्यस्य व्याख्याने— 'विभागेनाह'-इत्यस्य अर्थः ।

आ) 'पुराणाद्याः..अन्या'इत्यस्य व्याख्याने— १) 'पुराणाद्याः ..विधा'इत्यस्य व्याख्याने— क) 'पौरुषेयग्रन्थाः'इत्यस्य— १. सप्रयोजनं समासार्थोक्तितया अवतरणम्; २. अर्थः; ३. तात्पर्यम्; ४. एतत्तात्पर्यस्य स्पष्टाकरणम्, वेदे एतत्पौरुषेयत्वाभावप्रदर्शनञ्च । ख) 'एका विधा'इत्यस्य व्याख्याने— १. प्रत्येकं त्रैविध्यप्रतीतिनिरासकतया अवतरणम्, २. पदार्थश्च २) 'प्रकृतिरन्या'इत्यस्य व्याख्याने- 'इति'शब्दाध्याहारः, तद्भावश्च । ]

**विभागेनाहेति** । विभागेन सह निदर्शयति ; इत्यर्थः ॥

'आद्य'शब्दसङ्ग्राह्याणाम् आनन्त्यात् समासार्थम् आह **पौरुषेयग्रन्था इति** । स्वतन्त्रवक्तृकाः इत्यर्थः; अन्यतात्पर्यानुपजीवितात्पर्यप्रयोज्याः इति यावत् । तथाहि येन पुरुषेण पूर्वतात्पर्यम् अनुपजीव्य स्वयम् एव यत्तात्पर्येण यद्वाक्यं प्रयुज्यते, तदर्थकतद्वाक्यं तदीयम् इति उच्यते । वेदस्य तु पूर्वतात्पर्यम् अनुसृत्य एव प्रयोगात्, न पौरुषेयत्वम्; इति अवधेयम् ।,

'पुराणादीनां प्रत्येकं त्रैविध्य'ान्वयप्रतीतिनिरासाय आह **एका विधेति** ।

एकप्रकारः ।

'अन्या'इति आदौ 'इति'शब्दः अध्याहार्यः । मूले 'प्रकृतिश्च'इत्यनन्तरम् 'इति'शब्दः अध्याहार्यः; इति भावः ॥

[ ३४ भ. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये— अ) 'पुराणाद्याः...विधा'इत्यस्य व्याख्याने— १) 'आद्य'पदसङ्ग्राह्यतावच्छेदकदर्शनसहितव्याख्यानत्वेन अवतरणम् । २) 'विधा'पदस्य उत्तरत्र उभयत्र अनुषङ्गप्रदर्शनञ्च । ]

---

१. एकापरा

'पुराणाद्याः' इति 'आद्य' पदसङ्ग्राह्यतावच्छेदकं दर्शयन् व्याख्याति **पुराणाद्या इति ।**

'अपरा', 'अन्या' इत्यत्र 'विधा' इत्यस्य अनुषङ्गः ।

[ ३५ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्य-त्रैविध्यप्रदर्शनपरीक्षायाम्–

१) प्रतिज्ञातप्रकारत्रैविध्यम् अदर्शयित्वैव कृतस्य वस्तु-निर्देशस्य दुष्टत्वशङ्का । २) तस्य अदोषत्वसमर्थने– क) एतस्य अदोषत्व-प्रतिज्ञा । ख) नित्यानित्यस्य प्रकृतोपयुक्तलक्षणस्वरूपप्रकटनम् । ग) तस्य त्रैविध्यप्रतिज्ञा, तद्विधात्रयप्रदर्शनञ्च । घ) पूर्वप्रदर्शितवस्तुत्रयेण एतद्विधा-त्रयस्य सम्बन्धश्च । ]

**ननु च[1] 'त्रिधा' इति प्रकारत्रैविध्यम् उक्तम्; न च अत्र कश्चित् प्रकारः दर्शितः, किन्तु वस्तुनिर्देश एव कृतः?**

**न एषः दोषः ॥ यत् न सर्वथा कूटस्थम्, नापि अनित्यम् एव; तत् उच्यते 'नित्यानित्यम्' इति । तस्य तिस्रः विधाः सम्भवन्ति– १. उत्पत्तिमत्त्वे सति विनाशाभावः, २. एकदेशः उत्पत्ति-विनाशौ एकदेशिनः तदभावः, ३. स्वरूपेण उत्पत्त्याद्यभावेऽपि अव-स्थाऽऽगमापायवत्त्वम् च; इति । तदेतत् 'विधात्रयम् उक्तवस्तुत्रये अस्ति;' इति तस्यैव ग्रहणं कृतम् ।**

[ ३५ स. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये–

अ) नित्यानित्यत्रैविध्यप्रदर्शनपरीक्षायाम्– १) 'ननु..कृतः' इत्यस्य व्याख्याने– 'प्रकारत्रैविध्यमुक्तम्' इत्यस्य बीजोक्तिरूपो भावः । २) 'न एष.. कृतम्' इत्यस्य व्याख्याने– क) 'यत्..नित्यानित्यम्' इत्यस्य व्याख्याने– १. इतरव्यावृत्तत्वेन नित्यानित्यत्वनिर्वचनतया अवतरणम्; २ एतदर्थविवरणे– क. कूटस्थत्वस्य अवधिविधुरत्वार्थकत्वम्, ख. अवधेः अनेकविधता, ग. तदनुसारेण च नित्यत्व-अनित्यत्व-नित्यानित्यत्वानाम् विवक्षितार्थप्रदर्शनम् ।

---

१. वि.टि. 'ननु त्रिधेति' इति प्रतीकम् ।

ख) 'उत्पत्तिमत्त्वे सति विनाशाभावः' इत्यस्याः विधायाः 'विस्तरेणोपपादन'-स्थलप्रदर्शनञ्च ]

**प्रकारत्रैविध्यमिति** । 'धाल्'प्रत्ययस्य प्रकारार्थकत्वात्; इति भावः ॥

नित्यानित्यत्वम् इतरव्यावृत्तत्वेन निर्वक्ति **यन्न सर्वथेति** ।,

अत्र कूटस्थत्वम्= अवधिविधुरत्वम् । अवधिः तावत् द्विविधः— पूर्वः उत्तरः च इति; द्विविधः अपि 'स्वरूपेण, स्वाभिन्नांशैः' इति अनेकविधः ॥ **तथाच** स्वरूपेण स्वाभिन्नांशैः च[1] पूर्वेण उत्तरेण च अवधिविधुरं यत्, तत् नित्यानित्यतया विवक्षितम्; तत्र आद्यं यत् न भवति — स्वरूपेणैव अवधिद्वयोपेतं यत्, तत् अनित्यत्वेन विवक्षितम्; यत् च एवं न भवति, तत् नित्यानित्यम् उच्यते; इत्यर्थः ।

**उत्पत्तिमत्त्वे सति विनाशाभाव इति** । इयं च विधा पुराणादिविषया विष्णुतत्त्वनिर्णयादौ विस्तरेण उपपादिता द्रष्टव्या ।

[ ३५ **क.** विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये -

अ) नित्यानित्यत्रैविध्यप्रदर्शनपरीक्षायाम्— १) 'ननु..कृतः' इत्यस्य व्याख्याने - 'प्रकारत्रैविध्यम्' इत्यस्य बीजोक्तिरूपो भावः । २) 'नैष.. कृतम्' इत्यस्य व्याख्याने— क) 'यन्न..नित्यानित्यम्' इत्यस्य व्याख्याने— १. प्रकारद्वयेन अवतरणे- क. सप्रयोजन-समान्यविभज्यतावच्छेदक दर्शकतया अवतरणम्, ख. प्रकारान्तरेण नित्य नित्यस्य नित्यानित्यत्वाभ्यां व्यावृत्तिप्रदर्शकतया अवतरणम्; २. एतदर्थविवरणे— क. कूटस्थत्वस्य अवधिविधुरार्थकत्वम्, ख. अवधेः अनेकविधता, ग. तदनुसारेण नित्यत्व-अनित्यत्व-नित्यानित्यत्वानाम् विवक्षितार्थप्रदर्शनम् । ख) 'उत्पत्तिमत्त्वे सति विनाशाभावः'- इत्यस्याः विधायाः उपपादनस्थलप्रदर्शनञ्च । ]

**प्रकारत्रैविध्यमिति** । 'धाल्'प्रत्ययस्य प्रकारार्थकत्वात्; इति भावः ।

विभज्यतावच्छेदकविशेषाभावार्थं सामान्यविभज्यतावच्छेदकं दर्शयति **यन्न सर्वथेति** ॥ यद्वा नित्यानित्यं यथा नित्यानित्याभ्यां व्यावर्तते, तथा व्याचष्टे **यन्नेति** ।,

---

१. स्वाभिन्नांशादेश्च पूर्वेणोत्तरेण वा' इत्येकत्र ।

कूटस्थत्वं हि अवधिविधुरत्वम्। अवधिश्च पूर्वोत्तरभेदात् द्विविधः; द्विविधोऽपि स्वरूपतः अंशतश्च इति अनेकविधः। ततश्च स्वरूपतः स्वांशतश्च पूर्वोत्तराभ्याम् अवधिविशेषाभ्यां रहितं यत्, तत् नित्यतया विवक्षितम्; तत् यत् न भवति– स्वरूपेणैव अवधिद्वयोपेतं यत् तत् अनित्यत्वेन विवक्षितम्; तत् च यत् न भवति, तत् नित्यानित्यम्; इत्यर्थः।

**उत्पत्तिमत्त्वे सति विनाशाभाव इति**। पुराणादेः एवंरूपता च तत्त्वनिर्णयटीकादौ उपपादितप्रकारेण द्रष्टव्या।

[ ३५ **वि.** विषय – अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रै-विध्ये–
अ) नित्यानित्यत्रैविध्यप्रदर्शनपरीक्षायाम्– १) 'ननु..कृतः' इत्यस्य व्याख्याने– क) मूलकारस्य न्यूनता'शङ्कात्वेन अवतरणम्। ख) पदार्थश्च। २) 'नैष..कृतम्' इत्यस्य व्याख्याने क) तद्दोषपरिहारकतया अवतरणम्। ख) 'नैष..दोषः' इत्यस्य पदार्थः। ग) 'यत्र..कृतम्' इत्यस्य व्याख्याने– १. उक्तदोषभावोपपादकतया अवतरणम्; २. 'यत्र...नित्यानित्यम्' इत्यस्य व्याख्याने क पदार्थः; ख. दलकृत्ये च– १- सत्यन्तविशेषणस्य कृत्यम्, २- तदतिरिक्तविशेषणस्य च कृत्यम्; ३. 'तस्य..सम्भवन्ति' इत्यस्य व्याख्याने– पदार्थः; ४. 'उत्पत्तिमत्त्वे..चेति' इत्यस्य व्याख्याने– क. 'नित्यानित्यस्य प्रकारत्रैविध्य' जिज्ञासापूर्वकतया अवतरणम्, ख. 'विनाशाभावः' इत्यस्य अर्थः ग. 'एकदेशे..तदभावः' इत्यस्य पदार्थः, घ. 'स्वरूपेण..च' इत्यस्य पदार्थः, ङ) 'इति' पदस्य अन्वयश्च; ५. 'तदेतत् कृतम्' इत्यस्य व्याख्याने– क. एतावदुक्तार्थस्य प्रकृतसम्बन्धोक्तितया अवतरणम्, ख. पदार्थश्च। ]

मूलकारस्य न्यूनताम् आशङ्कते **ननु त्रिधेति**। 'त्रिधा', इति= अनेन; प्रकारत्रैविध्यम्= प्रकाराणाम्– नित्यानित्यस्य अवान्तरविशेषाणाम्, त्रिविधत्वम् उक्तम्; इत्यर्थः।, अत्र- नित्यानित्येषु, कश्चित्, प्रकारः= व्यावर्तकधर्मः, न च दर्शितः = आचार्यैः न निरूपितः; किन्तु, वस्तुनः= धर्मिणः, निर्देशः एव = उद्देशः एव, कृतः; इत्यर्थः॥

१. पुराणादेस्तत्त्वनिर्णयावुपपादितं प्रकारेण।   २. प्रकारेण

परिहरति **नैष दोष इति** ।;

एषः— प्रकारत्रयानुक्तिरूपः, दोषः, नास्ति; इत्यर्थः ।;

दोषाभावम् उपपादयति **यदिति** ।;

सर्वथा= सर्वेण प्रकारेण, कूटस्थम्= कूटस्थनित्यम्, यत् तत् न भवति, अनित्यम् एव= उत्पत्तिमत्त्वे सति विनाशवत् एव, नापि भवति; सत् वस्तु नित्यानित्यम् उच्यते; इत्यर्थः । कूटस्थनित्यत्व अनित्यत्वयोः मध्ये कूटस्थनित्यत्वमात्राधिकरणभिन्नत्वे सति अनित्यत्वमात्राधिकरणभिन्नवस्तुत्वं नित्यानित्यत्वम्; इति उक्तं भवति ॥ अत्र अनित्यत्वमात्राधिकरणभिन्ने अव्याकृत-आकाशादौ कूटस्थनित्ये अतिव्याप्तिपरिहाराय सत्यन्तं विशेषणम् । कूटस्थनित्यत्वमात्राधिकरणभिन्ने घटादौ अनित्ये अतिव्याप्तिनिरासाय तदतिरिक्तं विशेषणम् ।,

**तस्येति** । नित्यानित्यस्य, तिस्रः, विधाः= प्रकाराः, भवन्ति= सन्ति; इत्यर्थः ।,

'किं तत् प्रकारत्रयम् ?' इतिजिज्ञासायाम् आह '**उत्पत्तिमत्त्वे सतीति** ॥ ॥ विनाशाभावः= विनाशरहितत्वम् इत्यर्थः ॥ **एकदेशैरिति** । निमेषाद्यंशरूपेण उत्पत्तिविनाशौ वर्तेते, एकदेशिनः— कालप्रवाहरूप-अंशिनः तयो— उत्पत्तिविनाशयोः, अभावः; इत्यर्थः ॥ **स्वरूपेणेति** । उपादानस्वरूपेण उत्पत्तिविनाशयोः अभावे सति; अवस्थायाः= उपादेयस्य, उत्पत्तिविनाशित्वं च; इत्यर्थः ॥ ॥ इति तिस्रः विधाः सम्भवन्ति; इति अन्वयः ।;

अस्तु एवम्; किं प्रकृते ? इत्यत आह **तदिति** ।, पूर्वोक्तम्, एतत्— अधुना उक्तम्, विधात्रयम्= प्रकारत्रयम्, उक्तवस्तुत्रये, क्रमेण, अस्ति, इति, अभिप्रेत्य, तस्यैव— धर्मित्रयस्यैव, ग्रहणम्= कीर्तनम्, आचार्यैः, कृतम्; इत्यर्थः ।

[ ३५ मु. विषयः– अस्वतन्त्रतत्त्व भाव-अचेतन-नित्यानित्यत्रैविध्ये– अ) नित्यानित्यत्रैविध्यप्रदर्शनपरीक्षायाम्– १) 'ननु..कृतः'इत्यस्य व्याख्याने– त्रैविध्यनिरूपणक्रमभङ्गशङ्कात्वेन अवतरणम् । २) 'नैष..कृतम्' इत्यस्य व्याख्याने– क) क्रमान्तरानुसरणप्रयोजनोक्तिपूर्वकम् ऊहप्रकारदर्शनेन पूर्वपक्षोक्तदोषपरिहारकतया अवतरणम् । ख) 'यन्न..नित्यानित्यम्'इत्यस्य अर्थविवरणे– १. कूटस्थत्वस्य अवधिविधुरार्थकत्वम्; २. अवधेः अनेकविधत्वम्, ३. एतदनुसारेण नित्यत्व-अनित्यत्व-नित्यानित्यत्वानाम् विवक्षितार्थकथनम् । ग) 'उत्पत्तिमत्त्वे..चेति'इत्यस्य व्याख्याने– १. 'उत्पत्ति.. विनाशाभावः'इत्यस्य व्याख्याने– क. अस्य नित्यानित्यत्वावान्तरप्रकारत्वसमर्थनम्; ख. पुराणादेः नित्यानित्यत्वभङ्गनिवारणे– १- अस्मदादि-ईश्वर-उभयबुद्धिगतस्यापि पुराणादेः नित्यानित्यत्वभङ्गप्रदर्शनम्, २- ईश्वरबुद्धिगतस्यैव तस्य तथात्वोपपादनम्; २. 'एकदेशे..तदभावः'इत्यस्य व्याख्याने– क. दलद्वयस्य प्रयोजनम्; ख. 'नित्यानित्यत्व'संज्ञायाः नित्यानित्यसादृश्यनिमित्तकत्वनिषेधपूर्वकम् नित्यानित्यलक्षणाक्रान्ततात्प्रयुक्तत्वम्, तल्लक्षणाक्रान्ततात्प्रदर्शनञ्च; ३. 'स्वरूपेण..चेति'इत्यस्य व्याख्याने– क. दलद्वयप्रयोजनम्; ख. 'अवस्थागमापायित्वञ्च'इत्यस्य अर्थः; ग. जडप्रकृतौ लक्षणसमन्वयश्च । ]

उत्सर्गतः उदाहरणानवच्छेदकस्य विशेषोद्देशावच्छेदकत्वात् तादृशप्रकाराऽऽक्रान्तविशेषोद्देशम् अकृत्वा, उदाहरणप्रदर्शनात् न्यूनत्वं स्यात्'इत्यभिप्रेत्य शङ्कते **नन्विति** ॥

"सत्यम्; 'उदाहरणावच्छेदकोऽऽक्रान्तविशेषोद्देशावच्छेदकज्ञाने शिष्यैः सावधानैः भाव्यम्'इत्यभिप्रायेण आचार्यैः त्यक्तत्वात्, अवश्यवक्तव्यस्य प्रयोजनं विना अनुक्ते न्यूनत्वात्, प्रकृते च शिष्याणां सावधानत्वसञ्ज्ञापनस्यैव प्रयोजनत्वात्; न न्यूनता;" इति-अभिप्रेत्य; ऊहप्रकारदर्शनेन पूर्वपक्षोक्तं दोषं परिहरति **नैष दोष** इत्यादिना ।

अत्र कूटस्थत्वम्= अवधिविधुरत्वम्; अवधिश्च द्विविधः, पूर्वः उत्तरश्च इति; द्विविधोऽपि 'स्वरूपेण स्वाभिन्नांशैश्च'इति अनेकविधः । **तथाच**

१. दस्य

१. कानाक्रान्त

स्वरूपेण स्वाभिन्नांशादेश्च पूर्वेण उत्तरेण वा अवधिविधुरं यत्,(तत्)नित्यतया विवक्षितम्; तत् यत् न भवति = स्वरूपेण स्वांशादेश्च अवधिद्वयोपेतं यत्, (तत्) अनित्यत्वेन विवक्षितम्; तत् यत् न भवति, तत् 'नित्यानित्यम्' उच्यते; इत्यर्थः ।;

उत्पत्तिमत्त्वे सतीति । एकावधिविधुरत्वेऽपि अवधिद्वयविधुरस्वाभावात् न सर्वथा कूटस्थत्वाभावः, एकावधित्वेऽपि अवधिद्वयरहितत्वात् न अनित्यत्वाभावः, अतः अयं नित्यानित्यत्व-अवान्तरप्रकारः भवति ।,

ननु अस्मदादिबुद्धिगतस्य वा ईश्वरबुद्धिगतस्य वा पुराणादेः उत्पत्तिमत्त्वे सति विनाशाभावः ? नाद्यः; अस्मदादिबुद्धेः उत्पत्तेः इव विनाशस्यापि सद्भावेन; तद्गतपुराणस्य अतादृशत्वात् । न द्वितीयः, ईश्वरबुद्धिगतस्य विनाशाभाव इव उत्पत्त्यभावस्यापि वक्तुम् उचितत्वात् ।, तथाहि— ईश्वरः यत्पुराणादिकम् अस्मिन्कल्पे कृतवान्, तत् पूर्वकल्पे ज्ञातवान् ? न वा ? 'न' इतिपक्षे त्रिकालदर्शित्वप्रमाप्रतिपादकप्रमाणनिरोधः; आद्ये वर्णक्रमविशेषोपाधिभूतक्रमवद्बुद्धि विना तज्ज्ञानस्य अन्यस्य अभावात् तद्बुद्धिसत्त्वे पुराणस्यैव सत्त्वं प्राप्तम्, एवं पूर्वं पूर्वतरम् इति अनादित्वम् एव सिद्धम्; इति अत्र उच्यते—

"द्वितीयपक्षः एव अङ्गीक्रियते । न च तत्रोक्तदोषः; उपदिश्यमानविशिष्टस्य पुराणस्य लक्ष्म्यादीन् प्रति कदाऽपि अनुपदिष्टस्य प्रतिकल्पम् उपदिश्यमानत्वेन, विशेषणजप्रयुक्तजन्माभिप्रायेण पुराणस्य उत्पत्त्यङ्गीकारात् ।, न च एवं विशेषणनाशेन विशिष्टनाशः शङ्क्यः; कदाऽपि अनुपदिष्टस्य कदाचित् उपदेशानन्तरम् अनन्तकल्पं लक्ष्म्यादीन् कांश्चन प्रति उपदेशाङ्गीकारे बाधकाभावेन विशेषणनाशाभावात् ।, न च 'एवं सति पुराणान्तरोपदेशः कुतः ?' इति; पुराणप्रश्नः चेत् 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु' इत्यादिकम्, प्रयोजनप्रश्नः चेत् प्रेक्षावत्कृतत्वेन प्रयोजनसामान्यसिद्धेः, विशेषः तु न अस्माभिः ज्ञातुं शक्यते; किञ्च प्रयोजनाभावे न प्रमितवस्त्वपलापः कर्तुं शक्यते ।" इति ।;

---

३. वि.त.नि.पृ.२५५ इत्यत्रोदाहृतम् ब्रह्माण्डवाक्यम् ।

**एकदेशैरिति ।** स्वरूपेण साक्षात् स्वांशादेः च उत्पत्तिविनाशवत्त्वे, मुख्य-अनित्यत्वं स्यात्; न च एवम्, यतः एकदेशैः उत्पत्तिविनाशौ; इति ।, स्वरूपेण स्वांशादेः च उत्पत्तिविनाशाभावे, मुख्यनित्यत्वं स्यात्; न च एवम्, एकदेशिनः तदभावः ।, अतः नित्यानित्यत्व-अवान्तरभेदत्वोपपत्तिः; इति ।,

वस्तुतस्तु— न हि नित्यानित्यसादृश्येन, 'नित्यानित्यत्व'संज्ञा इति उक्तम्; किन्तु उक्तनित्यानित्यत्वलक्षणाऽऽक्रान्तत्वेन, नित्यानित्यत्वम् इति । अस्ति एतत् काले; क्षणादिलक्षणस्य एकदेशेन उत्पत्तिविनाशवत्त्वात्, प्रवाहरूप-एकदेशिनः तदभावात् ।, (इति) 'यन्न सर्वथा कूटस्थं नापि अनित्यमेव' इतिलक्षणानुगतिः; इति ।;

**स्वरूपेणेति ।।** मुख्य-अनित्यत्व-अभावोपपादनाय 'स्वरूपेण उत्पत्त्याद्यभावेऽपि' इति । मुख्य-नित्यत्व-अभावोपपादनाय 'अवस्थागमापायित्वं च' इति; विकारागमापायित्वं च, इत्यर्थः ।,

एतच्च जडप्रकृतौ विज्ञेयम्; तस्याः स्वरूपेण उत्पत्त्याद्यभावेऽपि, महत्त्वादिविकारागमापायित्वात्; इति ।

[ ३५ **का.** विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्ये–

अ) नित्यानित्यत्रैविध्यप्रदर्शनपरीक्षायाम्– १) 'ननु..कृतः' इत्यस्य व्याख्याने– क) 'मूलस्य न्यूनता' शङ्कात्वेन अवतरणम् । ख) 'किन्तु..कृतः' इत्यस्य व्याख्याने– १. न्यूनताऽसिद्धिनिवारकतया अवतरणम्, १. 'वस्तुनिर्देश एव कृतः' इत्यस्य आशयश्च । २) 'नैष..कृतम्' इत्यस्य व्याख्याने– क) उक्तन्यूनतापरिहारक-आशयेन तच्छङ्कासमाधायकतया अवतरणम् । ख) 'यन्न..नित्यानित्यमिति' इत्यस्य व्याख्याने– १. सप्रयोजन-नित्यानित्यत्वस्वरूपनिर्धारकतया अवतरणम्; २. 'सर्वथा कूटस्थम्' इत्यस्य– अर्थः, तात्पर्यञ्च; ३. 'अनित्यमेव' इत्यस्य– अर्थः, भावश्च; ४. अभिप्रायश्च; ५. नित्यानित्यस्वरूपविवेचने– क. तत्तद्बुद्धिक्रमविशिष्टवेदपुराणादेः प्रातिस्विकरूपेण-अनित्यत्वाङ्गीकारः, ख. नित्यत्वादेः साङ्कर्यस्य अदोषत्वम्, ग. असङ्कीर्णो-

दाहरणसत्त्वात् विभागोपपत्तिः, घ. कालक्षणानाम् अनित्येऽन्तर्भावस्य इष्टता विपक्षे-बाधकदर्शनसहिता, ङ. निष्कृष्टार्थः, च. नित्यस्यापि आकाशादेः रूप-भेदेन त्रिविधत्वञ्च । ग) 'तस्य..क्तम्'इत्यस्य व्याख्याने- १. 'उत्पत्तिमत्त्वे सति विनाशाभावः'इत्यस्य व्याख्याने- क.'दलद्वयकृत्यम्, ख. निष्कर्षः, ग. उक्तार्थबलेन एतद्विधायां पुराणादेरसङ्ग्रहः सोपपत्तिकः; २. 'एकदेशैः..तद-भावः'इत्यस्य व्याख्याने- क. अर्थः, ख. दलद्वयकृत्यञ्च; ३ 'स्वरूपेण.. चेति'इत्यस्य व्याख्याने- क. दलद्वयकृत्यम्; ४. 'भावरूप-अविद्यादीनाम् एतत्त्रयानन्तर्भाव'प्रयुक्त-त्रैविध्यानुपपत्तिशङ्का, 'उत्पत्ति-विनाश'पदयोः अव-धिमात्रोपलक्षकत्वेन तन्निरासोपपादनञ्च । ]

मूलस्य न्यूनताम् आशङ्कते **ननु चेति** ।

ननु पौरुषेयवाक्यत्व-कालत्व-प्रकृतित्व-रूपप्रकाराणां दर्शितत्वात् कथं न्यूनता ? इत्यत आह **किन्त्विति** ।,

**वस्तुनिर्देश एवेति** । यथा हि 'अनित्यं द्विविधम्'इत्युक्ते 'तत् कथम् ?'इत्याकाङ्क्षायाम् अनित्यत्वोपपादक-संसृष्टत्व-असंसृष्टत्व-रूप-प्रकारद्वयं दर्शितम्, तथा अत्र नित्यानित्यत्वोपपादकप्रकारानुक्तेः न्यूनता; इति आशयः ॥

विवक्षितप्रकाराणाम् अनुक्तौ अपि उदाहरणविशेषग्रहणेन सूचित-त्वात् न न्यूनता'इति-आशयेन समाधत्ते **नैष दोष इति** ।

नित्यानित्यत्वस्वरूपाज्ञाने तदुपपादकत्वस्य ज्ञातुम् अशक्यत्वात्, तदेव आदौ निर्धारयति **यन्नेति** ।,

सर्वथा कूटस्थम् = धर्मिरूपेण कूटस्थम्, पूर्वोक्तनित्यत्वविशिष्टम् इति यावत् ॥ **अनित्यमिति**[2] । केवल-अनित्यम् इत्यर्थः । स्वरूपेण आद्यन्तोभयवत्; इति भावः ॥ एतेन 'नित्यानित्यव्यावृत्तत्वम्'नित्यानित्य-स्वरूपम् उक्तं[3] भवति ।;

---

१. अग्रे त.सं. श्लो. ८,९. २. अयं विषयः क्वचिन्नास्ति । ग्रन्थ-चतुष्टये च 'आद्यन्तोभयवदिति भावः । नित्यानित्यमिति । एतेन..'इति वर्तते । ३. 'अप्युक्तं'इति ग्रन्थचतुष्टये । 'इत्युक्तं'इत्येकत्र ।

न च एवम् तत्तद्बुद्धिक्रमविशिष्टवर्णात्मकवेदपुराणादेः प्रातिस्विक-रूपेण अनित्यत्वाऽऽपत्तिः; इष्टत्वात्, वेदादेः उक्तसामान्यरूपेण एव नित्यत्वाभ्युपगमात् ।,

न च एवम् नित्यत्वादेः साङ्कर्यप्रसङ्गः; तस्य अदोषत्वात् ।,

न च एवम् विभागानुपपत्तिः; वर्णप्रकृतिमहदादि असङ्कीर्ण-उदाहरणान्तरसत्त्वेन तदुपपत्तेः ।,

एतेन 'कालक्षणानाम् अनित्ये अन्तर्भावाऽऽपत्तिः' इत्यपि समाहितम्, इष्टापत्तेः; अन्यथा कार्यप्रवाहस्य नित्यतया कार्यमात्रस्यापि अनित्यत्वानुपपत्तेः ।;

तथाच 'यस्य यद्रूपेण पूर्वोक्तनित्यत्वानित्यत्वे न, तस्य तद्रूपेण नित्यानित्यत्वम्;' इति निष्कर्षः ।,

एवञ्च नित्यस्यापि आकाशादेः 'नित्यविशिष्टरूपेण नित्यत्वम्, अनित्यविशिष्टरूपेण अनित्यत्वम्, नित्यानित्यविशिष्टरूपेण नित्यानित्यत्वम्;'-इति-अवधेयम् ।

**उत्पत्तिमत्त्वे सतीति** । अत्र नित्यव्यावृत्तये सत्यन्तम्; अनित्यव्यावृत्तये च विशेष्यभागः । तथाच 'यद्रूपेण उत्पत्तिमत्त्वे सति विनाशाभावः, तद्रूपत्वम्;' इति निष्कर्षः ।,

तेन पुराणादेः तत्तद्बुद्धिक्रमविशिष्टरूपेण विनाशित्वेऽपि न असङ्ग्रहः ।।, सामान्यतः क्रमिकबुद्धिविषयत्वविशिष्टरूपेण विनाशाभावात्, तथाविध-ईश्वरबुद्धेः अविनाशात् ।, उत्पत्तिमत्त्वे तु प्रमाणं वक्ष्यते

**एकदेश इति** । प्रवाहरूपेण उत्पत्त्यादिमत्त्वे सति स्वरूपेण तदभावत्वम्; इत्यर्थः ।। अत्रापि नित्यव्यावृत्तये सत्यन्तम् । सादिप्रवाहवारणाय विशेष्यांशः ।

**स्वरूपेणेति** । अत्र कपालाद्यनित्यवारणाय सत्यन्तम् । नित्यव्यावृत्तये विशेष्यभागः परिणामित्वार्थकः ।

ननु एतद्धटसंयोगप्रागभावविशिष्टआकाशादेः भावरूप-अज्ञानस्य च केवलनित्यत्वाद्यभावात् नित्यानित्यत्वं तावत् सिद्धम्, न च उक्तप्रकारत्रये अन्तर्भावः अस्ति; एवम् अतीतकालप्रवाहस्य ध्वंसप्रागभावप्रवाहयोः च तदन्तर्भावात्; नित्यानित्यस्य त्रैविध्यानुपपत्तिः ॥ न एष दोषः, 'उत्पत्ति-विनाश'पदयोः अवधिमात्रोपलक्षकत्वात्; मूलोक्त-उदाहरणानुसारेण एव 'उत्पत्ति-विनाश'पदोपादानात् । **तथाच** यत्किञ्चिदवधिमत्त्वे सति यत्किञ्चिदवधिशून्यत्वम्, प्रवाहादिरूपेण अवधिमत्त्वे सति स्वरूपेण अवधिशून्यत्वम्, स्वरूपेण अवधिशून्यत्वे सति परिणामित्वं च, विभागजनकतया विवक्षितम् ।' उक्त-उदाहरणानां च यथासम्भवम् एतेषु एव अन्तर्भावः ।; अत एव तृतीयप्रकारे 'उत्पत्त्यभावनिवेशेन एव उपपत्तेः, 'आदि'पदवैयर्थ्यम्'इति-अपास्तम्; उत्पत्तिविनाशयोः पृथक् अनुपादानेन वैयर्थ्यानवकाशात् ।

[ ३५ भ. विषयः– अस्वतन्त्रतत्त्व भाव-अचेतन-नित्यानित्यत्रैविध्ये– 'नित्यानित्यत्रैविध्यपरिक्षायाम्– १) 'नैष..कृतम्'इत्यस्य व्याख्याने– क) 'यन्न ..नित्यानित्यम्'इत्यस्य व्याख्याने– १. पदार्थः । ख) 'तस्य..चेति' इत्यस्य व्याख्याने– १. उक्तलक्षणत्रयविवेकः; २. अवस्थाऽऽगमापायवत्त्वम्' इत्यस्य अर्थश्च । 'तदेतत्..कृतम्'इत्यस्य व्याख्याने- एतदर्थोपपादनञ्च । ]

**यन्न सर्वथा कूटस्थमिति** ॥ सर्वथा विकारशून्यम्; इत्यर्थः । अनित्यमेवेति– सर्वथा ध्वंसप्रतियोगि; इत्यर्थः ।

तत्र आद्यायां विधायाम् 'उत्पत्तिमत्त्वे सति'इति कूटस्थत्वाभावोपपादनम्, उत्पत्तेः एव विकारत्वात्; 'विनाशाभावः'इति अनित्यत्वोपपादनम् ।

---

४. पत्तेः ५. उपादानेन

द्वितीयायाम् 'एकदेशे उत्पत्तिः, एकदेशिनः तदभावः'इति सर्वथा कूटस्थताभावोपपादनम्; 'एकदेशे विनाशः, एकदेशिनः तदभावः'इति सर्वथा अनित्यत्वाभावोपपादनम् । तृतीयायाम् अपि 'स्वरूपेण उत्त्यभावेऽपि अवस्थाऽऽगमवत्त्वम्'इति सर्वथाकूटस्थत्वनिषेधः; 'स्वरूपेण विनाशाभावेऽपि अवस्थाऽऽपायवत्त्वम्'इति सर्वथा नित्यत्वनिषेधः; इति विवेको द्रष्टव्यः ।,

**अवस्थाऽऽगमापायवत्त्वमिति** । कार्यरूपेण जनिविनाशवत्त्वम् इत्यर्थः ।

**तदेतद्विधात्रयमुक्तवस्तुत्रयेऽस्तीति** । क्रमेण अस्ति; इत्यर्थः । तथाहि— पौरुषेयग्रन्थाः हि पुरुषमतिजन्य-आनुपूर्वीकत्वात् उत्पत्तिमन्तः; उत्पत्त्यनन्तरं च, सर्वज्ञत्वात् ईश्वरस्य तद्बुद्धौ वेदस्य इव उत्तरावधिशून्यतया प्रतीयमानत्वेन, विनाशशून्याश्च ।, कालस्य क्षणलवादयः एकदेशा उत्पत्तिविनाशवन्तः; एकदेशीयकालप्रवाहः तु तद्रहितः, 'कालप्रवाह एवैको नित्यो न तु विशेषवान्'इत्युक्तेः ।, प्रकृतेः तु स्वरूपतःउत्पत्तिविनाशौ न स्तः एव; महदादिविकारावस्थायां तु तौ स्तः एव; इति ।[२]

---

१. एवैके

२. अत्र ग्रन्थान्तरे सर्वथा भिन्न एव पाठः दृश्यते तथाहि—

"नित्यानित्यसान्यलक्षणमाह **यन्न सर्वथेति** ।। तथाच केवलनित्यभिन्नत्वे सति केवल-अनित्यभिन्नत्वम् इत्यर्थः । तत्र नित्ये अतिव्याप्तिनिरासाय सत्यन्तम् । अनित्ये तन्निरासाय उत्तरदलम् । असम्भववारणाय उभयत्र 'केवल'पदम्; इति बोध्यम् ।

**तदेतद्विधात्रयमित्यादि** ।। तत्र पुराणादिषु पुरुषमतिजन्यानुपूर्वीकत्वात् उत्पत्तिमत्त्वम्; उत्पत्यनन्तरञ्च, सर्वज्ञत्वात् ईश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्, विनाशाभावश्च । काले एकदेशे क्षणलवादौ उत्पत्तिविनाशौ, एकदेशिनः कालप्रवाहस्य तदभावः । प्रकृतौ च स्वरूपेण उत्पत्त्याद्यभावेऽपि गुणवैशम्यरूप-अवस्थाऽऽगमापायवत्त्वम् अस्ति; इत्यर्थः ।"इति ।

[ ३६ टी. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्यपरीक्षायाम्-

अ) दलकृत्यत्वेन- १) विधान्तरनिषेधरूपम् 'एव'पदकृत्यम् २) 'प्रोक्तम्'इत्यस्य प्रकारद्वयेन व्याख्याने क) 'एव'कारोक्तार्थोपपादकतया अवतरणम्, उपपादनञ्च । ख) प्रकारान्तरेण व्याख्याने आगमपरिग्रहार्थकतया अवतरणम्, एतदर्थबलात् प्रयोजनान्तरसिद्धिश्च । ]

'ननु एवं सति अवान्तरभेदैः विधान्तरम् उत्प्रेक्षितुं शक्यम'इत्यतः 'एव'इति उक्तम् ।

तत्र उपपादकाकाङ्क्षायाम् 'प्रोक्तम्'इति आह ।- शास्त्रीयविधानाम् अत्रैव अन्तर्भावः, अन्यासाम् अनादरणीयत्वञ्च; इति ॥ अथवा 'पुराणानि तदर्थानि','सर्वे निमेषा जज्ञिरे','विकारोऽव्यक्तजन्म हि'इत्यादि आगमपरिग्रहार्थम् 'प्रोक्तम् इति उक्तम् । अत एव विरोधः अपि परिहृतः ।

[ ३६ स. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन नित्यानित्यत्रैविध्यपरीक्षायाम्-दलकृत्यनिरूपणे-

अ) 'ननु..एवेत्युक्तम्'इत्यस्य व्याख्याने- विधान्तरशङ्कात्वेन अवतरणम् ॥ आ) 'अत्र..परिहृतः'इत्यस्य व्याख्याने- १. 'अत्र'पदार्थः । २) 'अथवा परिहृतः'इत्यस्य व्याख्याने- क) 'अथवा प्रोक्तमित्युक्तम्'इत्यस्य व्याख्याने- १. "'प्रोक्तम्'इतिपदस्य 'पुराणादेः अनुपपत्ति'शङ्कापरिहारकत्वमपि"इत्यर्थकतया अवतरणम्, २. 'पुराणानि तदर्थानि'इत्यस्य अपेक्षितउत्तरभागप्रदर्शनम् । ख) 'अतः..परिहृतः'इत्यस्य व्याख्याने- पदार्थः । ]

ननु "भावरूप-अज्ञाने- उत्पत्तिमत्त्वे सति विनाशाभावेऽपि उत्पत्त्यभावलक्षणम्, वेदे च- उत्पत्तिमत्त्वे सति विनाशाभावेऽपि क्रमव्यत्यासाभावरूपं नित्यानित्यं विधान्तरम्, 'मूलप्रकृतिः अविकृतिः, महदाद्याः प्रकृतिविकृतयः सप्त'इति साङ्ख्योक्तविधान्तरञ्च;"इत्यपि वक्तुं शक्यम्; इत्याशङ्कते नन्वेवमिति ॥

---

१. स.टि.- 'अत्रेति'इति । २. वि.त.नि.पृ.२५५ इत्यत्रस्थब्रह्माण्डवाक्यम् ।

**अत्रेति** । नित्यानित्यविधाम् इत्यर्थः ।

'स्वमते वर्णानां नित्यविभुत्वात्, कालस्य वैशेषिकादिभिः नित्य-विभुत्वाङ्गीकारात्, मूलप्रकृतेः अपि साङ्ख्यैः अनादिनित्यत्वाङ्गीकारात्; कथं पुराणादेः उत्पत्तिः ?'इत्याशङ्कापरिहारत्वेन अपि 'प्रोक्तम्'इत्येनत् व्याचष्टे **अथवेति** ।,

**पुराणानि तदर्थानीति** । 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानि'इत्यादि-आगमवाक्यस्य प्रतीकग्रहणम् एतत्; इति ज्ञेयम् ।;

**अत एवेति** । नित्यानित्यस्य आगमसिद्धत्वात्, एव; नित्यानित्या-नङ्गीकारहेतुः विरोधः, परिहृतः ।

[ ३६ **के.** विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन नित्यानित्यत्रै-विध्यपरीक्षायाम् दलकृत्यनिरूपणे-

अ) 'ननु..एवं युक्तम्'इत्यस्य व्याख्याने- १) त्रैविध्यपरिनिष्ठाऽनुपप-त्तिशङ्कात्वेन 'ननु..शक्यम्'इत्यस्य अवतरणम् ।

आ) 'तत्र..परिहृतः'इत्यस्य व्याख्याने- १) 'तत्र..चेति'इत्यस्य व्याख्याने- पदार्थः । २) 'अथवा..परिहृतः'इत्यस्य व्याख्याने- क) '' 'प्रोक्तम्'इतिपदस्य 'पुराणादेः उत्पत्त्य'ाद्यनुपपत्तिशङ्कापरिहारकत्वमपि''-इत्यर्थकतया- १. 'पुराणानि..इत्युक्तम्'इत्यस्य अवतरणम्, २. 'पुराणानि तदर्थानि'इतिपदविवक्षितवाक्यप्रदर्शनञ्च । ख) 'अतः..परिहृतः'इत्यस्य द्वेधा-व्याख्याने- १. पदार्थः, भावश्च; २. मतान्तरेण व्याख्याने- पदार्थश्च । ]

ननु भावरूप अज्ञाने- विनाशवत्त्वेसति उत्पत्त्यभावलक्षणम्, वेद-रूप-अवान्तरभेदे च उत्पत्तिमत्त्वे सति विनाशित्वाभावे[1] च सति क्रमवत्य-त्यासाभावरूपं च नित्यानित्यविधान्तरम्, 'मूलप्रकृतिः अविकृतिः; महदाद्याः प्रकृतिविकृतयः सप्त'इत्यादि साङ्ख्योक्तं विधान्तरञ्च उत्प्रेक्षितुं शक्यते; इति कथं तत्त्रैविध्यपरिनिष्ठा ? इत्याशयेन शङ्कते **नन्विति** ॥

१. 'विनाशित्वाभावे च सति'इति एकत्र नास्ति ।

शास्त्रीयविधानाम् इति– उदाहृतानाम् इत्यर्थः । अत्र इति– नित्यानित्यविधासु, एव; इत्यर्थः । अन्यासाम् इति– अशास्त्रीयविधानाम् इत्यर्थः ।

ननु वर्णानां नित्यविभुत्वात्, कालस्यापि वैशेषिकैः नित्यविभुत्वाङ्गीकारात्, मूलप्रकृतेः अपि साङ्ख्यैः अनादित्वाङ्गीकारात्, कथं पुराणादेः उत्पत्त्यादि ? इत्याशङ्कापरिहारत्वेनापि 'प्रोक्तम्'इत्येतत् व्याचष्टे **पुराणानि तदर्थानीति** । 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु[2] । क्रियन्तेऽतत्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ॥'इतिवाक्यस्य[3] प्रतीकग्रहणम् इदम्; इति भावः

**अत एवेति** ॥ नित्यानित्यम् 'यन्न सर्वथा कूटस्थं नापि अनित्यमेव' इति यतो विवक्षितम्, न तु 'ध्वंसाप्रतियोगित्वे सति तत्प्रतियोगित्वरूपम्'; अत एव; इत्यर्थः । एकस्यैव ध्वंसाप्रतियोगित्वे सति प्रत्प्रतियोगित्वस्य विरुद्धत्वेऽपि, उक्तरूपनित्यानित्यत्वाङ्गीकारे विरोधाभावात्; इति भावः ॥ नित्यानित्याङ्गीकारे, हेतुविरोधोऽपि, नित्यानित्यत्वस्य आगमसिद्धत्वात् एव, परिहृतः; इत्यर्थः; इत्यपि आहुः ।

[ ३६ **वि.** विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्यपरीक्षायाम्–दलकृत्यनिरूपणे–

अ) 'ननु..एवेत्युक्तम्'इत्यस्य व्याख्याने– १) त्रैविध्यानुपपत्तिशङ्कात्वेन 'ननु..शक्यम्'इत्यस्य अवतरणम् । २) 'ननु..एवेत्युक्तम्'इत्यस्य विग्रहपदार्थौ च ।

आ) 'तत्र..परिहृतः'इत्यस्य व्याख्याने– १) 'तत्र..चेति'इत्यस्य व्याख्याने– क) उक्तार्थोपपादनप्रयोजनोक्तिपुरःसरम् अवतरणम्, पदार्थश्च । ख) उक्तपदार्थविवरकतया 'शास्त्रीय..चेति'इत्यस्य अवतरणम्, पदार्थश्च । २) 'अथवा...परिहृतः'इत्यस्य व्याख्याने– क) प्रकारान्तरेण 'प्रोक्तम्'इतिपदस्य व्याख्यानत्वेन 'अथवा..इत्युक्तम्'इत्यस्य अवतरणम्, पदार्थश्च ।

---

२. तत् ३. वि.त.नि.पृ. २५५ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।

ख) 'अतः...परिहृतः'इत्यस्य व्याख्याने– 'नित्यानित्यत्वयोर्विरोधात् नित्यानित्यत्वस्य प्रभेदान्तरत्वासम्भव'चोद्यनिरासोक्तितया अवतरणम्, पदार्थः, भावश्च । ]

'नित्यानित्यं त्रिधा'इति उक्तम्, तत्र अनुपपत्तिम् आशङ्कते **नान्विति** ।

एवं सति → उक्तप्रकारेण नित्यानित्यस्य पुराणादिभागत्रयाङ्गीकारे; अवान्तरभेदैः= अवान्तरैः, नित्यानित्यत्वव्याप्यैः, भेदैः= 'भिद्यन्ते एभिः'इतिव्युत्पत्त्या विभाजकधर्मैः; विधान्तरम्= भागान्तरम्, उत्प्रेक्षितुम्= कल्पयितुम्, शक्यम् ।, इत्यतः= एतस्मात् हेतोः, 'एव'इत्युक्तम्= न्यूनाधिकसङ्ख्याव्यवच्छेदार्थक'एव'इतिपदं प्रयुक्तम्; इत्यर्थः ॥

न हि प्रतिज्ञामात्रेण अर्थसिद्धिः; इत्यतः आह **तत्रेति** । तत्र– न्यूनाधिकसङ्ख्याव्यवच्छेदरूप'एव'कारार्थे, उपपादकाकाङ्क्षायाम्= साधकजिज्ञासायाम्, आह, 'प्रोक्तम्'इति= अबाधिततत्वरूपप्रकर्षेण उक्तम्; इत्यर्थः ।,

कथं 'त्रिधा एव'इत्युक्ते यथार्थत्वरूपप्रकर्षः? इतिजिज्ञासायाम्; 'विधान्तरं शास्त्रीयम्? अशास्त्रीयं वा?'इतिविकल्पं हृदि निधाय पक्षद्वये परिहारम् आह **शास्त्रीयविधानामिति** । शास्त्रोक्तानाम्– महदहङ्कारादिचतुर्विंशति-विधानाम्, उपचितसूक्ष्मरूपयोः, अत्र एव = प्रकृतेः विकारविकारिरूपयोः, क्रमेण; **अन्तर्भावः**; अन्यासाम्= अशास्त्रोक्त[1]'द्रव्यगुणकर्मसामान्यविशेषसमवायाभाव'ादिविधानाम्, अनादरणीयत्वम्= अनुपादेयत्वम्; इति हेतोः, **'प्रोक्तम्'इत्युक्तम्**; इत्यर्थः ।

**'प्रोक्तम्'इतिपदं प्रकारान्तरेण** व्याचष्टे **अथवेति** ॥ पुराणादीनां नित्यानित्यत्वम् उक्तम्; 'तत्र किं प्रमाणम्?'इतिजिज्ञासायाम्; 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानि', सर्वे निमेषा जज्ञिरे', 'विकारोऽव्यक्तजन्म हि'इत्यागमानाम्, परिग्रहणार्थम्= पुराणकाल-

---

१. शास्त्रोक्त

प्रकृतीनां नित्यानित्यत्वे प्रमाणत्वेन स्वीकारार्थम्, प्रोक्तम्= आगमैः उक्तम्; इत्यर्थः। 'उपादानस्वरूपेण प्रकृतिर्मूलकारणम्। नित्योपादानरूपेण त्वनित्या चोच्यते बुधैः॥'इतिभारद्वाजसंहितावाक्यादिः आगमः 'आदि'शब्दार्थः।;

'नित्यत्वानित्यत्वयोः विरोधात्, अचेतनस्य नित्यानित्यं नाम प्रभेदान्तरं न सम्भवति;'इतिचोद्यम् अपि अत एव निरस्तम्; इत्याह **अत एवेति**। प्रकारभेदेन नित्यानित्यत्वयोः प्रमाणसिद्धत्वात् एव; इत्यर्थः; विरोधः अपि = नित्यानित्यत्वयोः प्रमाणसद्भावात् विरोधः अपि, परिहृतः= निराकृतः; इत्यर्थः। अंशांशिनोः विकारविकारिणोः भेदात् कालांशस्य क्षणलवादेः अनित्यत्वम्, अंशिनः कालप्रवाहस्य नित्यत्वम्, एवम् विकारस्य महदादेः अनित्यत्वम्, विकारिणः अव्यक्तस्य नित्यत्वं च उपपन्नम् एव; इति भावः।

[ ३६ मु. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्य-परीक्षायाम्-दलकृत्यनिरूपणे—

अ) 'ननु...एवेत्युक्तम्'इत्यस्य व्याख्याने— विधान्तरोत्प्रेक्षणीयत्वशङ्कात्वेन 'ननु...शक्यम्'इत्यस्य अवतरणम्।

आ) 'तत्र...परिहृतः'इत्यस्य व्याख्याने— 'शास्त्रीय...अन्तर्भावः'-इत्यस्य पदार्थः, भावश्च। ]

ननु यदि नित्यानित्यम् अवान्तरभेदात् त्रिविधम्, तर्हि अवान्तरभेदात् एव भावरूप-अज्ञाने विनाशित्वे सति उत्पत्त्यभावलक्षणं नित्यानित्यत्वम् उत्प्रेक्षणीयम्; इत्याशयेन शङ्कते **नन्वेवमिति**।

**शास्त्रीयविधानामिति**। शास्त्रीयविधावतां भावरूप-अज्ञानादीनाम्, अत्रैव— उक्तविधासु एव; इत्यर्थः। भावरूप-अज्ञानस्य द्रव्यत्वेन, 'स्वरूपेण उत्पत्त्याद्यभावेऽपि अवस्थाऽऽगमापायित्वञ्च'इत्यस्यां विधायाम् अन्तर्भावः; इति भावः।

[ ३६ का. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रै-विध्यपरीक्षायाम्-दलकृत्यनिरूपणे–

अ) 'ननु...एवेत्युक्तम्'इत्यस्य व्याख्याने– १) त्रैविध्यानुपपत्तिशङ्का-त्वेन'ननु...शक्यम्'इत्यस्य अवतरणम् । २) मूलयोजनया समाधायकतया 'इत्यत एवेत्युक्तम्'इत्यस्य अवतरणम्, आशयश्च ।

आ) 'तत्र...परिहृतः'इत्यस्य व्याख्याने– १) 'तत्र...चेति'इत्यस्य व्याख्याने– क) 'तत्र'पदार्थः । ख) 'इत्याह'इत्यस्य भावः । ग) 'शास्त्रीय ...चेति'इत्यस्य व्याख्याने– १. सप्रयोजन-अभिप्रायपूरकतया अवतरणम्, २. तात्पर्यम्, भावश्च । २) 'अथवा...परिहृतः'इत्यस्य व्याख्याने– क) 'अथवा...इत्युक्तम्'इत्यस्य व्याख्याने– १. 'प्रोक्तम्'इत्यस्य 'पुराणकाल-प्रकृतीनां नित्यानित्यत्वानुपपत्तिशङ्कानिवारकत्वमपि'इत्यर्थकतया अवतरणम्; २. भावः; ३. 'अनादि-ईश्वरबुद्ध्युपाधिकक्रमविशिष्टवर्णात्मकपुराणादीनाम् अनित्यत्वानुपपत्ति'शङ्का, तन्निरासश्च । ख) 'अतः...परिहृतः'इत्यस्य त्रेधा व्याख्याने– १. 'उत्पत्तिमतां भावानाम् अविनाशित्वादेः विरुद्धत्व'-शङ्कानिवारकतया अवतरणम्, पदार्थश्च; २. 'अविरुद्धनित्यानित्यत्वयोः प्रकारानुक्ति'शङ्कानिवारकतया अवतरणम्, पदार्थश्च; ३. 'नित्यानित्यत्वस्य विरोध'शङ्कापरिहारकतया पदार्थश्च । ]

'ननु नित्यानित्यस्य पुराणाद्युदारहरणवैचित्र्यानुसारेण बहुविध-त्वम् एव वक्तुम् उचितम्; पुराणादेः उत्पत्तिमत्त्वे सति अविनाशित्वेन, भावरूप-अज्ञानादेः विनाशित्वे सति अनुत्पत्तिमत्त्वेन, अतीतकालप्रवाहादेः प्रवाहिरूपेण[1] उत्पत्तिविनाशित्वे सति स्वरूपतोऽनादित्वमात्रेण[2], ध्वंस-प्रवाहस्य प्रवाहिरूपेण उत्पत्तिमात्रवत्त्वे सति स्वरूपतः तदभावेन, प्रागभा-वप्रवाहस्य विनाशमात्रवत्त्वे सति स्वरूपतः तदभावेन वैचित्र्यात् ।, एवं "प्रवाहिरूपेण उत्पत्त्यादिशून्यत्वे सति प्रवाहरूपेण तद्वत्त्वम्, स्वरूपेण उत्पत्तिमात्रशून्यत्वे सति परिणामित्वम्;'इत्यादिविधान्तरं च उत्प्रेक्षितुं शक्यम् ।; अतः कथं त्रैविध्योक्तिः ?'इत्याशयेन शङ्कते **नन्विति** ।

---

१. प्रवाहरूपेण    २. ऽनादिमात्रेण

'त्रिधा एव प्रोक्तम्'इति मूलयोजनया समाधत्ते **इत्यत इति** । त्रिविधातिरिक्तनित्यानित्यस्य असत्त्वात् न त्रैविध्योक्तिः अनुपपन्ना; इत्याशयः ॥

**तत्रेति** । त्रिविधातिरिक्तस्य असत्त्वे; इत्यर्थः ॥ **इत्याहेति** । तथाच अन्यस्य असत्त्वात्[3] एव अनुक्तम्; इति भावः ।,

ननु प्रदर्शितवैचित्र्यस्य तत्र तत्र उक्तत्वात् कथम् 'अनुक्तम्'इति ? अतः अभिप्रायं पूरयति **शास्त्रीयेति** । 'पुराणादेः'इति-उक्तप्रकाराणां शास्त्रीयत्वेऽपि, उक्तप्रकारत्रये एव अन्तर्भावात्; तदवान्तरत्वात् इति यावत् । 'एवम्'इत्यादि-उक्तप्रकाराणाम् अशास्त्रीयत्वेन अप्रामाणिकत्वात् न उक्त-त्रैविध्यभञ्जकत्वम्; इति भावः ।

ननु पुराणादेः पूर्वकल्पस्थितस्य एव उत्तरकल्पे अभिव्यक्तेः वेदवत् नित्यत्वम् एव, कालप्रकृत्योः अपि नित्यत्वम् एव, तन्त्रान्तरसिद्धम्; अतः कथम् एषां नित्यानित्यत्वम् ? इत्याशङ्कानिवर्तकत्वेन अपि 'प्रोक्तम्'-इत्येतत् व्याचष्टे **अथवेति** । 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव[4] तु । क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ॥'[5]इत्यादिवचनेन **पुराणादेः** उत्पत्तिमत्त्वावगमात्; इति भावः । न च 'पुराणादेः क्रमविशेषविशिष्टवर्णात्मकत्वात्, क्रमस्य बुद्ध्युपाधिकत्वात्, बुद्धेश्च ईश्वरीयायाः अनादिकत्वात्; कथम् अनित्यत्वम् ?'इति वाच्यम्; एतत्कल्पीयव्यक्तिक्रमस्य पूर्वकल्पेषु अभावेन तदुपपत्तेः ।, उत्तरकल्पेषु च तत्सद्भावस्य प्रमितत्वात् न विनाशित्वप्रसङ्गः; इति ध्येयम् ।

'ननु च उत्पत्तिमतां भावानाम् अविनाशित्वादेः विरुद्धतया कथं पुराणादिषु तदुभयाङ्गीकारः ?'इति-आशङ्का-वारकत्वेन अपि 'प्रोक्तम्'इत्येतत् व्याख्याति **अत एवेति** । 'प्रोक्तम्'इति-उक्तत्वात् एव; इत्यर्थः ।,

---

३. 'अनुक्तत्वादेवासत्त्वमिति भावः'इति ग्रन्थान्तरे ।
४. 'ऽमुनैव'इत्येकत्र ५. वि.त.नि.पृ.२५५ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।

यद्वा नित्यत्वानित्यत्वयोः अविरोधः प्राक् उक्तः, तत्प्रकारः तु न उक्तः; इत्यत आह अत एवेति । नित्यानित्यत्वोपपादकप्रकारत्रयसूचनात् एव; इत्यर्थः ।,

अत एव = नित्यानित्यत्वस्य 'यन्न सर्वथा' इत्यादिना उक्तरूपत्वात् एव; 'ध्वंसाप्रतियोगित्वे सति तत्प्रतियोगित्व'रूपनित्यानित्यतत्त्वस्य विरोध-शङ्का अपि, परिहृता; इत्यर्थः; इति केचित् ।

[ ३६ भ. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्य-त्रैविध्यपरीक्षायाम् दलकृत्यनिरूपणे–

अ) 'ननु..एवेत्युक्तम्' इत्यस्य व्याख्याने– १) विधान्तरप्रदर्शनसहित-त्रैविध्यभङ्गशङ्कात्वेन 'ननु..शक्यम्' इत्यस्य अवतरणम् । २) 'इत्यत एवेत्युक्तम्' इत्यस्य व्याख्याने– अन्वयसूचना च ।

आ) 'तत्र. परिहृतः' इत्यस्य व्याख्याने– १) 'तत्र..चेति' इत्यस्य व्याख्याने– क) 'प्रोक्तमित्याह' इत्यस्य भावः । ख) 'शास्त्रीय..चेति' इत्यस्य व्याख्याने– १. सप्रयोजन-उक्तार्थाभिव्यञ्जकतया अवतरणम्, २. अर्थः, ३. विशिष्टस्य नित्यानित्यत्वासिद्धिश्च । २) 'अथवा..परिहृतः' इत्यस्य व्याख्याने– क) पूर्वटीकासम्बन्धप्रदर्शनपूर्वक-तत्सङ्गत्या प्रकारान्तरेण व्याख्यातत्वेन 'अथवा..इत्युक्तम्' इत्यस्य व्याख्याने - १. अवतरणम्, २. आगमस्पष्टीकरणे– क. 'पुराणानि तदर्थानि' इत्यस्य व्याख्यानम्, ख. 'सर्वे निमेषा जज्ञिरे' इत्यस्य व्याख्यानम्, ग. 'विकारोऽव्यक्तजन्म हि' इत्यस्य व्याख्यानम् ख) 'अतः..परिहृतः' इत्यस्य व्याख्याने– १) अत्र निरास्यपक्षोक्तिपूर्वकम् अवतरणम् । २) पदार्थश्च । ]

''ननु एवं यदि पुराणादीनां नित्यानित्य-अवान्तरप्रभेदत्वेन तत्तद्वस्तुस्थित्यनुसारेण तिस्रो विधाः विवक्ष्यन्ते, तर्हि तादृश-अवान्तरप्रभेदानाम् अन्येषाम् अपि भावात् विधान्तरम् अपि उत्प्रेक्षितुं शक्यते एव । तथाहि– भूतसूक्ष्माणि तावत् स्वतः १अनादिनित्यानि एव; परमाणुरूपेण तु असन्ति,

---

१. 'अनादिनित्यान्येव अहङ्कारांशोपचितानि त्रसरेणुषष्ठभागरूपपरमाणुताम् आपद्यन्ते । तथा च' इति ग्रन्थान्तरे ।

अहङ्कारांशोपचितानाम् एव परमाणुत्वात्; तथाच 'कारणात्मना सत्त्वे सति कार्यात्मना [२]असत्त्वम्' एका विधा ।, एवम् इन्द्रियाणि अपि अनादिनित्यानि अहङ्कारभूतांशैः सृष्टिकाले उपचयमात्रवन्ति भवन्ति; तथाच 'एकदेशे उत्पत्तिविनाशौ एकदेशेन तदभावः' इति अन्या विधा ।, एवमेव वेदः अपि नित्यानित्येषु एव निक्षेप्तुं शक्यः, नियत-एकप्रकारत्वेन नित्यत्वेऽपि वर्णानां तीव्रमन्दत्वादि विरुद्धधर्माश्रयत्वेन तत्तत्पुरुषप्रयत्नसाध्यत्वेन च जनिविनाशित्वावगमात्; तथाच 'प्रकाररूपेण जनिविनाशाभावः प्रकारिरूपेण तद्वत्त्वम्' इत्यपरा विधा ।, अथ देही नाम विशिष्टः पदार्थः, तत्र विशेषणीभूतदेहस्य अनित्यत्वम् विशेष्य-चेतनस्य नित्यत्वम्; तथा जीवः नाम विशिष्टः पदार्थः लिङ्गशरीराऽऽख्यः, 'एष चेतनया युक्तो जीव इत्यभिधीयते' इति वचनात्; तत्र च विशेषणीभूतः चेतनः निर्विकारः, विशेषं लिङ्गं च विकारवत् सृष्ट्यादौ उपचयादिसद्भावात्; तथाच 'विशेष्यांशे जन्मादि विशेषणांशे तदभावः' इति अपरा विधा; इत्यादि ।; तथाच नित्यानित्यविधानां बहुत्वात् कथं 'त्रिधा' इति उच्यते ?'' इतिआशयेन शङ्कते **नन्वेवमिति** ।

**एवेत्युक्तमिति** । 'त्रि[४]धा एव' इति सम्बन्धनीयम् इति आशयः ॥

**प्रोक्तमित्याहेति** । शास्त्रे प्रकारत्रयस्य एव कथितत्वात्, न अत्र विधान्तरशङ्कावकाशः; इति भावः ।;

कथं शास्त्रे कथनमात्रेण विधान्तरशङ्काऽनवकाशः ? इत्यतः अभिप्रायं व्यनक्ति **शास्त्रीयेति** । अयमर्थः— 'कारणात्मना सत्त्वे सति कार्यात्मना असत्त्वम्, एकदेशे उत्पत्तिविनाशौ एकदेशे तदभावः' इत्यादिविधानां भूतसूक्ष्मादिनिष्ठतया शास्त्रसिद्धानां तृतीयविधायाम् अन्तर्भावः, स्वरूपेण विद्यमानानाम् एव भूतसूक्ष्माणां परमाणुताऽवस्थाऽऽगमापायवत्त्वात्; तथा-

२. त्रिकालसत्त्वे सति ३. तथात्वाभावः
४. 'एतेन त्रिधैव इत्येवकारान्वयं सूचयति' इति ग्रन्थान्तरे ।

भूतानाम् एव इन्द्रियाणाम् अहङ्काराद्यंशैः स्थूलताद्यवस्थाग्राः आगमात् अपायात् च; इति । न च 'भूतमूक्ष्मादीनाम् अत्र अनुक्तत्वात्, न सकलतत्त्वसङ्ख्यानम् अत्र'इति वाच्यम्, प्रकृतौ एव अन्तर्भावस्य विवक्षितत्वात् ।५ 'प्रकाररूपेण जनिविनाशाभावः प्रकारिरूपेण तद्वत्त्वम्'इत्येषा तु विधा नैव-आदरणयोग्या, वर्णनित्यत्वस्य अन्यत्र निपुणतरं भणितत्वात् ।६ अवशिष्ट-विधा अपि एवम् एव, विशेष्यादेः नित्यत्वे अपि विशिष्टस्य तदलाभात्; न हि विशिष्टे विशेष्यादिव्यवहारः अस्ति, येन स्वयम् अनित्यस्य अपि नित्यत्वम् उपपद्येत ।७ कालादौ तु न एषा अनुपपत्तिः, क्षणलवादौ अनित्ये-नित्यभूते प्रवाहे च कालत्वव्यवहारदर्शनात्; तथा महदादौ अनित्ये नित्ये सूक्ष्मे च प्रकृतित्वव्यवहारात् ।

इदमेव हि नित्यत्वम् यत् नित्यरूपेण वा अनित्यरूपेण वा प्राचीनशब्दव्यवहारभाजनत्वाप्रच्युतिः । एतत् च न उक्तरूपे विशिष्टे सम्भवति, तत्र विशेष्यादिव्यवहाराभावात्; अन्यथा 'देवदत्तादि'शब्दप्रयोगे 'दण्डि'बोधप्रसङ्गात् । तथाच विशिष्टस्य न नित्यानित्यत्वसिद्धिः; इति ।

'तच्च लेशतो दर्शयिष्यामः'इतिप्रतिज्ञातत्वात्; नित्यानित्यत्वे प्रमाणं दर्शयितुं 'प्रोक्तम्'इत्येतत् प्रकारान्तरेण व्याख्याति **अथवेति** ।

पुराणानाम् आनुपूर्वीविशेषस्य सर्वज्ञत्वात् ईश्वरबुद्धौ सर्वदा प्रतीयमानत्वेन विनाशाभावस्य सिद्धत्वात्, जनिमत्त्वमात्रे प्रमाणोदाहरणम् इदम्

---

५. 'न च..विवक्षितत्वात्'इति नास्ति ।
६. 'क्रमस्यैव प्रकारत्वेन तस्य च बौद्धत्वेन जनिविनाशवत्त्वात्, वर्णनित्यत्वस्य अन्यत्र निपुणतरं भणितत्वेन प्रकारिणां जन्याद्यभावाच्च ।'इति ग्रन्थान्तरे ।
७. 'विशिष्टस्य, विशेष्यस्य, विशेषणस्य वा नित्यतया'इति अधिकम् ।
८. 'तथा..नित्यानित्यत्वसिद्धिः'इति ग्रन्थान्तरे नास्ति ।
९. नित्यानित्ये

'[1]पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानि' इति ॥ अत्र अनित्यत्वं नाम पौरुषेयत्वम् एव ।,

कालस्य अपि प्रवाहरूपेण नित्यत्वस्य सिद्धत्वात्, प्रवाहिरूपेण जन्यत्वे मानम् इदम्— 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।' इत्यादि ॥ अत्र 'क्रमेण जज्ञिरे' इत्यर्थः । तेन च कालान्तरे कालान्तरस्थित्यभावेन क्रमेण विनाशः अपि सिद्ध्यति ।,

प्रकृतेः उत्पत्तिभावे मानम् 'विकार' इति ॥ अयमर्थः— प्रकृतेः स्वतो जन्म नास्त्येव अव्यक्तत्वात्, सर्वोत्पत्तिमतां कारणं हि [2]अव्यक्तं नाम; अवस्थाऽऽगमलक्षणं तु जन्म अस्ति, महदादिरूपेण विकारात्; इति विकारापगमे तु तल्लक्षणः नाशः अपि सिद्ध एव ।;

'सर्वेऽपि नित्यानित्यं विरोधात् न अभ्युपगच्छन्ति' इतिपक्षं निराह **अत एवेति** । नित्यानित्यसद्भावे आगमसद्भावात् एव; इत्यर्थः ।

[ ३७ **टी.** विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्य-परीक्षायाम्—

अ) 'कालप्रकृत्योः नित्यानित्यत्वाभाव' शङ्का ॥ आ) तन्निरासे— १) तन्निषेधः । २) शङ्कितपक्षसमर्थकविषयविचारपुरःसरम् तद्विषयस्य प्रकृते अविद्यमानत्वप्रदर्शनञ्च ॥ ]

**ननु अत्र यस्य उत्पत्त्यादिकम् तत् अनित्यम् एव; यस्य तु तत् नास्ति तत् नित्यम् एव; नित्यानित्यं क्वास्ति ? इति ।, मैवम् ।; स्यात् एतत् एवम् यदि अंशांशिनोः विकारविकारिणोः वा [3]अत्यन्तभेदः स्यात् ; न च एवम् इति अन्यत्र उपपादितम् ॥**

---

१. वि.त.नि.पृ. २५५ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।

२. अव्यक्तनाम

३. वि.टि. 'अत्यन्ताभेदः' इति उद्धरणम् ।

[ २७ स. विषय:- अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैवि-ध्यपरीक्षायाम्- 'ननु...उपपादितमिति'इत्यस्य द्वेधा व्याख्याने-

अ) प्रथमव्याख्याने- १) 'ननु...कास्ति'इत्यस्य व्याख्याने- 'अंशांश्यादे: नित्यानित्यत्वाभाव'शङ्कात्वेन अवतरणम् । २) 'मैवम्...उप-पादितमिति'इत्यस्य व्याख्याने- 'स्यादेतत्....स्यात्'इत्यस्य व्याख्याने- 'अंशांश्यादे: एकवस्तुनिष्ठत्वात् नित्यानित्यत्वसम्भव'उक्तितया अवतरणम् ।

आ) प्रकारान्तरेण व्याख्याने- १) 'उत्पत्तिमत्त्वे सति विनाशाभाव:'-इतिटीकावाक्यस्य विवक्षितार्थ:, तद्वाक्योक्तविधायाश्च पुराणादिषु वृत्तित्वम् । २) 'नन्वत्र...कास्ति'इत्यस्य नित्यानित्यरूपतृतीयराश्यभावशङ्कात्वेन योजना । ३) 'मैवम्...उपपादितमिति'इत्यस्य व्याख्याने- क) 'स्यादेतदेवं...स्यात्'-इत्यस्य व्याख्याने- १. शेष:, २. अभिप्राय:, ३. तत्त्वविवेकटीका-सम्मतिश्च । ख) 'अन्यत्र'पदार्थश्च ॥ ]

'ननु भवतु उत्पत्तिमत्त्वे सति विनाशाभावात् पुराणादे: नित्या-नित्यत्वम्; कालप्रकृत्योश्च- यस्य कालांशस्य प्रकृतिविकारस्य च उत्पत्तिविनाशौ तद्द्रयम् अपि अनित्यम् एव, यस्य तु कालप्रवाहस्य प्रकृतिमूलरूपस्य च न उत्पत्तिविनाशौ तद्द्रयम् अपि नित्यम् एव; इति अंशांशिनो: विकारविकारिणो: वा न नित्यानित्यत्वम् अस्ति'इति शङ्कते **नन्वत्रेति ।**

अंशांश्यादे: अत्यन्तभेदाभावेन वस्त्वैक्यात् नित्यानित्यत्वयो: एक-वस्तुनिष्ठतया नित्यानित्यत्वं कालप्रकृत्यो: सम्भवति'- इत्याह **स्यादेतदेव-मिति ॥**

यद्वा 'उत्पत्तिमत्त्वे सति'इति वाक्यम् 'विशेष्यस्य उत्पत्त्याद्यभावेऽपि विशिष्टस्य उत्पत्तिमत्त्वे सति विनाशाभाव:'इति व्याख्येयम्; तथाच क्रम-विशेषविशिष्टानां वर्णानाम् एव पुराणादित्वेन, उक्ता विधा पुराणादौ अस्ति इति भाव: ।

---

१. एतद्ग्रन्थस्य १८७ पृष्ठे १६ पङ्क्तौ टीकावाक्यम् ।

'नन्वत्र'इत्यादिशङ्कावाक्यम् 'यस्य पुराणादेः विशिष्टस्य उत्पत्तिः कालांशादेः उत्पत्तिविनाशौ, तत्त्रयम्[2] अनित्यम् एव; यस्य तु वर्णविशेषस्य कालप्रवाहादेश्च न उत्पत्त्यादि, तत्त्रयं नित्यम् एव; इति नित्यानित्याऽऽख्या तृतीया राशिः क्वास्ति ?'इति योज्यम् ।

'स्यादेतदेवं यदि'इत्यनन्तरम् 'विशिष्टशुद्धयोः'इति शेषः । एवञ्च विशिष्टशुद्धादेः अत्यन्तभेदाभावेन नित्यत्वानित्यत्वयोः एकवस्तुनिष्ठत्वेन, नित्यानित्याऽऽख्यतृतीयराशिः सम्भवति; इति ।, अत एव तत्त्वविवेकटीका-[3]याम् 'पुराणादि येन अंशेन नित्यं तम् अंशं नित्यवर्गे निधाय, येन अंशेन अनित्यं तम् अंशम् अनित्यवर्गे निधाय'इति उक्तम्; इति बोध्यम् ।,

**अन्यत्रेति** । 'कार्यकारणयोश्चैव'[4]इत्यादिना तत्त्वविवेके इत्यर्थः ॥

[ ३७ क. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैविध्य परीक्षायाम्-'ननु..उपपादितमिति'इत्यस्य द्वेधा व्याख्याने–

अ) प्रथमव्याख्याने– १) 'ननु..क्वास्तीति'इत्यस्य व्याख्याने– 'काल-प्रकृत्योः नित्यानित्यत्वाभाव'शङ्कात्वेन अवतरणम् । २) 'मैवम्..उपपादित-मिति'इत्यस्य व्याख्याने– 'अंश्यादेः वस्त्वैक्यात् नित्यानित्यत्वसम्भव'उक्तिः तथा 'स्यादेतदेवम्..उपपादितमिति'इत्यस्य अवतरणम् ।

आ) प्रकारान्तरेण व्याख्याने– १) 'उत्पत्तिमत्त्वे सति विनाशाभावः इतिटीकावाक्यस्य विवक्षितार्थः, भावश्च । २) 'ननु..क्वास्तीति'इत्यस्य व्याख्याने– नित्यानित्याऽऽख्यतृतीयराश्यभावशङ्कात्वेन योजना । ३) 'मैवम्..उपपादितमिति'इत्यस्य'व्याख्याने– क) 'मैवम्..भेदः स्यात्'इत्यस्य व्याख्याने– १. शेषः; २ 'नित्यानित्यत्वयोः एकवस्तुनिष्ठत्वात् तत्तृतीय-राशिसम्भव'रूपो भावः; ३. उक्तार्थे तत्त्वविवेकटीकासम्मतिश्च । ख) 'न च..उपपादितमिति'इत्यस्य व्याख्याने– पदार्थः, शेषश्च ॥ ]

'ननु भवतु उत्पत्तिमत्त्वे सति विनाशाभावात् पुराणादेः नित्यानित्यत्वम्; कालप्रकृत्योः तु– यस्य कालांशस्य प्रकृतिविकारस्य च उत्पत्तिविनाशौ

२. तत्र यम् ३. पृ. ७० ४. श्लो. ११,१२.

तद्द्रूयम् अपि अनित्यम् एव, यस्य तु कालप्रवाहस्य प्रकृतिमूलरूपस्य च न उत्पत्तिविनाशौ तद्द्रूयम् नित्यम् एव; इति न नित्यानित्यत्वम्' इति आशङ्कते **नन्विति** ।

अंश्यादेः अत्यन्तभेदाभावेन वस्त्वैक्यात्, नित्यानित्यत्वयोः एकवस्तुनिष्ठतया, नित्यानित्यत्वं कालप्रकृत्योः सम्भवति; इत्याह **स्यादेतदेवमिति** ॥

यद्वा 'उत्पत्तिमत्त्वे सति'[1] इतिवाक्यं 'विशेष्यस्य उत्पत्त्यभावेऽपि विशिष्टस्य उत्पत्तिमत्त्वे सति विनाशाभावः' इति व्याख्येयम् । तथाच क्रमविशिष्टवर्णानाम् एव पुराणादित्वेन उक्तविधा पुराणादौ अपि अस्ति; इति भावः ।

'नन्वत्र' इत्यादिशङ्कावाक्यम् 'यस्य – पुराणादेः विशिष्टस्य उत्पत्तिः, कालांशादेः उत्पत्तिविनाशौ, तत्त्रयम् अनित्यम् एव; यस्य तु– वर्णाऽऽख्यस्य विशेष्यस्य कालप्रवाहादेश्च न उत्पत्त्यादि, तत्त्रयं नित्यम् एव; इति न नित्यानित्यं नाम तृतीयराशिः अस्ति;' इति योज्यम् ।;

परिहारग्रन्थे च 'विशिष्टशुद्धयोः' इति शेषः । एवञ्च विशिष्टशुद्धादेः [2]अत्यन्तभेदाभावेन नित्यानित्यत्वयोः एकवस्तुनिष्ठतया, नित्यानित्या तृतीयराशिः सम्भवति; इति भावः । अत एव [3]तत्त्वविवेकटीकायाम् 'पुराणादि येन अंशेन नित्यम् तम् अंशं नित्यवर्गे निधाय' इतिउक्तम्; इति ध्येयम् ।,

अन्यत्र– [4]तत्त्वविवेके, '' 'कार्यकारणयोश्चैव' इत्यादिना '' इति शेषः ॥

[ ३७ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्य-त्रैविध्यपरीक्षायाम् -

अ) 'ननु..क्वास्तीति' इत्यस्य व्याख्याने– १. 'कालप्रकृत्योः नित्यानित्यत्व' अयुक्तत्वशङ्कात्वेन अवतरणम्, पदार्थश्च ॥ आ) 'मैवम्..उपपादितमिति' इत्यस्य व्याख्याने– १) शङ्कापरिहारकतया अवतरणम् । २) पदार्थः । ३) प्रवाहप्रवाहि-उपादानोपादेय-आद्योः भेदाभेदसमर्थनम्; भेदाभेदयोः एकत्रसत्त्वस्य युक्तता च ॥ ]

---

१. अस्मिन्ग्रन्थे १८७ पृष्ठे १६ पङ्क्तौ टीकावाक्यम् । २. अत्यन्ता
३. पृ. ७० ४. श्लो ११, १२

'ननु तर्हि कालप्रकृत्योः नित्यानित्यत्वम् अयुक्तम्'इति शङ्कते **नन्विति** ॥

अत्र→ काले प्रकृतौ च, यस्य→ कालांशस्य प्रकृतिविकारस्य च, उत्पत्त्यादि= उत्पत्तिः विनाशश्च, अस्ति, तत्→ कालप्रकृत्योः रूपद्वयम्, अनित्यम्, एव= न तु नित्यम्; इत्यर्थः ।, यस्य तु– अंशिनः कालप्रवाहस्य विकारिणः अव्यक्तस्य च, उत्पत्त्यादि, नास्ति, तत्– कालप्रवाहप्रकृत्याख्यं वस्तुद्वयम्, नित्यम्, एव= न तु अनित्यम्; इति हेतोः, नित्यानित्यं नाम अचेतनस्य विधान्तरम्, कास्ति= कुत्र अस्ति; इत्यर्थः ॥

परिहरति **मैवमिति** ।

एवम्, मा= न; इत्यर्थः । स्यादेतदेवम्= 'एतस्मिन् नित्यानित्यं नाम विधान्तरं नास्ति'इति-एतत्, एवम्=उक्तप्रकारेण, स्यात्=भवेत्; इत्यर्थः ॥ यदि, अंशांशिनोः= प्रवाहिप्रवाहयोः, विकारविकारिणोः वा= उपादेयोपादानयोः, वा, अत्यन्ताभेदः स्यात्= भेदासमानाधिकरणः अभेदः स्यात्, भवेत् इत्यर्थः । न च एवम् इति== एवम्– अंशांशिनोः विकारविकारिणोः वा अत्यन्ताभेदः, न च; इति– अनेन प्रकारेण, अन्यत्र= ग्रन्थान्तरे, उपपादितम्= समर्थितम् इत्यर्थः ॥ 'इति'शब्दः शङ्कापरिहारसमाप्तिपरः ।

'पूर्वोत्तरभावापन्न-अनेकगजाः एव गजप्रवाहः'इति अबाधितप्रतीतेः, एकैकस्मिन् एव गजे 'गजप्रवाहो न'इत्यबाधितप्रतीतेश्च, प्रवाहप्रवाहिणोः भेदाभेद एव; 'आतानवितानात्मकाः तन्तवः एव पटः'इति-अबाधितप्रतीतेः एकैकस्मिन् एव तन्तौ 'पटो न'इति-अबाधितप्रतीतेश्च, उपादानोपादेययोश्च भेदाभेदः एव प्रेक्षावद्भिः अभ्युपेयः । न च 'भेदाभेदयोः विरोधात् एकत्र सत्त्वम् अयुक्तम्'इति वाच्यम्; मूषकमार्जालयोः अन्यत्र विरोधेऽपि ऋष्याश्रमेऽविरोधवत्, भेदाभेदयोः उत्सर्गतः विरोधेऽपि प्रमितत्वात् अत्र विरोधः नास्ति; इति भावः ॥

[ ३७ मु.– × ]

[ ३७ का. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्य-त्रैविध्यपरीक्षायाम्– 'ननु..उपपादितमिति'इत्यस्य द्वेधा व्याख्याने–

अ) प्रथमव्याख्यानत्वेन– १) 'ननु..कास्तीति'इत्यस्य व्याख्याने– क) पूर्वोक्तविषयमात्रेण विरोधपरिहाराभावशङ्कात्वेन अवतरणम् । ख) पदार्थः । ग) 'विशिष्टस्य विशेष्यानतिरिक्तत्व'बलेन पुराणादिष्वपि नित्यानित्यत्वानुपपत्तिसमर्थनञ्च । २) 'मैवम्..उपपादितमिति'इत्यस्य व्याख्याने– क) १. वाक्यपूरणम्; २. 'अन्यत्र'पदार्थः भावः; अभिप्रायश्च । ख) तत्त्वविवेकटीकावाक्यस्य अर्थः, आशयश्च ।

आ) प्रकारान्तरेण व्याख्याने– १) केषाञ्चिन्मतानुसारेण पुराणादेः नित्यानित्यत्वाभावशङ्कात्वेन तन्निरासकत्वेन च व्याख्यानस्य अनुवादः । २ वस्तुतः व्याख्यानत्वेन– क) कालप्रकृत्योः नित्यानित्वानुपपत्तिशङ्कात्वेन 'ननु..कास्तीति'इत्यस्य अवतरणम्, पदार्थः, तात्पर्यञ्च । ख) परिहारस्य यथाश्रुतत्वम् । ग) एतत्पक्षे तत्त्वविवेकटीकाविरोधपरिहारश्च ॥ ]

ननु एतावता अपरिहृतः विरोधः; विशिष्टशुद्धयोः अत्यन्ताभेदेन अंशांश्यादेः अत्यन्तभेदेन च पुराणादीनाम् उत्पत्त्याद्ययोगात्, विशिष्टोत्पत्तिवचनस्य विशेषणमात्रविषयत्वेन अव्यक्तजन्मोक्तेः औपचारिकत्वेन च, तद्वचनविरोधाभावात्; इतिभावेन शङ्कते नन्विति । अत्र– पुराणादिषु, यस्य विशेषणांशादेः; यस्य– विशेष्यांश्यादेः । एतेन 'विशिष्टस्य पुराणादेः उत्पत्त्यादिमत्त्वेऽपि नित्यानित्यत्वस्य उपपादितत्वात् तदाक्षेपानुपपत्तिः'इति-अपास्तम्, विशिष्टस्य विशेष्यानतिरिक्तत्वात् ।

'यदि'इत्यनन्तरं 'विशिष्टशुद्धयोः अत्यन्तभेदः स्यात्'इति पूरणीयम् । अन्यत्र– तत्त्वविवेकादौ, 'कार्यकारणयोश्चैव'इत्यादिना प्रतिपादितत्वात् इति भावः ॥ एवञ्च पुराणादित्रयस्यापि नित्यानित्यत्वम् उपपादितं भवति ।

---

१. विशेष्यांशादेः २. श्लो. ११,१२.

'अंशांश्यादे: अत्यन्तभेदाभावेन तृतीयराशिसम्भवात्'इतितत्त्वविवेक-टीकायाम् 'अत्यन्तभेदस्यैव अभावेन'इत्यर्थः । तेन विशिष्टशुद्धयोः क्वचित् अत्यन्ताभेदस्य क्वचित् भेदाभेदयोः (च) लाभात्, पुराणादीनाम् वर्णादि[३]-खण्डितत्वेन भिन्नाभिन्नतया नित्यत्वानित्यत्वोपपत्तिः; इत्याशयः ॥

केचित् " 'उत्पत्तिमत्त्वे सति'इतिवाक्यस्य विशेष्यरूपेण उत्पत्त्यादिरहितस्य उत्पत्तिमत्त्वे सति विनाशाभावः इत्यर्थः ।, शङ्काग्रन्थे च 'विशिष्टशुद्धयोः अत्यन्तभेदेन, पुराणादेः विशेष्यरूपेण उत्पत्त्यादिराहित्याभावात् न नित्यानित्यत्वम्'इत्याशयः ।, परिहारग्रन्थे च 'विशिष्टशुद्धयोः इति शेषः; तथाच पुराणादेः विशिष्टरूपेण उत्पत्तिमत्त्वेऽपि विशेष्यभूत-वर्णरूपेण तदभावात् नित्यानित्यत्वम्;"इति व्याचक्षते ।

वस्तुतः 'ननु अस्तु पुराणादेः नित्यानित्यत्वम्; उत्पत्तिमत्त्वे सति अविनाशित्वस्य प्रोक्तत्वेन विरोधाभावात्, न तु कालप्रकृत्योः अंशांश्यादेः अत्यन्तभेदेन उत्पत्त्यादिमत्त्वतदभावयोः एकनिष्ठत्वायोगात्;' इति शङ्कते **नन्विति** । यस्य क्षणादेः उत्पत्त्यादिमत्त्वं न तस्य तद्राहित्यम्, यस्य प्रवाहादेः तद्राहित्यम् न तस्य तद्वत्त्वम्; अतः उत्पत्त्यादिमत्त्वतद्राहित्य--उभयाऽऽक्रान्तं क्वास्ति ? इत्यर्थः । तथाच नित्यानित्यस्य त्रैविध्यानुपपत्तिः; इत्यभिसन्धिः ॥ परिहारस्तु यथाश्रुत एव योज्यः ।,

न च "एतत्पक्षे 'पुराणादिकं येनांशेन नित्यं तं नित्यवर्गे निधाय, येनांशेन अनित्यं तम् अनित्यवर्गे निधाय, अयं विभागः'इतितत्त्वविवेकटीका[४]-विरोधः"इति वाच्यम्; तत्र निरवधित्वसावधित्वरूपनित्यत्वानित्यत्वाभ्यां द्वैविध्यस्य एव उक्तत्वेन, पुराणादेः तदन्तर्भावाऽऽवश्यकत्वात्; इत्यवधेयम् ॥

[ ३७ अ. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-नित्यानित्यत्रैवि--ध्यपरीक्षायाम्–

अ) 'ननु..क्वास्तीति'इत्यस्य व्याख्याने– १) 'कालप्रकृत्योः नित्यानि-

---

३. वर्णादिना ४. पृ. ७०

त्यत्व'ाक्षेपकतया अवतरणम् । २) पदार्थः । ३) अत्र च सकारणं पुराणानाले अग्राह्यता ॥ आ) 'मैवम्..उपपादितमिति'इत्यस्य व्याख्याने– पदार्थः । ]

कालप्रकृत्योः नित्यानित्यत्वम् आक्षिपति **नन्विति** । अत्र काम् प्रकृतौ च; इत्यर्थः । न पुराणानि अपि अत्र ग्राह्याणि, 'अंशांश्यादिभेदस्य तत्र अभावेन 'यस्य उत्पत्त्यादि'इति-उपपादनस्य असम्भवात्; इति ध्येयम् ।

**येदीति**[2] । अत्र 'अंशांशिनोः' इतिकालापेक्षया, 'विकारविकारिणोः' इति प्रकृत्यपेक्षया; अन्यत्र इति तत्त्वविवेकादौ[3] ॥

[ ३८ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्ये–

अ) अनित्यस्य विभागपूर्वकदर्शकतया 'अनित्यं..च संसृष्टम्'इतिमूलस्य अवतरणम् ।

आ) 'मतम् । असंसृष्टञ्च संसृष्टम्'इतिमूलस्य व्याख्याने– १) 'संसृष्ट-असंसृष्ट'पदयोः विग्रहार्थौ । २) सम्भावितत्रैविध्यादिनिरासकतया 'मतम्'इत्यस्य अवतरणम्, तदर्थविवरणस्य वक्ष्यमाणत्वकथनञ्च । ]

**अनित्यं विभज्य दर्शयति 'अनित्यम्'इति ।**

[ १९ त. विषयः– अनित्यद्वैविध्यम् । ]

**अनित्यं द्विविधं मतम् ॥ ८ ॥**

**असंसृष्टञ्च संसृष्टम्**

**सम्यक्सृष्टं = संसृष्टम् । अतथाभूतम् = असंसृष्टम् ।**

**सम्यक्तायाः इयत्ताऽभावात्, त्रैविध्याद्यपि किं न स्यात्? इत्यतः 'मतम्'इत्युक्तम् । तद्वक्ष्यामः ।**

---

१. अत्र नित्यानित्ये काले

२. अयं विषयः ग्रन्थान्तरे नास्ति । ३. श्लो. ११, १२.

१. भ.टि. 'सम्यक्तायामियत्ताऽभावादिति'इति प्रतीकम् ।

२. भ.टि. 'तच्चेति'इति प्रतीकम् ।

[ ३८ स. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे–

अ) मूलस्य व्याख्याने– १) 'च'शब्दसम्बन्धः । २) अध्याहारः । ३) मूलवाक्ययोजना च ।

आ) टीकायाः व्याख्याने– १) 'सम्यक्..असंसृष्टम्'इत्यस्य व्याख्याने– उद्देशक्रमोक्तिपुरःसरं शब्दार्थोक्तिक्रमव्यत्यासप्रयोजनपुरःसरं च 'संसृष्ट'शब्दार्थोक्तितया 'सम्यक्सृष्टं संसृष्टम्'इत्यस्य अवतरणम् । २) 'सम्यक्तायाः..तद्वक्ष्यामः'इत्यस्य व्याख्याने– क) 'सम्यक्तायाः इयत्ताऽभावात्'-इत्यस्य सोपपत्तिकोऽर्थः । ख) 'मतमित्युक्तम्'इत्यस्य व्याख्याने– १. पदार्थः. २. भावश्च । ग) 'तद्वक्ष्यामः'इत्यस्य व्याख्याने– वक्ष्यमाणस्य अर्थस्य तत्स्थलसहितप्रदर्शनञ्च । ]

**अनित्यं द्विविधमिति ।** अत्र 'च'शब्दः 'संसृष्टम्'इत्यनेन सम्बध्यते ।, इति'शब्दः अध्याहार्यः ।; तथाच 'असंसृष्टं संसृष्टं च इति अनित्यं द्विविधम्'इति मूलयोजना ॥

अत्र प्राधान्यात् असंसृष्टस्य प्रथमम् उद्देशः; तथापि अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात्, प्रथमं संसृष्टशब्दार्थम् आह **सम्यक्सृष्टमिति ।**

**सम्यक्ताया इयत्ताऽभावादिति ।** अन्यूनानतिप्रसक्ततया सम्यक्तायाः निर्वक्तुम् अशक्यत्वात् इत्यर्थः ॥ **मतमित्युक्तमिति ।** मतम्= प्रमितम्, इति, उक्तम्; इत्यर्थः । तथाच तत्प्रमाणानुसारेण सम्यक्त्वस्य निर्वक्तुं शक्यत्वात् द्वैविध्यम् एव प्रसिद्धम्; इति भाव; ।,

**तद्वक्ष्याम इति ।** 'नन्वेषां चतुर्विंशतितत्त्वानाम्'इत्यादिना आक्षेपपूर्वकम् साक्षान्मूलरूपस्य नित्यत्वाभावे सति उत्पन्नत्वं = संसृष्टत्वम्, तत्सत्त्वेऽपि उत्पन्नत्वम् असंसृष्टत्वम्'इतिनिर्वक्ष्यामः इत्यर्थः ।

[ ३८ के. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे–

[ ३८ के. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे–

अ) ‘सम्यक्..असंसृष्टम्’इत्यस्य व्याख्याने– ‘अतथाभूतम्’इत्यस्य अर्थः ॥ आ) ‘सम्यक्तायाः..तद्वक्ष्यामः’इत्यस्य व्याख्याने– १) ‘सम्यक्ताया इयत्ताभावात्’इत्यस्य सोपपत्तिकोऽर्थः । २) ‘मतमित्युक्तम्’इत्यस्य अर्थः । ३) ‘तद्वक्ष्यामः’इत्यस्य व्याख्याने– वक्ष्यमाणस्य अर्थस्य तत्स्थलसहितप्रदर्शनम् । ]

अतथाभूतम्= सम्यक्सृष्टं न; इत्यर्थः ।

**सम्यक्ताया इयत्ताऽभावादिति** । अन्यूनानतिरिक्तस्य सम्यक्त्वस्य निर्वक्तुम् अशक्यत्वात् इत्यर्थः ॥ **मतमित्युक्तमिति** । युक्त्या विचार्य सम्यक्ताया निर्वक्तुं शक्यतया द्वैविध्यम् एव सिध्यति; इत्यर्थः ।,

**तद्वक्ष्याम इति** । ‘नन्वेषाम्’इत्यादिना आक्षेपपूर्वकम् ‘साक्षान्मूलरूपस्य नित्यस्य अभावे सति उत्पन्नत्वम् = संसृष्टत्वम्, साक्षान्मूलरूपस्य नित्यस्य सत्त्वेऽपि उत्पन्नत्वम् = असंसृष्टत्वम्’इति वक्ष्यामः; इत्यर्थः ।

[ ३८ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे–

अ) ‘अनित्यं..अनित्यमिति’इत्यस्य व्याख्याने– १) उत्तरवाक्यावतारकतया पदार्थोक्तिसहितमवतरणम् । २) अन्वयार्थश्च ।

आ) ‘सम्यक्सृष्टं..तद्वक्ष्यामः’इत्यस्य व्याख्याने– १) ‘सम्यक्सृष्टम्’-इत्यस्य व्याख्याने – क) उद्देशक्रमनिमित्तोक्तिः । ख) सोपयोग‘संसृष्ट’शब्दार्थोक्तितया ‘सम्यक्सृष्टं..संसृष्टम्’इत्यस्य अवतरणम् । ग) ‘अतथाभूतम्’इत्येतद्घटकपदार्थः । २) ‘सम्यक्ताया..इत्युक्तम्’इत्यस्य व्याख्याने– क) ‘मत’पदवैयर्थ्यशङ्कावारकतया अवतरणम् । ख) पदार्थश्च । ३) ‘तद्वक्ष्यति’इत्यस्य व्याख्याने– क) सप्रयोजन‘मत’पदार्थविवरकतया अवतरणम् । ख) पदार्थश्च । ]

उत्तरवाक्यम् अवतारयति **अनित्यं विभज्य दर्शयति**=निरूपयति इति । असंसृष्टं संसृष्टं च इति अनित्यं द्विविधम्; इत्यर्थः ॥

नसंसृष्टस्य प्राधान्यात् प्रथमम् उद्देशः कृतः । 'असंसृष्ट'शब्दार्थः कः ? इतिजिज्ञासायाम् 'असंसृष्ट'शब्दार्थस्य 'संसृष्ट'ज्ञानाधीनत्वात् 'संसृष्टम्' इति'संसृष्ट'शब्दार्थम् आह **सम्यक्सृष्टमिति** ॥ अतथाभूतम्— सम्यक्सृष्टम्=तथाभूतम्; इत्यर्थः ।

" 'मत'पदं व्यर्थम्" इत्याशङ्क्य अवतारयति **सम्यक्ताया इति** । समीचीनतायाः, इयत्ताऽभावात्= परिमितत्वाभावात्, 'संसृष्टम् अतिसंसृष्टम् ततोऽपि अतिसंसृष्टम् इत्यस्यापि सुवचत्वात्, त्रैविध्याद्यपि= अनित्यस्य त्रिविधत्वम् चातुर्विध्यम् अपि, किं न स्यात् ?, इत्यतः, 'विदुषां सम्मतम्,' इति उक्तम्; इत्यर्थः ।

'न हि प्रतिज्ञामात्रेण अर्थसिद्धिः' इत्यत आह **तदिति** । तत्— अनित्यद्वैविध्यस्य विद्वत्सम्मतत्वम्; इत्यर्थः ।

[ ३८ मु. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे—

अ) 'अनित्यं..नित्यमिति' इत्यस्य व्याख्याने- १) द्विविधशङ्कानिवारकतया अवतरणम् । २) 'अनित्यम्'पदस्य द्वितीयान्तत्वञ्च ॥ आ) सप्रयोजन'संसृष्ट'पदव्याख्यानत्वेन 'सम्यक्सृष्टं संसृष्टम्' इत्यस्य अवतरणम् । ]

'ननु उत्तरमूले 'नित्यं द्विविधं न भवति, किन्तु अनित्यं द्विविधम्' इति असङ्गतम् उच्यते ।, न च 'अनित्यं वस्तु विभज्यते' इति; तथाऽपि 'असंसृष्टं च संसृष्टम्' इत्यस्य वैयर्थ्यम् एव ।'' इत्येताः शङ्काः परिहरन् अवतारयति **अनित्यमिति** । द्वितीयाविभक्तिः इयम् ।

रूढ्या सम्बद्धार्थत्वप्रतीतिं वारयितुं 'संसृष्ट'पदं व्याचष्टे **सम्यक्सृष्टमिति** ।

[ ३८ का. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे— अ) 'अनित्यं..अनित्यमिति' इत्यस्य व्याख्याने— १) 'विभज्य दर्शयति' इत्यस्य पदार्थः । २) पुनरुक्तिपरिहारश्च ।

आ) 'सम्यक्सृष्टं..तद्वक्ष्यामः'इत्यस्य व्याख्याने– १) सप्रयोजन'संसृष्ट'पदार्थोक्तितया 'सम्यक्सृष्टं संसृष्टम्'इत्यस्य अवतरणम् । 'सम्यक्तायाः... इत्युक्तम्'इत्यस्य व्याख्याने– क) 'इयत्ताऽभावात्'इत्यस्य पदार्थः । ख) 'त्रैविध्यादि'इत्यस्य व्याख्याने– १. पदार्थरूपेणत्रैविध्यचातुर्विध्यकल्पनम्; २. भावार्थत्वेन– क. त्रैविध्यादिकल्पने तथाविधवैचित्र्यप्रदर्शनम्; ३. द्वैविध्योक्तिसाधकयोः अनवस्था-लाघवरूपलिङ्गयोः त्रैविध्यादिपक्षेऽपि साम्यता । ग) 'मतमित्युक्तम्'इत्यस्य व्याख्याने– १. 'मतम्'पदार्थः; भावश्च । घ) 'तद्वक्ष्यामः'इत्यस्य द्वेधा व्याख्याने– १. प्रथम व्याख्याने– क. सम्यक्सृष्टत्वाद्यर्थोक्तितया अवतरणम्, ख. भावश्च; २. अन्यव्याख्याने– क. सोपपत्तिकद्वैविध्यप्रमितत्वम्, तस्यैव च वक्ष्यमाणत्वम् । ]

**विभज्य दर्शतीति** । पादद्वयेन विभज्य उत्तरेण निदर्शयति; इत्यर्थः ॥ 'असंसृष्टं निर्दिशति'इत्यादेः अवान्तरवाक्यावतरणत्वात् न पुनरुक्तिः ॥

'असंसृष्ट'पदार्थज्ञानस्य 'संसृष्ट'पदार्थज्ञानाधीनत्वात्, आदौ 'संसृष्ट'-पदार्थम् आह **सम्यगिति** ।

इयत्ता= स्वतोऽधिकसम्यक्त्वराहित्यम्, तदभावात्; अवान्तरवैचित्र्यवत्त्वात् इति यावत् ।,

**त्रैविध्यादीति** । किञ्चित्सम्यक्त्व-अतिसम्यक्त्वरूपप्रकारद्वयविवक्षायां त्रैविध्यम्, ततोऽधिकसम्यक्त्वादिविवक्षायां चाधुर्विध्यादि इत्यर्थः । अयं भावः संसृष्टासंसृष्टयोः उत्पन्नत्वसाम्येऽपि नित्यानित्योपादानकत्ववैचित्र्येण द्वैविध्यवत् नित्योपादानकत्व-नित्योपादानकोपादानकत्व-अनित्योपादानकोपादानकत्वादिवैचित्र्येण त्रैविध्यादिकम् अपि सम्भवति ।, 'प्रकारान्तरसम्भवेऽपि अनवस्थाभयात् द्वैविध्येन अनुगमः कृतः'इति चेत्, तर्हि त्रैविध्येन एव क्रियताम् ।, 'लाघवात्'इति चेत्, तर्हि ऐकविध्यम् एव आस्ताम्; इति ।;

'मतम्'इत्यस्य युक्ति-आगम सम्मतम् इत्यर्थः । तथाच अवान्तरवैचित्र्यज्ञानाय विभागस्य आवश्यकत्वे द्वैविध्योक्तिः एव युक्ता:; लाघवात्, आगमान्तरसिद्धत्वाच्च ।; तेनैव त्रैविध्यादेः असम्भवाच्च; इति भावः ।

---

१. पपादकत्व

ननु किमिदं सम्यक्सृष्टत्वादि, येन द्वैविध्यं सम्मतम्? अत आह **तद्वक्ष्याम इति**। लक्ष्यज्ञानोत्तरम् एव लक्षणस्य सुग्रहत्वात्; इति भावः।, केचित्तु 'सम्यक्तायाः एकविधत्वाभावात् द्वैविध्यानुपपत्तिः'इतिशङ्कायाम्, 'द्वैविध्यं प्रमितम्, एकविधसम्यक्त्वस्य सुवचत्वात्; तच्च वक्ष्यामः'इति परिहारम् आहुः।

[ ३८ भ. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-निरूपणे—

अ) 'सम्यक्सृष्टं..वक्ष्यामः'इत्यस्य व्याख्याने— १) उद्देशाल्लक्षण-लाभोक्तितया 'सम्यक्सृष्टं..असंसृष्टम्'इत्यस्य अवतरणम्। २) 'सम्यक्ताया.. इत्युक्तम्'इत्यस्य व्याख्याने— क) 'सम्यक्ताया..स्यात्'इत्यस्य अर्थः। ख) 'मतमिति'इत्यस्य व्याख्याने-तात्पर्यम्, भावश्च। ३) 'तच्च वक्ष्यामः'इत्यस्य अर्थश्च। ]

'उद्देशेनैव लक्षणं च लब्धम्'इत्याशयेन निर्वक्ति **सम्यगिति**।

**सम्यक्तायामियत्ताभावादिति**। तथाच 'संसृष्टम्, ततोऽप्यधिकसंसृष्टम्, ततोप्यधिकसंसृष्टम्'इत्यादिरूपेण त्रैविध्याद्यपि किं न स्यात्? इत्यर्थः।। **मतमितीति**। मननविषयीकृतम्; युक्तम् इति यावत्।, तथाच सम्यक्तायाम् इयत्तासद्भावात् त्रैविध्यादिकं न सम्भवति; इति भावः।,

**तच्चेति**। द्वैविध्यस्य युक्तत्वम्; 'सूक्ष्मरूपेण नित्यानाम्'इत्यादिना अनुपदम् एव वक्ष्यामः; इत्यर्थः।

[ ३९ टी. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य असंसृष्ट-निर्देशे— असंसृष्टनिर्देशकतया 'असंसृष्टं महानहम्..पञ्च च'इतिमूलस्य अवतरणम्। ]

**तत्र असंसृष्टं निर्दिशति 'असंसृष्टम्'इति**।

---

१. 'द्वैविध्यस्य एवम् उक्तत्वम्; इत्यर्थः। **वक्ष्याम इति**। " 'ननु एषां चतुर्विंशतितत्त्वानाम्'इत्यादिना अनुपदम् एव''इति शेषः''इति ग्रन्थान्तरे।

[ २० त. विषयः– असंसृष्टनिर्देशः ]

असंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ॥१॥

[ ३९ स., के. — × ]

[ ३९ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-असंसृष्ट-निर्देशे–

अ) टीकायाः व्याख्याने– १) 'तत्र..असंसृष्टमिति' इत्यस्य व्याख्याने– क) उत्तरवाक्यावतारकतया अवतरणम्, ख) पदार्थश्च ॥ आ) मूलस्य व्याख्याने– पदार्थः । ]

उत्तरवाक्यम् अवतारयति तत्रेति । असंसृष्टसंसृष्टयोः मध्ये उद्देशानुसारेण संसृष्टं निरूपयति इत्यर्थः ।

महान्= महत्तत्त्वम्, अहम्= अहङ्कारतत्त्वम्, दश खानि = घ्राण-रसन-चक्षुः-त्वक्-श्रोत्र-वाक्-पाणि-पाद-पायु-उपस्थानि दश इन्द्रियाणि, मात्राः= शब्द-स्पर्श-रूप-रस-गन्धाः, पञ्च भूतानि च= पृथिवी-अप्-तेजः-वायु-आकाशानि; इति, समस्तम्, 'असंसृष्टम्' इत्यर्थः ।

[ ३९. मु., का., भ. — × ]

[ ४० टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-संसृष्ट-निर्देशे– संसृष्टनिर्देशकतया 'संसृष्टमण्डं..समस्तम्' इतिमूलस्य अवतरणम् । ]

संसृष्टं निर्दिशति 'संसृष्टम्' इति ।

[ २१ त. विषयः– संसृष्टनिर्देशः । ]

संसृष्टमण्डं तदङ्गं समस्तं सम्प्रकीर्तितम् ॥९ १/२॥

[ ४० स., के. — × ]

[ ४० वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-संसृष्ट-निर्देशे–

अ) टीकायाः व्याख्याने– १) 'अन्यथाऽन्वयभ्रान्तिनिरासार्थकतया 'संसृष्टं..संसृष्टमिति' इत्यस्य अवतरणम् ॥ आ) मूलस्य व्याख्याने– पदार्थः । ]

'पञ्च भूतानि च, ससृष्टम् अण्डम्, तद्गं समस्तं च असंसृष्टम्' इति-एकान्वयभ्रान्तिनिरासाय आह **संसृष्टमिति** ।

अण्डम्= ब्रह्माण्डम्, तदन्तर्गतम्= ब्रह्माण्डान्तर्गतम्, समस्तम् भौतिकं च; संसृष्टम्; इत्यर्थः ।

[ ४० मु., का., भ. — × ]

[ ४१ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्यनिरूपणे-अनित्यद्वैविध्य-समर्थने–

१) द्वैविध्यानुपपत्तिशङ्कायाम्– क) एकदेशेनोत्पत्तिमतां चतुर्विंशतितत्त्वानाम् असंसृष्टत्वाभावः । ख) द्वैविध्ये प्रकारान्तराभावश्च ॥ २) शङ्कानिरसने– क) पूर्वपक्षोक्त'असंसृष्ट'पदार्थ निषेधः; 'असंसृष्ट'पदस्य अभिप्रेतोर्थश्च । ख) ब्रह्माण्डस्य तदन्तर्गतानां च संसृष्टत्वप्रदर्शने– १. एतेषाम् असंसृष्टत्वाभावात् संसृष्टत्वोक्तिः; २. 'असंसृष्ट'पदार्थे 'साक्षान्मूलरूपेण नित्यत्व'विवक्षणात् एतेषु असंसृष्टत्वप्रसक्त्यभावोक्तिः; ३. उक्तार्थत्वे महदादीनां नित्यानित्यत्वशङ्का, तन्निरसनञ्च । ]

**ननु एषां चतुर्विंशतितत्त्वानाम् असंसृष्टत्वं नाम यदि एकदेशेन उत्पत्तिः, तर्हि अनुत्पन्नस्य असत्त्वात् उत्पन्नम् एव तत्त्वम्; तच्च संसृष्टम् एव, इति न द्वैविध्यम्; न च प्रकारान्तरम् अस्ति; इति ॥, मैवम् ।, सूक्ष्मरूपेण नित्यानां महदादीनां प्राकृताद्यंशैः उपचयमात्रं क्रियते इति तानि असंसृष्टानि ।,**

**न च एवं ब्रह्माण्डं तदन्तर्गतानि; इति संसृष्टानि । 'तेषाम् अपि मूलरूपं नित्यम्' इति चेत्; न, साक्षान्मूलरूपस्य विवक्षितत्वात् । एवं सति महदादीनां नित्यानित्यत्वं कथं न स्यात्? इति चेत्; स्यात् एवम् यदि सूक्ष्मरूपे महदादिव्यवहारः स्यात्, किन्तु प्रकृतिः एव सा उच्यते ।**

---

१. मु.टि. प्रतीकम् 'स्यादेतदेवमिति' इति ।

[ ४१ स. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-समर्थने– 'न चैवं...संसृष्टानि'इत्यस्य व्याख्याने– पदार्थः । ]

**ब्रह्माण्डं तदन्तर्गतानीति** । 'इति'शब्दो हेतौ । अतः 'संसृष्टानि'-इति उच्यन्ते; इत्यर्थः ।

[ ४१ के.– × ]

[ ४१ वि. विषयः– अस्वतन्त्रतत्त्व भाव-अनित्यद्वैवि-ध्यसमर्थने–
अ) ननु...असंसृष्टानि'इत्यस्य व्याख्याने– १) 'ननु...अस्तीति'इत्यस्य व्याख्याने– क) अनित्यद्वैविध्यासम्भवशङ्कात्वेन अवतरणम् । ख) ननु...तत्त्वम्'इत्यस्य पदार्थः । ग) 'तच्च..द्वैविध्यम्'इत्यस्य व्याख्याने– १. उक्तार्थस्य प्रकृतसम्बन्धप्रदर्शकतया अवतरणम्; २. पदार्थश्च । घ) 'न च...अस्तीति'इत्यस्य व्याख्याने– १. 'असंसृष्ट'पदस्य अर्थान्तरपरत्वशङ्कानिरासकतया अवतरणम्; २. पदार्थश्च ॥ २) अनित्यद्वैविध्यासम्भवशङ्कापरिहारकतया 'मैवम्..असंसृष्टानि'इत्यस्य व्याख्याने– क) अवतरणम् । ख) पदार्थः ग) उपचेयोपचयसंम्बन्धप्रदर्शनञ्च ।

आ) 'न चैवं..उच्यते'इत्यस्य व्याख्याने– १) 'न चैवं..असंसृष्टानि' इत्यस्य व्याख्याने– क) 'ब्रह्माण्डतदन्तर्गतानामपि असंसृष्टत्व'प्रयुक्तप्राप्त-अनित्यद्वैविध्यासम्भवशङ्कायाः निरासकत्वेन अवतरणम् । ख) पदार्थश्च ॥ २) 'तेषां..विवक्षितत्वात्'इत्यस्य व्याख्याने– क) पुनस्तदसम्भवशङ्कात्वेन 'तेषां..चेत्'इत्यस्य अवतरणम्, पदार्थश्च । ख) तच्छङ्कानिवारकतया 'न..विवक्षितत्वात्'इत्यस्य पदार्थः भावश्च ॥ ३) 'एवं..उच्यते'इत्यस्य व्याख्याने– क) 'महदादेः अनित्यत्वाभाव'शङ्कात्वेन– 'एवं..चेत्'इत्यस्य अवतरणम्, पदार्थश्च ख) शङ्कापरिहारकतया 'स्यात्..उच्यते'इत्यस्य व्याख्याने– १. अवतरणम्; २. 'स्यात्..स्यात्'इत्यस्य पदार्थः; ३. महदादीनां सूक्ष्मरूपस्य व्यवहारप्रकारोक्तितया 'किन्तु..उच्यते'इत्यस्य अवतरणम्, अन्वयः, शेषः, भावश्च । ]

अनित्यस्य द्वैविध्यासम्भवम् आशङ्कते **नन्विति** ।

एषाम्= महदहङ्कारादिचतुर्विंशतितत्त्वानाम्, संसृष्टत्वं नाम– यदि एकदेशेन एव उत्पत्तिः, तर्हि, सर्वस्यापि चतुर्विंशतितत्त्वांशस्य उत्पन्नत्वात्,

अ) टीकायाः व्याख्याने– १) 'अन्यथाऽन्वयभ्रान्तिनिरासार्थकतया 'संसृष्ट..संसृष्टमिति' इत्यस्य अवतरणम्॥ आ) मूलस्य व्याख्याने– पदार्थः । ]

'पञ्च भूतानि च, ससृष्टम् अण्डम्, तद्रं समस्तं च असंसृष्टम्' इति-एकान्वयभ्रान्तिनिरासाय आह **संसृष्टमिति** ।

अण्डम्= ब्रह्माण्डम्, तदन्तर्गतम्= ब्रह्माण्डान्तर्गतम्, समस्तम् भौतिकं च; संसृष्टम्; इत्यर्थः ।

[ ४० मु., का., भ. — × ]

[ ४१ टी. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्यनि-रूपणे-अनित्यद्वैवि॰ध्य-समर्थने–

१) द्वैविध्यानुपपत्तिशङ्कायाम्– क) एकदेशेनोत्पत्तिमतां चतु-र्विंशतितत्त्वानाम् असंसृष्टत्वाभावः । ख) द्वैविध्ये प्रकारान्तराभावश्च ॥ २) शङ्कानिरसने– क) पूर्वपक्षोक्त'असंसृष्ट'पदार्थ निषेधः; 'असंसृष्ट'पदस्य अभिप्रेतोर्थश्च । ख) ब्रह्माण्डस्य तदन्तर्गतानां च संसृष्टत्वप्रदर्शने– १. एते-षाम् असंसृष्टत्वाभावात् संसृष्टत्वोक्तिः; २. 'असंसृष्ट'पदार्थे 'साक्षान्मूल-रूपेण नित्यत्व'विवक्षणात् एतेषु असंसृष्टत्वप्रसक्त्यभावोक्तिः; ३. उक्तार्थत्वे महदादीनां नित्यानित्यत्वशङ्का, तन्निरसनञ्च । ]

**ननु एषां चतुर्विंशतितत्त्वानाम् असंसृष्टत्वं नाम यदि एकदेशेन उत्पत्तिः, तर्हि अनुत्पन्नस्य असत्त्वात् उत्पन्नम् एव तत्त्वम्; तच्च संसृष्टम् एव, इति न द्वैविध्यम्; न च प्रकारान्तरम् अस्ति; इति ॥, मैवम् ।, सूक्ष्मरूपेण नित्यानां महदादीनां प्राकृताद्यंशैः उपचयमात्रं क्रियते इति तानि असंसृष्टानि ।,**

**न च एवं ब्रह्माण्डं तदन्तर्गतानि; इति संसृष्टानि । 'तेषाम् अपि मूलरूपं नित्यम्' इति चेत्; न, साक्षान्मूलरूपस्य विवक्षितत्वात् । एवं सति महदादीनां नित्यानित्यत्वं कथं न स्यात्? इति चेत्; स्यात् एवम् यदि सूक्ष्मरूपे महदादिव्यवहारः स्यात्, किन्तु प्रकृतिः एव सा उच्यते ।**

१. मु.टि. प्रतीकम् 'स्यादेतदेवमिति' इति ।

[ ४१ स. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-समर्थने- 'न चैवं...संसृष्टानि' इत्यस्य व्याख्याने- पदार्थः । ]

ब्रह्माण्डं तदन्तर्गतानीति । 'इति' शब्दो हेतौ । अतः 'संसृष्टानि'-इति उच्यन्ते; इत्यर्थः ।

[ ४१ के.- × ]

[ ४१ वि. विषयः- अस्वतन्त्रतत्त्व भाव-अनित्यद्वैवि-ध्यसमर्थने-

अ) ननु...असंसृष्टानि' इत्यस्य व्याख्याने- १) 'ननु...अस्तीति' इत्यस्य व्याख्याने- क) अनित्यद्वैविध्यासम्भवशङ्कात्वेन अवतरणम् । ख) ननु... तत्त्वम्' इत्यस्य पदार्थः । ग) 'तच्च...द्वैविध्यम्' इत्यस्य व्याख्याने- १. उक्तार्थस्य प्रकृतसम्बन्धप्रदर्शकतया अवतरणम्; २. पदार्थश्च । घ) 'न च... अस्तीति' इत्यस्य व्याख्याने- १. 'असंसृष्ट' पदस्य अर्थान्तरपरत्वशङ्कानिरासकतया अवतरणम्; २. पदार्थश्च ॥ २) अनित्यद्वैविध्यासम्भवशङ्कापरिहारकतया 'नैवम्..असंसृष्टानि' इत्यस्य व्याख्याने- क) अवतरणम् । ख) पदार्थः ग) उपचेयोपचयसम्बन्धप्रदर्शनञ्च ।

आ) 'न चैवं..उच्यते' इत्यस्य व्याख्याने- १) 'न चैवं..असंसृष्टानि' इत्यस्य व्याख्याने- क) 'ब्रह्माण्डतदन्तर्गतानामपि असंसृष्टत्व' प्रयुक्तप्राप्त-अनित्यद्वैविध्यासम्भवशङ्कायाः निरासकत्वेन अवतरणम् । ख) पदार्थश्च ॥ २) 'तेषां..विवक्षितत्वात्' इत्यस्य व्याख्याने- क) पुनस्तदसम्भवशङ्कात्वेन 'तेषां..चेत्' इत्यस्य अवतरणम्, पदार्थश्च । ख) तच्छङ्कानिवारकतया 'न..विवक्षितत्वात्' इत्यस्य पदार्थः भावश्च ॥ ३) 'एवं..उच्यते' इत्यस्य व्याख्याने- क) 'महदादेः अनित्यत्वाभाव' शङ्कात्वेन- 'एवं..चेत्' इत्यस्य अवतरणम्, पदार्थश्च; ख) शङ्कापरिहारकतया 'स्यात्..उच्यते' इत्यस्य व्याख्याने- १. अवतरणम्; २. 'स्यात्..स्यात्' इत्यस्य पदार्थः; ३. महदादीनां सूक्ष्मरूपस्य व्यवहारप्रकारोक्तितया 'किन्तु..उच्यते' इत्यस्य अवतरणम्, अन्वयः, शेषः, भावश्च । ]

अनित्यस्य द्वैविध्यासम्भवम् आशङ्कते नन्विति ।

एषाम्= महदहङ्कारादिचतुर्विंशतितत्त्वानाम्, संसृष्टत्वं नाम- यदि एकदेशेन एव उत्पत्तिः, तर्हि, सर्वस्यापि चतुर्विंशतितत्त्वांशस्य उत्पन्नत्वात्,

अनुत्पन्नस्य= अनुत्पन्नांशस्य अभावात्, तत्त्वम्— महदादितत्त्वम्, उत्पन्नम्, एव = न तु अनुत्पन्नम्; इत्यर्थः ॥ अस्तु एवम्; तथाऽपि किं प्रकृतेः? इत्यत आह तच्चेति। तत्— उत्पन्नम्, तु, तत्त्वम्, संसृष्टम् एव; इति हेतोः, अनित्यस्य, द्वैविध्यम्, नास्ति; इत्यर्थः ॥ ननु असंसृष्टत्वं नाम "एकदेशेन उत्पत्तिः" न भवति, किन्तु धर्मान्तरम्; इत्यत आह न चेति। उक्तप्रकारात् अन्यः प्रकारः = प्रकारान्तरम्। अनित्यद्वैविध्योपपादकम्, प्रकारान्तरम्= रीत्यान्तरम्, च, नास्ति; इत्यर्थः ॥ 'इति' शब्दः शङ्कासमाप्तिपरः।

परिहरति मैवमिति।

सूक्ष्मरूपेण= अनुपचितरूपेण, नित्यानाम्= उत्पत्तिरहितानाम्, महदादीनाम्= महदहङ्कारादिचतुर्विंशतितत्त्वानाम्, प्राकृताः= प्रकृतिसम्बन्धिनः 'आदि'पदोक्ताः महत्तत्त्वादिसम्बन्धिनश्च ये अंशाः तैः, उपचयमात्रम्= स्थूलमात्रम्, क्रियते, न तु तेषां सर्वेण रूपेण उत्पत्तिः क्रियते, इति हेतोः, तानि— महदादिचतुर्विंशतितत्त्वानि, असंसृष्टानि; इत्यर्थः। 'प्रकृत्यंशैः महतः उपचयः क्रियते; महत्तत्त्वांशैः अहङ्कारस्य उपचयः क्रियते;' इत्यादि अनुसन्धेयम्॥

ब्रह्माण्डतदन्तर्गतानाम् अपि एवंविधत्वे न अनित्यस्य द्वैविध्यं सम्भवति; इत्यत आह न चैवमिति। ब्रह्माण्डतदन्तर्गतानि, एवम्— महदादिवत् स्वरूपेण अनुत्पन्नत्वे सति उपचितरूपेण उत्पत्तिमन्ति, न च, भवन्ति; इति हेतोः, संसृष्टानि; इत्यर्थः।

पुनरपि अनित्यद्वैविध्यासम्भवम् आशङ्कते तेषामपीति। ब्रह्माण्डतदन्तर्गतानां कार्यद्रव्याणाम्, अपि, मूलरूपम्= सूक्ष्मरूपम् आदिकारणरूपं वा, नित्यम्— प्रकृतित्वात् नित्यं भवति; इत्यर्थः। तथाच मूलरूपेण अनुत्पन्नत्वे सति रूपान्तरेण अनुत्पन्नत्वरूपम् असंसृष्टत्वम् ब्रह्माण्डादौ अपि अस्ति; इति भावः।

**साक्षान्मूलरूपस्येति** । महदादिचतुर्विंशतितत्त्वानां साक्षान्मूलरूपस्य, नित्यत्वेन, विवक्षितत्वात्= अभिप्रेतत्वात्; इत्यर्थः । ब्रह्माण्डतदन्तर्गतानां महदादिकार्यद्रव्याणां साक्षान्मूलरूपं न नित्यम्, इति तेषां संसृष्टत्वम्; इति भावः ।

'तर्हि महदादितत्त्वम् अनित्यं न स्यात्'इतिभावेन शङ्कते **एवं सतीति** । महदादिचतुर्विंशतितत्त्वानां साक्षान्मूलरूपस्य नित्यत्वे सति; इत्यर्थः ।,

परिहरति **स्यादेवमिति** ।। ।। यदि, सूक्ष्मरूपे= महदादिचतुर्विंशतितत्त्वानां साक्षान्मूलरूपे, महदादीनाम्= महदादिपदानाम् व्यवहारः= प्रयोगः, स्यात्; तर्हि, एवं स्यात् → महदादिचतुर्विंशतितत्त्वानां नित्यानित्यत्वं स्यात्; इत्यर्थः ।। तर्हि महदादितत्त्वानां सूक्ष्मरूपम् अनुपचितरूपं कथं व्यवह्रियते? इतिजिज्ञासायाम् आह **किन्तु**=परन्तु, **प्रकृतिरेवेति** । महदादीनां यत् सूक्ष्मरूपम्, सा, प्रकृतिः, एव, उच्यते । 'विद्वद्भिः'इति शेषः । यत्र अनुपचितरूपे[1] अविदुषां महदादिशब्दप्रयोगः, तत् च नित्यम् एव; इति भावः ।

[ ४१ मु. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-समर्थने- अ) 'एवं..उच्यते'इत्यस्य व्याख्याने- १) 'एवं..चेत्'इत्यस्य पदार्थः २) 'स्यात्..उच्यते'इत्यस्य अभिप्रायश्च । ]

**एवं सतीति** । स्वरूपेण उत्पत्त्याद्यभावेऽपि उपचितांशस्य उत्पत्त्यादिमत्त्वे सति, इत्यर्थः; नित्यानित्यत्वम्= नित्यानित्यत्वव्यवहारविषयः, कथं न स्यात् = स्यात् एव; इत्यर्थः ।

**स्यादेतदेवमिति** । एवञ्च 'यत्'शब्दवाच्यं साक्षान्मूलरूपं नित्यम् इतरत् आगमापायि च तत् नित्यानित्यम्; इति हि लक्षणम् । **अतः** मह-

१. यत्रोपचित

दत्त्वे साक्षान्मूलभूतस्य रजसः नित्यत्वेऽपि, महत्तत्त्वशब्दवाच्यत्वाभावात्, तस्य उक्तप्रसङ्गः निरस्तः ।

[ ४१ का. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-समर्थने—

अ) 'ननु..असंसृष्टानि' इत्यस्य व्याख्याने— १) 'ननु..अस्तीति' इत्यस्य व्याख्याने= य) द्वैविध्यानुपपत्तिशङ्कात्वेन अवतरणम् । ख) 'चतुर्विंशति'-पदस्य 'महानहम्' इत्यादिपदानां सामानाधिकरण्यभ्रमवारणार्थकत्वम् । ग) 'एकदेशेन..तत्त्वम्' इत्यस्य पदार्थः, तात्पर्यञ्च । घ) 'न च..अस्तीति' इत्यस्य व्याख्याने— 'प्रकारान्तरेण द्वैविध्योपपत्ति' शङ्कानिरासकतया अवतरणम्, भावश्च ॥ २) द्वैविध्यानुपपत्तिशङ्कानिरासकतया 'मैवम्..असंसृष्टानि' इत्यस्य व्याख्याने— पदार्थः, भावश्च ।

आ) 'तेषाम्..उच्यते' इत्यस्य व्याख्याने— क) 'ब्रह्माण्डादीनामपि असंसृष्टत्व' शङ्कात्वेन 'तेषां..चेत्' इत्यस्य— अवतरणम्, पदार्थः, भावश्च । ख) एतच्छङ्कापरिहारकतया= 'न..विवक्षितत्वात्' इत्यस्य व्याख्याने— १. अध्याहारः; २. भावः; ३. 'साक्षान्नित्योपादानकत्वम्' इत्यस्य स्पष्टीकरणम्, तस्य ब्रह्माण्डादिष्वभावश्च ॥ २) 'एवं..उच्यते' इत्यस्य व्याख्याने— क) शङ्कामूलप्रदर्शनपुरःसरं शङ्कात्वेन 'एवं..चेत्' इत्यस्य— १. अवतरणम्; भावश्च । ख) शङ्कानिरासकतया 'स्यात्..उच्यते' इत्यस्य व्याख्याने— १. 'स्यात्..स्यात्' इत्यस्य भावः; २. 'किन्तु..उच्यते' इत्यस्य व्याख्याने— क. महदादिसूक्ष्मस्य नित्यानित्यत्वाभाव' शङ्कानिवारकतया अवतरणम्; ख. भावश्च । ]

उक्तद्वैविध्यानुपपत्तिम् आशङ्कते **नन्विति** ।

अत्र यद्यपि तत्त्वविवेकाद्युक्तगुणत्रयादितत्त्वान्तरम् अपि सङ्ग्राह्यम् एव, तथाऽपि 'महानहम्' इत्यादेः सामानाधिकरण्यभ्रमेण न्यूनसङ्ख्याप्रतीतिव्यवच्छेदार्थम् एव 'चतुर्विंशति' ग्रहणम्; इति मन्तव्यम् ॥ **एकदेशेनेति** । एकदेशेनैव इत्यर्थः; स्वरूपेण उत्पत्तिशून्यत्वे सति एकदेशेन उत्पत्तिमत्त्वम्; इति यावत् ।, अनुत्पन्नस्य= स्वरूपेण उत्पत्तिशून्यस्य, असत्त्वात्= एकदेशेन

उत्पत्त्यसत्त्वात् तददर्शनात् इति यावत्; स्वरूपेण उत्पन्नम् एव, महदादि, तत्त्वम्; इत्यर्थः ।, तत् च = स्वरूपेण उत्पन्नं च, संसृष्टम्[1] एव; तत्त्वस्यैव, संसृष्टरूपत्वात्; इति भावः ॥ अस्तु तर्हि सम्यक्त्वम् अतिशयविशेषः; तथाच अतिशयेन उत्पन्नं संसृष्टम्, अतथाभूतम् असंसृष्टम् इति द्वैविध्योपपत्तिः; इत्यत आह **न चेति** । अतिशयविशेषे मानाभावात् इति भावः ।

'सूक्ष्म'इति स्वरूपकथनम्; उपादानरूपेण इत्यर्थः । प्राकृताद्यंशैः= प्रकृतिगुणत्रयाद्यंशैः, उपचयः= स्थूलरूपनिष्पत्तिः न तु उपादानरूपेणापि, 'अनित्यानाम् एव उत्पत्तिः'इति 'मात्र'ार्थः ॥ तथाच नित्योपादानकत्वम्= असंसृष्टत्वम्, अतथाभूतत्वं च= संसृष्टत्वम्; इति भावः ॥

एवं सति ब्रह्माण्डादीनाम् अपि असंसृष्टत्वम् एव स्यात्; इत्याशङ्कते **तेषामिति** । मूलरूपम्= उपादानम्; कार्यमात्रस्य साक्षात् परम्परया वा प्रकृत्युपादानकत्वात् इति भावः ॥ **विवक्षितत्वादिति** । 'सूक्ष्मदेशेन'इति आदिः । तथाच साक्षान्नित्योपादानकत्वम् असंसृष्टत्वम्, अतथाभूतत्वम् एव च संसृष्टत्वम्; इति भावः । साक्षान्नित्योपादानकत्वं च सोपादानानुपादान-भूतनित्योपादानकत्वम्; न तु अनित्यानुपादानकत्वे सति नित्योपादानकत्वम्, महदादीनाम् अनित्यांशैः अपि उपचयात् । ब्रह्माण्डादीनां च मूलभूतं नित्यं तदुपादानभूतम् एव; इति न अतिप्रसङ्गः ।

महदादिसूक्ष्मस्य महदादित्वं मन्वानः शङ्कते **एवं सतीति** । महदादीनां सूक्ष्मरूपेण नित्यत्वे महदादिसूक्ष्माणां महदादिरूपेण नित्यानित्यत्त्वं स्यात्, तद्रूपेण पूर्वोक्तनित्यत्वानित्यत्वयोः अभावात्, इति भावः ॥ ॥ **स्यादेवमिति** । तथाच महदादिरूपत्वाभावात् एव न उक्तदोषः इति भावः ॥ ननु एवं महदादिसूक्ष्मस्य[2] महदादिरूपत्वाभावात् एव उक्तदोषापत्तिः; इत्या-

१. 'सृष्टम्'इत्येकत्र २. 'महदादिसूक्ष्मस्य यथोक्तनित्यानित्यानन्तर्गतस्य आधिक्यापत्तिः'इति प्रायःपाठः ।

शङ्क्य आह **किन्त्विति** । तथाच तस्य प्रकृतिरूपेण नित्यानित्यत्वम्; इति भावः ।

[ ४१. म. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्यद्वैविध्य-समर्थने–

अ) 'ननु..असंसृष्टानि' इत्यस्य व्याख्याने– १) 'प्रकारान्तरेण द्वैविध्यायुक्तत्व' शङ्कात्वेन 'ननु.अस्तीति' इत्यस्य अवतरणम् । २) 'मैव..असंसृष्टानि' इत्यस्य व्याख्याने– क) भावोक्तिपुरःसरं समाधायकतया 'सूक्ष्मरूपेण..असंसृष्टानि'-इत्यस्य अवतरणम्, सूक्ष्मरूपेण' इत्यस्य अर्थश्च । ख) 'प्राकृताद्यंशै' इत्यस्य व्याख्याने– उपचयक्रमबोधनम्, तस्य भागवततात्पर्योक्तित्वञ्च । ग) 'उपचयमात्रम्' इत्यस्य भावश्च ।

आ) 'न चैवं..उच्यते' इत्यस्य व्याख्याने– १) 'नचैवं..संसृष्टानि'-इत्यस्य व्याख्याने– अध्याहारः । २) 'तेषां..विवक्षितत्वात्' इत्यस्य व्याख्याने– क) पुनर्द्वैविध्यानुपपत्तिशङ्कात्वेन 'तेषां..चेत्' इत्यस्य अवतरणम् । ख) 'न साक्षात्..विवक्षितत्वात्' इत्यस्य व्याख्याने– अर्थः, भावश्च । ३) एवं..उच्यते' इत्यस्य व्याख्याने– क) 'एवं सति' इत्यस्य अर्थः । ख) 'यदि..उच्यते' इत्यस्य भावोक्तिपुरःसरम् अवतरणम् । ग) तात्पर्यतः संसृष्टासंसृष्टतत्त्वलक्षणोक्तिता । ]

प्रतिज्ञाऽनुसारेण द्वैविध्यस्य युक्तत्वं प्रदर्शयितुं प्रकारान्तरेण आशङ्कते **नन्विति** ।

'प्रकारान्तरम् एव अस्ति' इति भावेन समाधत्ते **सूक्ष्मरूपेणेत्यादिना** । मूलरूपेण इत्यर्थः ॥ **प्राकृताद्यंशैरिति** । महत्तत्त्वस्य प्राकृतांशैः उपचयः, अहङ्कारतत्त्वस्य महत्तत्त्वांशैः उपचयः, इत्यादिरूपेण उपचयक्रमः बोध्यः । तथा हि उक्तं तृतीयस्कंधतात्पर्ये ॥ **उपचयमात्रमिति** । यथा उपवासादिना कृशाङ्गस्य पयोघृतादिसेवनेन अवयवोपचये जाते न तदा तस्य उत्पन्नत्वव्यवहारः, स्वरूपलाभलक्षणमुख्योत्पत्त्यभावात्; तद्वत् अत्रापि; इति भावः ।[1]

१. 'तथा..अत्रापीति भावः' इति ग्रन्थान्तरे नास्ति ।

**न चैवमिति** । 'किन्तु मूलरूपेणापि जनिमन्ति, स्वयम् अपि उपचयादिमन्ति;'[2]इत्यपि ग्राह्यम् ।

'सर्वेषां प्रकृतिकार्यत्वात्, तस्याश्च नित्यत्वात्, संसृष्टानाम् अपि मूलरूपं नित्यम् एव; इति पुनर्द्वैविध्यापत्तिः'इत्याशङ्कते **तेषामपीति** ।

**साक्षादिति** । 'सूक्ष्मरूपेण नित्यानाम्'इत्यत्र 'सूक्ष्मरूप'पदेन साक्षादुपादानकारणस्य विवक्षितत्वात्; इत्यर्थः । [3]तथाच न ब्रह्माण्डादीनां साक्षादुपादानकारणं नित्यम्, इति न तेषाम् असंसृष्टत्वप्रसक्तिः; इति भावः ।

**एवं सतीति** । 'सूक्ष्मरूपेण नित्यत्वम्, उपचयरूपेण अनित्यत्वम्'-इत्यङ्गीकारः; इत्यर्थः ।

'यस्य यच्छब्देन व्यवहारः तस्य नित्यत्वे अनित्यत्वेऽपि वा तच्छब्दव्यवहारलोपो न चेत्, तदेव नित्यानित्यत्वम् उच्यते; न च एवं महदादि;' इतिभावेन समाधत्ते **यदीति** । [4]तथाच 'येषां प्रकृतिसूक्ष्माण्येव साक्षादुपादानानि, तानि असंसृष्टानि; येषां तु विकृतान्येव उपादानानि, तानि, संसृष्टानि;'इति असंसृष्टसंसृष्टतत्त्वलक्षणम् उदितं भवति ।

[ ४२ टी. विषयः- अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-'असंसृष्ट'निर्देशपरीक्षायाम्-

अ) 'सम्प्रकीर्तितम्'इतिमूलस्य व्याख्याने- १) महदादेः असंसृष्टत्वानङ्गीकर्तॄणां प्रमाणविरुद्धत्वदर्शनार्थकतया अवतरणम् । २) तत्प्रमाणानाम् अन्यत्र द्रष्टव्यत्वम्; अत्र तदनुदाहरणस्य प्रयोजनञ्च ॥ ]

**केचित् महदादिस्वरूपम् एव न अभ्युपगच्छन्ति, दूरेण उक्तं विशेषम्; तेषाम् अतिबहुतराऽऽगमविरोधं दर्शयितुं 'सम्प्रकीर्तितम्' इत्युक्तम् ॥ आगमाश्च अन्यत्र द्रष्टव्याः; विस्तरभिया न इह उदाह्रियन्ते ॥**

---

२. इत्यर्थः । ३. 'तथाच..प्रसक्तिरिति भावः'इति ग्रन्थान्तरे नास्ति ।
४. 'तथाच..उदितं भवति'इति ग्रन्थान्तरे नास्ति ।

[ ४२ स. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-'असंसृष्ट' निर्देशपरीक्षायाम्– 'बहुतरागमविरोधम्'इत्यस्य भावः ॥ ]

**बहुतराऽऽगमविरोधमिति** । आगमबहुत्वद्योतनाय एव 'सम्, प्र'-इति उपसर्गद्वयम्; इति भावः ॥

[ ४२ के. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतनविरोधात्'इत्यस्य भावः ॥ ]

**बह्वागमविरोधादिति** । आगमबहुत्वज्ञापनाय 'सम्, प्र'इति उपसर्गद्वयम्; इति भावः ॥

[ ४२ वि. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-'असंसृष्ट'-निर्देशपरीक्षायाम्–

अ) 'केचित्...उदाह्रियन्ते'इत्यस्य व्याख्याने– १) 'सम्प्रकीर्तितम्'-इतिपदवैयर्थ्यनिरासकतया 'केचित्...इत्युक्तम्'इत्यस्य अवतरणम्, पदार्थश्च । २) उक्तार्थगत-आगमविषयकजिज्ञासापूरकतया 'आगमाश्चान्यत्र द्रष्टव्याः'इत्यस्य अवतरणम्, पदार्थश्च । ३) तदागमानाम् अत्रानुदाहरणनिमित्तोक्तितया 'विस्तर...उदाह्रियन्ते'इत्यस्य अवतरणम्, पदार्थश्च ॥ ]

" 'सम्प्रकीर्तितम्'इतिपदं व्यर्थम्' "इत्याशङ्क्य अवतारयति **केचिदिति** । दूरेण उक्तं विशेषम् = महदादिचतुर्विंशतितत्त्वानाम् असंसृष्टत्व-रूपञ्च विशेषम् न अङ्गीकुर्वन्ति; इत्यर्थः । तेषाम् वादिनाम्,अतिबहुतराऽऽगमविरोधम्, दर्शयितुम्; सम्प्रकीर्तिम्== सम्यक्=अतिशयेन प्रकर्षेण=बहुधा कीर्तितम्=आगमैः उक्तम्; इत्यर्थः ॥

ते च आगमाः के? इतिजिज्ञासायाम् आह **आगमाश्चेति** । महदहङ्कारादिचतुर्विंशतितत्त्वप्रतिपादकाऽऽगमाः तु, अन्यत्र= भागवतादिग्रन्थेषु, उपन्यस्ताः, द्रष्टव्याः= अवलोकनीयाः; इत्यर्थः ।

भवद्भिः ते तु कुतो न उ[illegible]ताः? इत्यत आह **विस्तरभयादिति** । ग्रन्थगौरवभयात्, इह प्रकरणे, उपन्यस्यन्ते; इत्यर्थः ॥

[ ४२ मु. → × ]

[ ४२ का. विषयः– अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-'असंसृष्ट-निर्देशपरीक्षा, एतट्टिप्पण्याः उपसंहारश्च । तत्र

अ) परीक्षायाम्– 'केचित्...उदाह्रियन्ते'इत्यस्य व्याख्याने– १) 'केचित्...इत्युक्तम्'इत्यस्य व्याख्याने– क) 'केचित्...विशेषम्'इत्यस्य पदार्थः । ख) 'सम्, प्र'इत्युपसर्गार्थोक्तितया 'अतिबहुतर'इत्यस्य अवतरणम्, अर्थश्च । २) 'आगमाश्चान्यत्र द्रष्टव्याः'इत्यस्य व्याख्याने– कतिपयाऽऽगम-प्रदर्शनम् ।

आ) एतट्टिप्पण्याः उपसंहारे– १) अस्याः टिप्पण्याः विनियोगः । २) अन्त्यमङ्गलाचरणश्च ॥ ]

तार्किकाद्याः तु ।, विशेषम्= महदादीनाम् असंसृष्टत्वरूपम्, न तु संसृष्टासंसृष्टभेदम्, इत्यर्थः; द्व्यणुकादेः असंसृष्टत्वस्य त्र्यणुकादेश्च संसृष्ट-त्वस्य तैः अपि अङ्गीकारात् । स्वरूपमात्रकल्पनाऽपेक्षया गौरवाधिक्यसूचनाय 'दूरेण'इत्युक्तम्; अत्यन्तम् इत्यर्थः ।

'सम्, प्र'इत्युपसर्गार्थम् आह **अतिबहुतरेति** । 'निरवकाशबहुतर-त्वाभ्यां प्रबलभूत'इत्यर्थः ।

आगमाः च, अन्यत्र उदाहृताः–

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥'[1]

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।'[2]

इत्यादयः द्रष्टव्याः ॥

---

१. गीता १३.५.   २. काठकोप १–३–११

इति श्रीमदुपाध्यायकृता भगवतस्सदा[३] ।
तत्त्वसङ्ख्यानतात्पर्यपञ्चिकाऽस्तु प्रसत्तये ॥
दुरन्तदुर्मतध्वान्तध्वंसकृन्मध्वभास्करः ।
बलित्थेत्यादिवेदोक्तगुणः प्रीतोऽस्तु मे सदा ॥

इति श्रीकाशितिम्मणाचार्यकृततत्त्वसङ्ख्यानटिप्पणम् समाप्तम् ।

॥ श्रीमध्वान्तर्गतवेदव्यासः प्रीयताम् ॥

[ ४२ भ. विषयः— अस्वतन्त्रतत्त्व-भाव-अचेतन-अनित्य-असंसृष्ट-निर्देशपरीक्षायाम्—

अ) 'केचित्..उदाह्रियन्ते'इत्यस्य व्याख्याने— १) 'केचित् इत्युक्तम्' इत्यस्य व्याख्याने- क) 'केचित्, उक्तं विशेषम्'इत्येतयोः अर्थौ । ख) 'सम्प्रकीर्त्तितमित्युक्तम्'इत्यस्य व्याख्याने— १. संसृष्टवत् असंसृष्टेऽपि 'सम्प्रकीर्तितम्'इत्यस्य अन्वेतव्यता; २, उपसर्गद्वयार्थश्च ॥ २) आगमाश्च उदाह्रियन्ते'इत्यस्य व्याख्याने- क) 'आगमाश्चान्यत्र द्रष्टव्याः'इत्यस्य व्याख्याने— आगमप्रदर्शनम् । ख) 'विस्तरः उदाह्रियन्ते'इत्यस्य व्याख्याने भावार्थश्च ॥ ]

केचित्— तार्किकादयः ॥ उक्तं विशेषमिति । सूक्ष्मरूपेण नित्यत्वम् प्राकृताद्यंशैः उपचयमात्रवत्त्वम्[१]; सूक्ष्मरूपस्य साक्षादुपादानत्वम्, सूक्ष्मरूपे महदादिव्यवहाराभावः; इत्येवंरूपम् इत्यर्थः ।,

**सम्प्रकीर्तितमित्युक्तमिति** । 'अण्डादिकं संसृष्टं सम्प्रकीर्तितम्'इतिवत् 'महदादिकम् असंसृष्टं सम्प्रकीर्तितम्'इत्यपि अन्वेतव्यम्; इत्याशयः ॥ 'सम्, प्र'इति-उपसर्गद्वयार्थः 'अतिबहुतरं'इति ॥

**आगमश्चान्यत्रेति** । भागवततृतीयस्कन्धादौ—

'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥'

---

३. 'भागवतः सदा'इत्येकत्र ।

१. 'मात्रत्वम्'इत्येकत्र

इत्यादयः द्रष्टव्याः; इत्यर्थः ॥ **विस्तरभयादिति ।** नित्यादिसद्भावे 'नित्यावेदाः समस्ताश्च'[2]इत्यादीनि यथा कथञ्चित् उदाहृतानि, न तथा अत्र उदाहर्तुं शक्यम्, अतिबहुतराऽऽगमविरोधस्य अनवभासप्रसङ्गात्; किन्तु बहूनि एव उदाहर्तव्यानि ।, ततश्च ग्रन्थबहुत्वाऽऽपत्त्या कृतमप्यकृतप्रायं भवेत्; 'नातिविस्तरम्'इतिप्रतिज्ञाऽपि भज्येत ।, अतः तद्भयात् न उदाह्रियन्ते; इति भावः । अत एव 'लेशतो दर्शयिष्यामः'इति पूर्वम् उक्तम्; इति बोध्यम् ॥

[ ४३ **टी.** विषयः– समस्तस्य अस्वतन्त्रतत्त्वस्य स्वतन्त्रतत्त्वाधीनत्वनिरूपणे–

अ) 'सृष्टिः..समस्तस्य'इतिमूलस्य व्याख्याने– १) 'अस्वतन्त्रस्य सर्वविषयक-आयत्तप्रदर्शकतया अवतरणम् ॥ २) पदार्थः, सम्बन्धः, शेषश्च ।

आ) 'समासव्यासयोगतः'इत्यस्य व्याख्याने– १) 'उक्तव्याख्यानस्य पूर्वविरुद्धत्व'निरासार्थकतया अवतरणम् । २) विग्रहार्थौ । ३) अभिप्रायः । ४) तत्त्वभेदेन सृष्ट्यादेः प्रदर्शनञ्च ।

इ) 'एव'पदकृत्यत्वेन– १) उक्तार्थवैपरीत्यप्रतीतिनिरासार्थकतया 'एव'पदावतरणम् । २) प्रतीतार्थस्य अमुख्यता । ३) विष्णोरेव सर्वेश्वरत्वञ्च ।

ई) तत्त्वसङ्ख्यानटीकायाः समाप्तिश्च ॥ ]

**यदि इदं विष्णुव्यतिरिक्तं भावाभावादिभेदभिन्नं जगत् अस्वतन्त्रम्, तर्हि कस्मिन् आयत्तम्? कस्मिन् च विषये? इति-आकाङ्क्षायाम् आह 'सृष्टिः'इति ।**

[ २२/१ त. विषयः– विष्णोरेव सर्वसृष्ट्यादिमुख्यकारणता । ]

# सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ॥१०॥
# बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।
# विष्णुनाऽस्य समस्तस्य

---

१. भागवत ३–२७–१२ श्रीधरीपाठे ३–२६–११

२. वि.त.नि.पृ. २४३ इत्यत्रोदाहृतं ब्रह्माण्डवाक्यम् ।

नियमः= व्यापारेषु प्रेरणम् । बन्धः प्रकृतेः । मोक्षः बन्धात् । आवृतिज्योतिषी= बाह्यतमःप्रकाशौ । 'एव'कारः 'विष्णुना' इत्यनेन सम्बध्यते । अस्य– समस्तस्य अस्वतन्त्रस्य 'भवन्ति' इति शेषः ।

ननु एतत् पूर्वविरुद्धम्– समस्तस्य सृष्टिसंहारोक्तौ नित्यत्वोक्तिविरोधः, अचेतनस्य बोधविरोधः, इत्यादि; तत्र उक्तम् 'समास'-इति ।

[ २२/२ त. उक्तार्थघटनोपायकथनम् । ]

**समासव्यासयोगतः ॥११॥**

समासः= सङ्क्षेपः, व्यासः= विस्तारः; तौ एव योगौ=उपायौ, उक्तार्थघटनायाम्[2]; ततः । इदम् उक्तं भवति– उक्तधर्मेषु यत्र तत्त्वे अल्पीयांसः सम्भवन्ति तत्र तावन्तः विष्णवधीनाः ज्ञातव्याः; यत्र तु बहवः तत्र तावन्तः; सर्वथा स्वरूपस्वभावौ अस्य तदधीनौ इति । तत्र स्थितिनियमौ सर्वस्य, सृष्टिसंहृती नित्यानित्यस्य अनित्यस्य च, अज्ञानम् भावरूपं दुःखस्पृष्टस्य ज्ञानाभावस्तु सर्वस्य, बोधनम् चेतनस्य, सुखम् प्राप्ततमसो विना, दुःखम् दुःखास्पृष्टं विना; इत्यादि द्रष्टव्यम् ॥

पदार्थानां सृष्ट्यादि अन्यतः अपि प्रतीयते; अतः 'एव' इति उक्तम् । सकलसत्तादेः तदधीनत्वात् तत्तद्वस्तु निमित्तमात्रम् एव; स्वातन्त्र्येण विष्णुः एव अस्य ईश्वरः ॥

इति ॥

[ ४३ स. विषयः– समस्तास्वतन्त्रस्य स्वतन्त्राधीनत्वनिरूपणे–

अ) 'नियमः..शेषः' इत्यस्य व्याख्याने– १) व्याप्ति-अर्थप्रतीति-निरासार्थकतया 'नियमः..प्रेरणम्' इत्यस्य अवतरणम् । २) सप्रयोजन-निग-

---

१. 'निरासः' इति क्वचित् । २. वि.टि. 'घटनाय' इति उद्धारः ।

डादिबन्धप्रतीतिनिरासकतया 'बन्धः प्रकृतेः' इत्यस्य अवतरणम्; एवमेव 'मोक्षो बन्धात्' इत्यत्रापि प्रयोजनदर्शनीयत्वम्। ३) 'आवृति..प्रकाशौ' इत्यस्य व्याख्याने– अर्थसङ्कोचबीजोक्तिरूपो भावः। ४) यथाश्रुतान्वयानुपपत्ति-मूलकतया 'एव..सम्बध्यते' इत्यस्य अवतरणम्। ५) विष्णुपरामर्शनिरासकतया 'अस्य..अस्वतन्त्रस्य' इत्यस्य अवतरणम्। ६) क्रियाऽनुक्तिन्यूनतानिरासकतया 'भवन्तीति शेषः' इत्यस्य अवतरणञ्च।

आ) 'अज्ञानं---सर्वस्य' इत्यस्य व्याख्याने– १) 'अज्ञानं..स्पृष्टस्य'-इत्यस्य बीजोक्तिरूपो भावः। २) 'ज्ञानाभावस्तु सर्वस्य' इत्यस्य व्याख्याने– क) बीजोक्तिरूपो भावः। ख) लक्ष्म्याः ज्ञानाभावस्य सप्रयोजनम् अत्यन्ताभावत्वम्॥ ]

'नियमः= व्याप्तिः' इति प्रतीयते; अत आह **नियमो व्यापारेष्विति**॥ 'बन्धः= निगडादिबन्धः' इति प्रतीयते; तत् अनुपपन्नम्, 'विष्णुना एव' इति-अवधारणविरोधात्; इत्यत आह **बन्धः प्रकृतेरिति**। 'मोक्षो बन्धात्' इतिव्याख्यानेऽपि एवम् एव बीजं द्रष्टव्यम्॥ **आवृतिज्योतिषी बाह्यतमःप्रकाशाविति**। 'अज्ञानबोधने' इत्यनेन आन्तरतमःप्रकाशयोः उक्तत्वात्; इति भावः॥ सृष्ट्यादेः अपि उक्तत्वात् 'ज्योतिः एव' इति अनुपपन्नम्; इत्यत आह **एवकार इति**। 'अस्य' इति 'इदम्' अंशशब्दस्य पूर्वप्रकृतपरामर्शकत्वात् विष्णोः अपि परामर्शः स्यात्; अत आह **अस्य समस्तस्यास्वतन्त्रतत्त्वस्येति**॥ 'क्रियाऽनुक्तेः न्यूनता स्यात्' इत्याशङ्क्य, 'अस्ति-भवत्योः सर्वत्र सम्बन्धात् न न्यूनता' इत्याह **भवन्तीति**।

**अज्ञानं भावरूपमिति**। ब्रह्मादीनां प्रकृतिबद्धत्वात्; इति भावः॥ **ज्ञानाभावस्त्विति**। रमायाः प्रकृतिबन्धाभावेऽपि ईश्वरविषये ज्ञानाभाववत्त्वात्; इति भावः। ननु लक्ष्म्याः ज्ञानाभावः किं प्रागभावः प्रध्वंसो वा? न उभयम् अपि, तत्प्रतियोगित्वे लक्ष्मीज्ञानस्य अपि अनित्यत्वापत्तेः; इति चेत्; न, अयोग्यगुणविषयकज्ञानस्य अत्यन्तासत्त्वात् [illegible] अत्यन्ताभावत्वाङ्गीकारात्॥

[ ४३ के. विषयः– समस्तास्वतन्त्रस्य स्वतन्त्राधीनत्वनिरूपणे–

अ) 'नियमः..शेषः'इत्यस्य व्याख्याने– १) निगडबन्धव्यवच्छेदार्थकतया 'प्रकृतेः'इत्यस्य अवतरणम् । २) अन्यमोक्षव्यावृत्त्यर्थकतया 'मोक्षो बन्धात्'इत्यस्य अवतरणम् । ३) पौनरुक्त्यपरिहारकतया 'आवृति..प्रकाशौ'-इत्यस्य अवतरणम् । ४) सप्रयोजनम् 'एव'कारान्वयान्तरोक्तितया 'एवकारः..सम्बध्यते'इत्यस्य अवतरणम् । ५) 'स्वतन्त्रस्य सृष्ट्यादि'भ्रान्तिनिरासकतया 'अस्वतन्त्रस्य'इत्यस्य अवतरणम् ।

आ) 'ननु..द्वयम्'इत्यस्य व्याख्याने– १) समासः..ततः'इत्यस्य व्याख्याने– क) अव्ययीभावाद्यर्थनिरासार्थकतया 'सङ्क्षेपः'इत्यस्य अवतरणम् । ख) षष्ठीसमासनिवारणार्थकतया 'तावेव योगावुपायौ'इत्यस्य अवतरणम् । ग) साध्यानुक्तिपरिहारकतया 'उक्तार्थघटनायाम्'इत्यस्य अवतरणम् ॥ २) 'इदम्..तदधीनाविति'इत्यस्य व्याख्याने– क) पूर्वोक्ततत्त्वविरोधपरिहारस्पष्टीकरणतया अवतरणम् ॥ ३) 'अज्ञानं..सर्वस्य'इत्यस्य व्याख्याने– क) स्वपक्षसाधक-परपक्षबाधकयुक्तिकथनम् । ख) 'ज्ञानाभावस्तु सर्वस्य'इत्यस्य व्याख्याने– १. 'भावरूपम्'इतिविशेषणप्रयोजनोक्तितया अवतरणम्; २. ज्ञानाभावस्य अत्यन्ताभावत्वम्, तदुपपादनम्, विरोधपरिहारश्च । ]

निगडबन्धव्यवच्छेदाय आह **प्रकृतेरिति** ॥ निगडादिमोक्षव्यावृत्त्यर्थम् आह **मोक्ष इति** ॥ 'आवृतिज्योतिषी'इत्यस्य 'अज्ञानबोधने'इत्यनेन पौनरुक्तिं परिहरति **आवृतिज्योतिषीति** । 'ज्योतिरेव च'इत्यत्र 'एव'शब्दः व्यर्थः, विरुद्धार्थश्च; तेन हि तन्मात्रस्य भगवदधीनत्वं प्राप्यते, तच्च पूर्वविरुद्धम्; इत्यतः 'भिन्नक्रमत्वात् न दोषद्वयम् अपि'इत्याह **एवकार इति** ॥ " 'समस्तस्य'इत्यनेन 'स्वतन्त्रस्य सृष्ट्यादि विष्णुना क्रियते'इति उच्यते"-इतिभ्रान्तिनिरासाय आह **अस्वतन्त्रस्येति** ॥

अव्ययीभावादेः 'समास'शब्दार्थस्य प्रकृते ग्रहणे असङ्गतेः, विवक्षितम् अर्थम् आह **सङ्क्षेपेति** ॥ 'समासव्यासयोगतः'इतिषष्ठीसमासपक्षे विवक्षितार्थासिद्धेः आह **तावेवेति** । साध्यानुक्तेः आह **उक्तार्थेति** ।

'न एतावताऽपि उक्तदोषपरिहारः'इत्यत आह **इदमुक्तं भवतीति** ।

**अज्ञानमिति** । ब्रह्मादीनां प्रकृतिबद्धत्वात्; इति भावः ।[1], दुःखा-स्पृष्टस्यापि तद्वत्त्वे प्रकृतिबद्धत्वेन, नित्यमुक्तत्वश्रुतिविरोधः; इति भावः ॥ 'भावरूपम्'इतिविशेषणप्रयोजनम् आह **ज्ञानाभावस्त्विति** । ज्ञानात्यन्ताभाव इत्यर्थः । रमायाः प्रकृतिबन्धाभावेऽपि ईश्वरेऽयोग्यगुणविषयकज्ञानाभाववत्त्वात्; इति भावः । द्वितीयक्षणे ज्ञानमानविशेषस्यापि[2] पूर्वक्षणे ज्ञानसद्भावेन, तत्प्रागभावासम्भवात्; 'नैवनवसुविशेष'[3]इत्यादेश्च व्यक्त्यभिप्रायेण वा अत्यपूर्वत्वाभिप्रायेण वा उपपत्तेः, न तद्विरोधः ॥

[ ४३ **वि.** विषयः– समस्तास्वतन्त्रस्य स्वतन्त्राधीनत्वनिरूपणे–

अ) 'यदि..शेषः'इत्यस्य व्याख्याने– १) 'यदि..सृष्टिरिति'इत्यस्य व्याख्याने– सप्रयोजन-उत्तरवाक्यवैयर्थ्यशङ्कानिरासकतया अवतरणम्, पदार्थश्च ॥ २) 'नियमः..शेषः'इत्यस्य व्याख्याने– क) 'व्याप्ति'प्रतीतिनिरासार्थकतया 'नियमः..प्रेरणम्'इत्यस्य अवतरणम् पदार्थश्च । ख) 'निगडबन्ध'प्रतीतिनिवारणार्थकतया 'बन्धः प्रकृतेः'इत्यस्य अवतरणम्, अर्थश्च । ग) 'निगडमुक्ति'प्रतीतिवारणार्थकतया 'मोक्षो बन्धात्'इत्यस्य अवतरणम्, पदार्थश्च । घ) 'पदान्तरेण वैयर्थ्य'निरासार्थकतया 'आवृति..प्रकाशौ'इत्यस्य व्याख्याने– १. अवतरणम्, २. विग्रहः, ३. 'बाह्य'पदकृत्यञ्च । ङ) यथाश्रुतान्वयप्रतीतिनिरासार्थकतया 'एव..सम्बध्यते'इत्यस्य अवतरणम् । च) विशेष्याकाङ्क्षापूरकतया 'अस्य..अस्वतन्त्रस्य'इत्यस्य अवतरणम् । छ) क्रियाकाङ्क्षापूरकतया 'भवन्तीति शेषः'इत्यस्य अवतरणम् ।

आ) 'ननु..द्रष्टव्यम्'इत्यस्य व्याख्याने– १) 'ननु..समासेति'इत्यस्य व्याख्याने– क) पूर्ववाक्यविरोधशङ्कात्वेन 'ननु..विरुद्धम्'इत्यस्य अवतरणम्, पदार्थश्च । ख) तद्विरोधप्रकारोक्तितया 'समस्तस्य..इत्यादि'इत्यस्य अवतरणम्, पदार्थश्च । ग) 'तत्र..समासेति'इत्यस्य पदार्थः ॥ २) उक्तार्थप्रतीतिनिरासार्थकतया 'समासः..ततः'इत्यस्य अवतरणम्, पदार्थश्च ॥ ३) 'इदमुक्तं..

---

१. 'अज्ञाननिमित्तब्रह्मादीनां प्रकृतिबद्धत्वाभावादित्यर्थः'इत्येकत्र पाठः ।
२. विशेषणस्यापूर्वक्षणेन
३. त्रिविक्रमाचार्यकृतविष्णुस्तुतिः श्लो. २.

तदधीनाविति'इत्यस्य व्याख्याने- क) सङ्क्षेपविस्तरयोः उक्तार्थघटनोपायत्वप्रदर्शकतया 'इदमुक्तं..बहवस्तत्र तावन्तः'इत्यस्य अवतरणम्, पदार्थश्च । ख) सर्वसाधारणपारतन्त्र्योक्तितया 'सर्वथा..तदधीनाविति'इत्यस्य अवतरणम्, पदार्थः, अन्वयश्च ॥ ४) 'तत्र..द्रष्टव्यम्'इत्यस्य व्याख्याने- क) सृष्ट्यादिधर्माणां धर्मिपरिमिति उक्तितया अवतरणम् । ख) 'तत्र स्थितिनियमौ सर्वस्य' इत्यस्य व्याख्याने- पदार्थः, शेषश्च । ग) 'अज्ञानं. सर्वस्य'इत्यस्य व्याख्याने- १. आशयोक्तिपूर्वकम् अवतरणम्, २. पदार्थः, क्रियासम्बन्धश्च । घ) 'बोधनम्'इत्यस्यार्थः । ङ) 'सुखं प्राप्ततमसो विना'इत्यस्य व्याख्याने- शेषः । च) 'दुःखं..विना'इत्यस्य व्याख्याने- शेषोक्तिरूपार्थः । छ) 'आदि'शब्दार्थश्च ।

इ) 'पदार्थानां..ईश्वर इति'इत्यस्य व्याख्याने- १) 'एव'कारवैयर्थ्यनिरासार्थकतया 'पदार्थानां..इत्युक्तम्'इत्यस्य अवतरणम्, पदार्थश्च । २) प्रमाणविरोधपरिहारकतया 'सकल..मात्रमेव'इत्यस्य अवतरणम्, पदार्थश्च । ३) 'स्वातन्त्र्येण समर्थ'व्यक्तिप्रदर्शकतया 'स्वातन्त्र्येण..ईश्वरः'इत्यस्य'अवतरणम्, पदार्थश्च ।

ई) 'इति'शब्दार्थश्च ॥ ]

'एवं स्वतन्त्रास्वतन्त्रतत्त्वनिरूपणस्य सम्यक् कृतत्वात्, उत्तरवाक्यं व्यर्थम्'इत्याशङ्क्य अवतारयति **यदीति** । भावाभावादि=भावत्वाभावत्वादि, भेदैः= 'भिद्यन्ते एभिः'इतिव्युत्पत्त्या व्यावर्तकधर्मैः, भिन्नम्=विभक्तम्; इदम् जगत्, अस्वतन्त्रम्= पराधीनम्; तर्हि= तथा सति, कस्मिन् वस्तुनि, आयत्तम् = अधीनतया प्रतिष्ठितम्; कस्मिन् च धर्मे, विषये, पराधीनम्; इति, आकाङ्क्षायाम्= अपेक्षायाम्, आह; इत्यर्थः ।

'नियमः=व्याप्तिः'इतिप्रतीतिनिरासाय आह **नियम इति** । व्यापारेषु=प्रवृत्तिनिवृत्तिवाग्व्यवहारादिरूपव्यापारेषु इत्यर्थः ॥ 'बन्धः निगडादिबन्धः' इतिप्रतीतिनिरासाय आह 'बन्धः प्रकृतेः'इति । प्रकृतेः बन्धः; इत्यर्थः ॥ 'मोक्षः=मुक्तिः, निगडात्'इतिप्रतीतिनिरासाय आह **मोक्ष इति** । बन्धात्= कृप्रतिबन्धात्, मुक्तिः; इत्यर्थः ॥ " 'अज्ञानबोधने'इतिपदाभ्याम् आवृति-

ज्ञानयोः उक्तत्वात् 'आवृति-ज्योतिः'इतिपदद्वयं व्यर्थम्''इत्याशङ्क्य आह **आवृतिज्योतिषीति** । 'बाह्यौ च तौ तमःप्रकाशौ च'इतिविग्रहः । पुञ्जतमोज्ञानयोः व्यवच्छेदाय 'बाह्य'पदम् ॥ '' 'ज्योतिरेव च'इति'एव'कारस्य यथाश्रुतान्वयः''इतिप्रतीतिनिरासाय आह **एवकार इति** ॥ 'अस्य समस्तस्य' इत्यस्य विशेष्याकाङ्क्षायाम् आह **अस्य समस्तस्यास्वतन्त्रस्येति** ॥ 'विष्णुना एव अस्य भावत्वाभावत्वादिना भिन्नस्य समस्तस्य अस्वतन्त्रस्य सृष्टिः स्थितिः'-इत्यादेः क्रियाऽऽकाङ्क्षायाम् आह **भवन्तीति शेष इति** ॥

पूर्वोक्तवाक्यविरोधम् आशङ्कते **नन्विति** । एतत्– 'सृष्टिः स्थितिः' इत्यादिवाक्यम्, पूर्वविरुद्धम्= पूर्ववाक्यविरुद्धम्; इत्यर्थः ॥ 'कथं पूर्ववाक्यविरोधः ?'इतिजिज्ञासायाम् आह **समस्तस्येति** । सर्वस्य अस्वतन्त्रस्य, सृष्टिसंहारोक्तौ; 'वेदादीनां नित्यत्वप्रतिपादक'वाक्यविरोधः इत्यर्थः, अचेतनस्य बोधविरोधः= बोधोक्तिविरोधः इत्यर्थः, 'मोक्षोक्तिविरोधः'इति 'आदि'-शब्दार्थः ॥ **तत्रेति** । एवं शङ्कायां प्राप्तायाम् इत्यर्थः; 'समासव्यासयोगतः'-इत्युक्तम्; इत्यर्थः ।,

तस्यार्थाप्रतीतेः आह **समासः सङ्क्षेप इति** । उक्तार्थघटनाय= समस्तस्य सृष्टिसंहारादिरूप-उक्त-सम्भवाय इत्यर्थः; ततः= समासव्यासरूप-उपायात्; इत्यर्थः ।,

'कथं सङ्क्षेपविस्तरयोः उक्तार्थघटनोपायत्वम् ?'इतिजिज्ञासायाम् आह **इदमुक्तं भवतीति** । इदम्= वक्ष्यमाणतया बुद्धिसन्निहितम्; इत्यर्थः । उक्तधर्मेषु– समस्तस्य परतन्त्रस्य सृष्ट्यादिरूप-उक्तेषु, यत्र= यत्तत्त्वे, यावन्तः, अल्पीयांसः= अल्पाः, धर्माः, सम्भवन्ति= सन्ति; तत्र= तस्मिन् तत्त्वे, तावन्तः धर्माः, विष्ण्वधीनाः ज्ञातव्याः ।, यत्र तु = यस्मिन् तत्त्वे तु, बहवः धर्माः सम्भवन्ति, तत्र तस्मिन् तत्त्वे, तावन्तः धर्माः, विष्ण्वधीनाः ज्ञातव्याः; इत्यर्थः ॥ सर्वसाधारणं पारतन्त्र्यम् आह **सर्वथेति** । सर्वेण

प्रकारेण, नियमेन इति यावत्; अस्य— परतन्त्रस्य; स्वरूपम्— स्वीयं रूपम् = धर्मिभूतं रूपम्, स्वभावः= स्वस्य भावः = सत्ताप्रवृत्त्यादिरूपः धर्मः, तौ 'स्वरूपस्वभाव'शब्दोक्तौ; विष्णवधीनौ; इत्यर्थः ॥ 'इति'इत्यस्य 'इदमुक्तम्'इत्यनेन अन्वयः ।

'यत्र तत्त्वे यावन्तः धर्माः सम्भवन्ति तत्र तावन्तः धर्माः विष्णवधीनाः'इति उक्तम्; 'कुत्र कियन्तः धर्माः सम्भवन्ति ?'इतिजिज्ञासायाम् आह **तत्रेति** ॥ तत्र— तेषु धर्मेषु; स्थितिनियमौ धर्मौ, सर्वस्य परतन्त्रस्य, 'सम्भवतः'इति शेषः ॥ " 'अज्ञानबोधने'इत्यत्र 'अज्ञान'पदं भावरूप-अज्ञानपरं ज्ञानाभावपरञ्च''इत्याशयेन आह **अज्ञानं भावरूपमिति** । दुःखस्पृष्टस्य अमुक्तस्य सम्भवति इति ।, ज्ञानाभावस्तु सर्वस्य अस्वतन्त्रस्य सम्भवति ॥ बोधनम्— ज्ञानम् इत्यर्थः ॥ **सुखं प्राप्ततमसो विनेति** । 'सर्वस्य अस्वतन्त्रचेतनस्य'इति शेषः ॥ **दुःखमिति** । दुःखास्पृष्टं विना सर्वस्य अस्वतन्त्रचेतनस्य इत्यर्थः ॥ 'बन्धः दुःखास्पृष्टं विना सर्वस्य अस्वतन्त्रचेतनस्य' इत्यादिः 'आदि'शब्दार्थः ॥

" 'अस्य समस्तस्य सृष्टिस्थित्यादि विष्णुना भवति'इत्येतावता एव पूर्तौ 'एव'कारः व्यर्थः''इत्याशङ्क्य आह **पदार्थानामिति** । घटादिपदार्थानाम्, सृष्टिस्थितिसंहारादि, अन्यतः= विष्णुव्यतिरिक्तात् कुलालादेः,भवति, इति, प्रत्यक्षादिप्रमाणैः ज्ञायते; तस्मात् कारणात्, 'एव'इति= विष्णुना एव इति, उक्तम्; इत्यर्थः ।

'तर्हि प्रत्यक्षादिप्रमाणविरोधः'इत्यत आह **सकलसत्तादेरिति** । सकलस्य= रमाब्रह्मादेः परतन्त्रस्य, सत्तायाः, 'आदि'पदोक्तव्यापारस्य; विष्णवधीनत्वात्; तत्तद्वस्तु— रमाब्रह्मादिरूपं सृष्ट्यादिकारणम्, निमित्तमात्रम् एव = अस्वतन्त्रकारणम् एव; न तु स्वातन्त्र्येण सृष्ट्यादिव्यापारे समर्थम्; इत्यर्थः ।,

'तर्हि स्वातन्त्र्येण तत्र कः समर्थः ?'इतिजिज्ञासायाम् आह **स्वातन्त्र्येणेति** । अनन्याधीनतया, विष्णुः, एव, अस्य– रमाब्रह्मादेः समस्तस्य जगतः, ईश्वरः= सृष्ट्यादौ समर्थः स्वामी च; इत्यर्थः ॥

'इति'शब्दः व्याख्यानपरिसमाप्तौ वर्तते ॥

[ ४३ मु. विषयः– समस्तास्वतन्त्रस्य स्वतन्त्राधीनत्वनिरूपणे–

अ) 'यदि..शेषः'इत्यस्य व्याख्याने– १) द्विविधशङ्कानिवारकतया 'यदि..सृष्टिरिति'इत्यस्य अवतरणम् ॥ २) 'नियमः..शेषः'इत्यस्य व्याख्याने– क) 'नियमपदस्य व्याप्त्यर्थकत्व'निरासार्थकतया 'नियमः..प्रेरणम्'इत्यस्य अवतरणम् । ख) पुनरुक्तिपरिहारार्थकतया 'आवृति..प्रकाशौ'इत्यस्य अवतरणम् । ग) सम्बन्धायोगशङ्कानिवारकतया 'एव..सम्बध्यते'इत्यस्य अवतरणम् । घ) 'अस्य..अस्वतन्त्रस्य'इत्यस्य व्याख्याने– सप्रयोजन-अध्याहारोक्तितया अवतरणम्, अर्थश्च ।

आ) 'ननु द्रष्टव्यम्'इत्यस्य व्याख्याने– १) 'इदमुक्तं..तदधीनाविति'-इत्यस्य व्याख्याने– 'सङ्क्षेपविस्तारयोरेकत्रासम्भव'शङ्कानिवारणार्थकतया अवतरणम्, भावश्च ॥ २) 'तत्र स्थिति..द्रष्टव्यम्'इत्यस्य व्याख्याने– क) सृष्ट्यादिधर्माणां धर्मिप्रदर्शकतया अवतरणम् । ख) 'नित्यानित्यस्य'इत्यस्य अर्थसङ्कोचः, तत्प्रयोजनञ्च ॥ ]

ननु उत्तरमूले जगतः सृष्ट्यादौ विषये विष्णवधीनत्वम् उच्यते; तदयुक्तम्, अनाकाङ्क्षितत्वेन असङ्गतत्वात् ।, न च वाच्यम् 'इदं कस्मिन्विषये कस्य अधीनम् ? इतिशङ्कायाम् एतत् उच्यते'इति; बीजाभावेन अयोगात् ।" इत्येतां शङ्कां परिहरन् अवतारयति **यदीदमिति** ।

व्याप्त्यर्थकत्वप्रतीतेः 'नियम'पदं व्याचष्टे **नियम इति** ॥ 'अज्ञान-बोधन'पदाभ्यां पुनरुक्तेः 'आवृति-ज्योतिः'शब्दौ अनूद्य अर्थौ आह **आवृतिज्योतिषीति** ॥ 'एव च'इति 'एव'कार'च'शब्दयोः विरुद्धार्थकयोः एकत्र सम्बन्धायोगात् आह **एवकारो विष्णुनेतीति** ॥ **अस्य समस्यस्येति** ।

'एतत्प्रकरणप्रस्तुतमध्ये समस्तस्य' इत्यर्थो न; किन्तु अस्वतन्त्रमध्ये प्रस्तुतस्य समस्तस्य इत्यर्थः ।

'समस्तस्य सृष्ट्याद्युक्तिः नित्यत्वाद्युक्तिविरुद्धा' इत्याशङ्कानिवृत्त्युपायत्वेन प्रोक्तौ सङ्क्षेपविस्तारौ एकत्र[1] न सम्भवतः, विरुद्धत्वात्; न च 'व्यवस्थया इमौ उपायौ' इति, क्वचिदपि धर्मिणि सर्वधर्माणां विस्तराभावेन असम्भवापत्तेः"- इत्यतः तदभिप्रायम् आह **इदमुक्तं भवतीति** । नायं 'विस्तार' शब्दः सर्वधर्मविस्तारकैकवाचकः, किन्तु धर्मबहुत्ववाचकः, अतः न असम्भवः इति भावः ।

कुत्र कः धर्मः ? इत्यत आह **तत्रेत्यादिना** ॥ **नित्यानित्यस्येति** । पुराणव्यतिरिक्तनित्यानित्यस्य इत्यर्थः । तथाच न पुराणस्य 'उत्पत्तिमत्त्वे सति विनाशप्रभावः' इतिनित्यानित्यत्वलक्षण अवान्तरभेदोक्तिविरोधः ॥

[ ४३ म. विषयः— समस्तास्वतन्त्रस्य स्वतन्त्राधीनत्वनिरूपणे—

अ) 'नियमः...शेषः' इत्यस्य व्याख्याने— १) 'पुनरुक्ततापरिहारार्थकतया 'आवृतिज्योतिषी' इत्यस्य अवतरणम् । २) 'अस्वतन्त्रस्य' इत्यस्य प्रयोजनञ्च ।

आ) 'ननु...द्रष्टव्यम्' इत्यस्य व्याख्याने— १) 'ननु समासेति' इत्यस्य व्याख्याने— क) 'अचेतनस्य बोधविरोधः' इत्यस्य पदार्थः । ख) 'आदि' पदार्थश्च ॥ २) 'समासः...ततः' इत्यस्य व्याख्याने— 'ततः' इत्यस्य व्याख्येयप्रदर्शनम्, अर्थश्च ॥ ३) 'तत्र स्थिति..द्रष्टव्यम्' इत्यस्य व्याख्याने— क) 'ज्ञानाभावस्तु सर्वस्य' इत्यत्रस्थ 'सर्वस्य' इत्यस्य प्रयोजनम् । ख) 'इत्यादि' पदसङ्ग्राह्यप्रदर्शनम् ।

इ) 'पदार्थानां ईश्वर इति' इत्यस्य व्याख्याने— १) 'अन्यतः' पदार्थः । २) 'तत्त्वद्रस्तु निमित्तमात्रमेव' इत्यस्य अभिप्रेतप्रमाणप्रदर्शनम् ।

ई) तत्त्वसङ्ख्यानस्य सङ्ग्रहार्थश्च ॥ ]

---

१. एकैकत्र

" 'आवृतिज्योतिः'शब्दौ अज्ञानज्ञानयोः अपि वर्तेते, इति 'अज्ञान-बोधने'इत्यनेन पुनरुक्तता स्यात्; अतः व्याचष्टे **आवृतिज्योतिषीति** ॥ 'अस्य समस्तस्य'इतिअनूद्य 'अस्वतन्त्रस्य'इति व्याख्यानम् स्वतन्त्रतत्त्वस्यापि सृष्ट्यादिप्रसक्तिनिरासाय ॥

**अचेतनस्येति** । समस्तस्यापि बोधोक्तौ, अचेतनस्यैव अभावाऽऽपातेन, 'चेतनाचेतनत्वेन भावोऽपि द्विविधः'इत्युक्तविभागविरोधः; इत्यर्थः ।, 'बोध'इत्युपलक्षणम्, 'बन्धमोक्षसुखदुःखविरोधः'इत्यपि द्रष्टव्यम् । रमायाः बन्ध-मोक्ष-दुःख-सृष्टि-संहृति-विरोधः, प्राप्ततमसानां सुखविरोधः'इत्यादिः 'आदि'शब्दार्थः ।,

'योगतः'इति 'तसः'श्रवणात्, तद्व्याख्यानं 'ततः'इति । ताभ्याम् इत्यर्थः ।,

**ज्ञानाभावस्तु सर्वस्येति** । अत्र रमायाः ऋजूनां च, ईशादन्यत्र सर्वज्ञत्वेऽपि, ईशे साकल्येन ज्ञानाभावात्; 'सर्वस्य'इत्युक्तिः; इति ध्येयम् ।,

**इत्यादि द्रष्टव्यमिति** । 'बन्धः दुःखस्पृष्टस्य, मोक्षः नित्यसंसारिणो विना, आवृतिज्योतिषी सर्वस्य'इत्यपि द्रष्टव्यम्; इत्यर्थः ॥

अन्यतः= ब्रह्मादितः॥ 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाऽऽख्या रूपिणस्तव ॥'इतिवचनं मनसि निधाय आह **तत्तद्वारेणेति** ॥

अयम् अत्र सङ्ग्रहः । –

असत्त्वप्रकारकप्रमित्यविषयत्वे सति सत्त्वप्रकारकप्रमितिसाक्षाद्विषयत्त्वम् तत्त्वम् ॥ ॥ तत् द्विविधम् स्वतन्त्रम् अस्वतन्त्रञ्च इति । स्वरूपे स्वप्रमितौ स्वप्रवृत्तौ वा परानपेक्षं स्वतन्त्रम्; परापेक्षम् अस्वतन्त्रम् ॥ स्वतन्त्रः विष्णुः एक एव । अस्वतन्त्रं द्विविधम् भावः अभावश्च इति ॥ विधिधर्मितया प्रथमप्रतीतौ उपलभ्यमानः भावः; निषेधधर्मितया प्रथमप्रतीतौ उपलभ्यमानः अभावः ॥,

तत्र भावः अपि द्विविधः चेतनः अचेतनश्च इति । ज्ञानाश्रयः चेतनः, तदत्यन्ताभावाश्रयः अचेतनः ।;

चेतनः द्विविधः दुःखास्पृष्टः दुःखस्पृष्टश्च इति । तत्र चेतनत्वे सति दुःखसम्बन्धात्यन्ताभावाधिकरणं दुःखास्पृष्टः; दुःखसम्बन्धात्यन्ताभावानधिकरणं दुःखस्पृष्टः ॥ दुःखास्पृष्टा रमा एका एव । स्पृष्टदुःखाः तु द्विविधाः दुःखमुक्ताः वर्तमानदुःखाश्च इति ॥ तत्र आत्यन्तिकदुःखनिवृत्तिमन्तः दुःखमुक्ताः; अनुभूयमानदुःखप्रवाहाः वर्तमानदुःखाः । तत्र दुःखमुक्ताः पञ्चविधाः देवर्षि पितृचक्रवर्तिमनुष्योत्तमभेदेन; वर्तमानदुःखाः अपि द्विविधाः मुक्तियोग्याः मुक्त्ययोग्याश्च इति । मुक्तियोग्याः पञ्चविधाः देवर्ष्यादिभेदेन; मुक्त्ययोग्याश्च द्विविधाः तमोयोग्याः नित्यसंसारिणश्च इति ।, तमोयोग्याः चतुर्विधाः दैत्यरक्षःपिशाचमानुषाधमभेदेन; पुनः एते प्रत्येकं द्विविधाः प्राप्तान्धतमसः संसारे वर्तमानाश्च इति ॥ अवसितः चेतनविभागः ।,

अथ अचेतनं त्रिविधम् नित्यं नित्यानित्यम् अनित्यम् इति । अन्यथाभावराहित्येन सदा विद्यमानं नित्यम्; यत्र सर्वथा विकारशून्यं नापि सर्वथा ध्वंसप्रतियोगि तन्नित्यानित्यम्, तत् त्रिविधम्— उत्पत्तिमदविनाशि, एकदेशरूपेण उत्पत्तिविनाशि एकदेशिरूपेण तद्रहितम्, स्वरूपेण उत्पत्त्यादिशून्यत्वेऽपि कार्यरूपेण तद्वत्, इति; ध्वंसप्रतियोगि यत् तत् अनित्यम् ॥ तत्र नित्याः— वेदाः, पञ्चाशद्वर्णाः, अव्याकृताकाशश्च; त्रिविधेषु नित्यानित्येषु आद्यं पुराणादिः पौरुषेयः ग्रन्थः, द्वितीयं कालः, तृतीयम् प्रकृतिः भूतसूक्ष्माणि इन्द्रियाणि च; अनित्यं द्विविधम् असंसृष्टं संसृष्टञ्च इति ।; यस्य नित्यानित्यसूक्ष्माणि एव साक्षात् उपादानानि तत् असंसृष्टम्; यस्य तु विकृतानि एव उपादानानि तत् संसृष्टम् ।, तत्र असंसृष्टानि महदादिचतुर्विंशतितत्त्वानि; संसृष्टानि तु अण्डं तदन्तर्गतवस्तूनि च इति ॥ अवसितः भावविभागः ॥,

अथ अभावः त्रिविधः प्रागभावः प्रध्वंसाभावः अत्यन्ताभावश्च इति । स्वप्रतियोग्युत्पत्तिकालानन्तरतावच्छिन्नकालमात्रावृत्तिः अभावः प्रागभावः; स्वप्रतियोगिध्वंसकालनिरूपितप्राक्त्वावच्छिन्नयावत्कालावृत्तिः अभावः प्रध्वंसाभावः कालत्रयवृत्तिः अभावः अत्यन्ताभावः; इति ॥

[ ४४ टी. विषयः– प्रार्थनासहितम् अन्त्यमङ्गलाचरणम्, ग्रन्थसमाप्तिश्च ॥ ]

**पद्मापद्मासनानन्तप्रभृतीदं यदिच्छया ।**
**सत्तादि लभते देवः प्रीयतां श्रीपतिस्स मे ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वसङ्ख्यानव्याख्यानस्य श्रीमज्जयतीर्थभिक्षुविरचितस्य विवरणं सम्पूर्णं श्रीकृष्णार्पणमस्तु ॥**

[ ४४ स. विषयः– 'पद्मा..मे' इतिटीकान्त्यपद्यव्याख्याने– १) स्तुतिसमेत-तत्प्रीतिप्रार्थनात्वेन अवतरणम् । २) ग्रन्थसमाप्तिश्च ॥ ]

समापितप्रकरणव्याख्यानः अपि भगवान् टीकाकारः तत्प्रतिपादित-गुणवन्तं भगवन्तम् अन्तेऽपि स्तुवन् तत्प्रीतिं प्रार्थयते पद्मेति ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वसङ्ख्यानव्याख्यानस्य
श्रीमज्जयतीर्थभिक्षुविरचितस्य विवरणं
सत्यप्रज्ञभिक्षुविरचितं
समाप्तम् ॥
श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥

[ ४४ के. विषयः– 'पद्मा..मे' इतिटीकान्त्यपद्यव्याख्याने– १) स्तुतिसमेततत्प्रीतिप्रार्थनात्वेन अवतरणम् । २) एतद्ग्रन्थनिर्मितिमार्गकथनम् । ३) ग्रन्थसमाप्तिश्च ॥ ]

एतत्प्रकरणप्रतिपादितगुणवत्तया भगवन्तम् अन्तेऽपि स्तुवन् तत्प्रीतिं प्रार्थयते पद्मेति ॥

मूलग्रन्थान्समालोच्य गुरुशिक्षितमार्गतः ।
तत्त्वसङ्ख्यानटीकायाश्चन्द्रिकेयं विनिर्मिता ॥

इति श्रीमत्सकलविद्वच्चक्रचूडामणीनां विद्याधीशपूज्यपादानां शिष्येण
केशवभट्टारकेण विरचिता
तत्त्वसङ्ख्यानभावचन्द्रिका समाप्ता ॥
श्रीकृष्णार्पणमस्तु ॥

[ ४४ वि. विषयः– 'पद्मा..मे' इतिटीकान्त्यपद्यव्याख्याने– १) स्तुतिसमेततत्प्रसादप्रार्थनात्वेन अवतरणम् । २) पदार्थः । ३) ग्रन्थकर्तुः ग्रन्थस्य च नामाङ्कनम् । ४) मङ्गलाचरणम् । ५) ग्रन्थसमाप्तिश्च ॥ ]

एवं व्याख्यातप्रकरणः श्रीमज्जयतीर्थमुनिः अन्ते जगदुदयादिनिमित्तत्वेन भगवन्तं स्तुवन्, कृतव्याख्यनफलतया तत्प्रसादं प्रार्थयते पद्मेति । पद्मा= लक्ष्मीः, पद्मासनः=ब्रह्मा, अनन्तः=शेषः, ते एव, प्रभृतिः =आदिः, यस्य, तत् तथा; इदम्=बुद्धिस्थं रमादिजगत्; यदिच्छया= यस्य विष्णोः इच्छया; सत्तादि= सत्ता=स्थितिः 'आदि'पदोक्तं सृष्ट्यादिकं च; लभते= प्राप्नोति; सः, देवः= क्रीडादिगुणविशिष्टः, श्रीपतिः= लक्ष्मीपतिः; मे; प्रीयताम्= प्रसीदतु; इत्यर्थः ॥ इति ॥

वानिवालकुलोत्पन्नविठ्ठलेन विपश्चिता ।
रचिता तत्त्वसङ्ख्यानव्याख्या टीकार्थदीपिका ॥ १ ॥
मत्प्रेरकेण हरिणा या सेवा स्वस्य कारिता ।
तया श्रीमध्वहृत्पद्मवासी नः प्रीयतां हरिः ॥ २ ॥

इति श्रीवानिवालनृसिंह[1]भट्टसूनुना विठ्ठलेन विरचिता तत्त्वसङ्ख्यानव्याख्याटीकार्थदीपिका समाप्ता ॥
श्रीकृष्णार्पणमस्तु ॥

---

१. नृसिंह्मभट्ट

[ ४४ मु. विषयः– 'पद्मा..मे'इतिटीकान्त्यपद्यव्याख्याने– १) लक्ष्मीपतिप्रीतिप्रार्थनात्वेन अवतरणम् । २) मङ्गलाचरणम् । ३) ग्रन्थसमाप्तिश्च ॥ ]

समापितप्रकरणः टीकाकारः एतत्प्रकरणोक्तगुणवतः लक्ष्मीपतेः प्रीतिं स्वस्य प्रार्थयते पद्मापद्मेति ॥

स्मान्ब्रह्मादिकं विश्वं यदिच्छातः प्रवर्तते ।
श्रीमदानन्दतीर्थस्थः प्रीयतां श्रीपतिः स मे ॥

इति श्रीमद्विद्वच्चक्रचूडामणिश्रीमच्छलारीनरसिंहाचार्यपूज्यपादशिष्येण
मौद्गलनरसिंहेन विरचितं
तत्त्वसङ्ख्यानव्याख्याभाववर्णनं समाप्तम् ॥

[ ४४ भ. विषयः– 'पद्मा..मे'इतिटीकान्त्यपद्यव्याख्याने– १) शिक्षणस्तुतिभ्यां साहित्येन तत्प्रीतिप्रार्थनात्वेन अवतरणम् । २) पदार्थः । ३) गुर्वन्तर्गततया रमापतेः प्रार्थना । ४) ग्रन्थसमाप्तिश्च ॥ ]

'यादृशस्य भगवतः प्रतिपादनम्, तादृशस्यैव स्तवनेन प्रीतिः आशासनीया'इतिशिक्षयन्, प्रकरणप्रतिपाद्यगुणविशिष्टतया भगवन्तम् अन्तेऽपि स्तुवन्, तत्प्रीतिं प्रार्थयते पद्मेति । पद्मा= रमा, पद्मासनः= ब्रह्मा, अनन्तः= शेषः, 'प्रभृति'पदेन गरुडरुद्रादिसमस्तं जगत्; 'अस्य समस्तस्य'इतिमूलोक्तार्थप्रपञ्चनार्थम् इदम् उक्तम् इति ध्येयम् । 'सत्तादि'इति'आदि'पदेन प्रमितिप्रवृत्त्योः ग्रहणम् । भगवत्प्रीतिः इव भगवतीप्रितिः अपि प्रार्थनीया इति, 'श्रीपतिः'इति निरदिक्षत् ॥ इति अशेषम् अतिमङ्गलम् ॥

यद्भ्रूविभ्रमतो बभूव कमला नित्यामृता संसृतेः ।
मुच्यन्ते च सुरादयोऽसुरमुखा अश्नन्ति चान्धन्तमः ॥
नित्यं संसरति स मध्यमजनो वेदादयः शाश्वताः ।
कालश्च प्रकृतिः पुराणमुखरा नित्या अनित्यास्तथा ॥ १ ॥

यः सूक्ष्मं महदादितत्त्वनिचयं स्थूलीकरोत्युद्भवे ।
ब्रह्माण्डं भुवनानि तत्र च सृजन् पात्यत्ति कालेऽखिलम् ॥
प्राक्प्रध्वंससदानिषेधनियमो[1] निर्दोषगन्धः स्वराट् ।
सुप्रीतोऽस्तु रमापतिर्यदुपतिः क्रोडार्यहृत्कञ्जजः[2] ॥ २ ॥
जयराजवचोम्भोधिर्दुर्गाहो बलिनामपि ।
श्रितां नः सुविहारोऽभूत् गौरवीं भारतीतरीम् ॥ ३ ॥
नमः कृष्णाय बिम्बाय बन्धवे गुणसिन्धवे ।
क्रोडार्यगुरुहृत्कञ्जवासिने श्रीविलासिने ॥ ४ ॥

इति श्रीभास्करीवेङ्कटवराहाचार्यपूज्यचरणाराधकेन भगवता कृता
[3]तत्त्वसङ्ख्यानमन्दारमाला
समाप्ता ॥
श्रीकृष्णः प्रीयताम् ॥

---

१. नियमी २. गः
३. तत्त्वसङ्ख्यानटीकाविवृतिः

# अशुद्धशोधनम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शोधनीयम् |
|---|---|---|---|
| प्रस्तावनायाम्— | | | |
| ४ | १९ | तथा | इत्येतैः सार्धं |
| ४ | २२ | विरमे | विरमामि |
| प्रथमभागे— | | | |
| ३त:३९ | १ | त.प.१ | त.प.० |
| ३ | ९ | इत्यनेन निषेध्या | इत्यनेन बोध्ययोः निषेध्या |
| १२ | १० | प्रदर्शनञ्च। | प्रदर्शनञ्च।) |
| १६ | ३ | भिद्यन्ते | भिद्यन्ते |
| १६ | १७ | स्वानेन | स्वात्तेन |
| १७ | ४ | द्धितीय | द्वितीय |
| २२ | ९ | विक्षिण्येति | विक्षिप्येति |
| २२ | २२ | प्रतीकम् | उद्धरणम् |
| २४ | ५ | परमास्तिकत्मात् | परमास्तिकत्वात् |
| २८ | २० | चाभावे | स्वाभावे |
| २९ | १३ | निवेशनम् | अनिवेशनम् |
| ३१ | १८ | चाणाय | चारणाय |
| ३२ | २१ | यत् ;स ङ्कीर्तनम् | यत्; सङ्कीर्तनम् |
| ४६ | ३ | तदवस्यैव | तदवस्थैव |
| ४७ | २ | 'तत्त्व' | 'तत्त्व' |
| ४७ | ११ | अरानोपः | अनारोपः |
| ४७ | ११ | अना रोरितम् | अनारोपितम् |
| ४८ | ६ | प । | पर्य |
| ५२ | १८ | लक्षणोपपादनार्थत्वम् | लक्षणोपपादनार्थत्वम् |
| ५६ | ५ | नेदं रजतम्' | 'नेदं रजतम्' |
| ५६ | ६ | 'इदं' | 'इदं' |
| ६० | १८ | सत्त्व त् | सत्त्वात् |
| ६० | १८ | अत्यन्त सदेव | अत्यन्तासदेव |
| ६० | २४ | प्रमाण भावः | प्रमाणाभावः |
| ६१ | ९ | | स्वतन्त्रस्य पदार्थस्य अन्याधर्मतया |
| ६१ | १० | वैयर्थ्यादि | वैयर्थ्यमित्यादि |
| ६४ | ३ | यैव | स्यैव |

| | | | |
|---|---|---|---|
| ६६ | २१ | प्शुरूक्तिःयंकथं | शुक्तिरूप्यं कथं |
| ६६ | २१ | नत्त्वं | तत्त्वं |
| ६७ | १३ | तयो :प्रमे- | तयोः प्रमे- |
| ६७ | २४ | उलि ख्यते | उल्लिख्यते |
| ७३ | ४ | तद्रप- | तद्रूप- |
| ७३ | २४ | अङ्गी | अङ्गी |
| ७५ | १६ | भावाङ्गीकारात् | भावानङ्गीकारात् |
| ७७ | ५ | त्वम्‘ | त्वम्’ |
| ७७ | १३ | प्रामाणिक- | प्रामाणिक- |
| ७७ | २० | अस्मिन्न | अस्मिन्नर्थे |
| ७७ | २४ | लक्ष | लक्षण |
| ७८ | २१ | ‘पदस्य ‘स्वाधीनम्‘ | ’पदस्य ‘स्वाधीनम्’ |
| ७८ | २२ | ‘परानपेक्षम्‘ | ‘परानपेक्षम्’ |
| ७८ | २३ | ‘परानधीनत्वम्‘ | ‘परानधीनत्वम्’ |
| ७८ | २३ | अस्तु‘ | अस्तु’ |
| ७८ | २३ | ‘परानधीनत्वम्‘ | ‘परानधीनत्वम्’ |
| ८२ | १२ | अन्यानधीत्वे | अन्यनधीनत्वे |
| ८३ | २० | अतिव्याप्ति, | अतिव्याप्तिः, |
| ८४ | ३ | परानधीन | पराधीन |
| ८६ | ५ | बाधसत्व | बाधसत्त्व |
| ९६ | १९ | भ्रान्तिः | भ्रान्तिः |
| ९६ | २१ | एक | ‘एक |
| ९८ | १३ | ज्ञाने | ऽज्ञाने |
| ९९ | १२ | कस्य पि | कस्यापि |
| १०० | ७ | स्वतन्त्रत्व | स्वतन्त्रत्वा |
| १०३ | ७ | व्याघातश्च | व्याघातश्च’ |
| १०३ | ११ | ख | ख. |
| १०४ | ११ | उक्त विभागो | उक्तविभागो |
| १०८ | ८ | निधिष्ठाना | निरधिष्ठाना |
| ११० | १३ | उ त | अत |
| ११० | १५ | ॥ ३ ॥ | ॥ ४ ॥ |

| | | | |
|---|---|---|---|
| १११ | २ | स्तव | तत्त्व |
| ११६ | २२ | स्वातत्र्य | स्वातन्त्र्य |
| ११६ | २३ | द्रष्टव्यः । | द्रष्टव्यः ॥ |
| ११९ | १६ | इत्यर्थः । | इत्यर्थः ॥ |
| १२० | ५ | तत्त्च | तत्त्व |
| १२० | १८ | **भेदेनेति ।** | **भेदेनेति ॥** |
| १२४ | ८ | स्व तन्त्र | स्वतन्त्र |
| १२५ | १२ | **अथवेति ।** | **अथवेति ॥** |
| १२५ | १५ | भावः | भावः |
| १३० | २३ | भाव्य | भावव्य |
| १३० | २४ | द्धिधा | द्विधा |
| १३५ | १६ | तत्त पद | तत्तत्पद |
| १६६ | ३ | अभाव' | अभाव- |
| १३६ | ६ | इत्यर्थकत्वम् ।– | इत्यर्थकत्वम् । ] |
| १३८ | १२ | प्रमाणत्व योगात् | प्रमाणत्वायोगात् । |
| १३८ | २० | प्रतिति | प्रतीति |
| १४० | ३ | नियानका | नियामका |
| १४१ | २१ | प्रतीतीन | प्रतीतीनां |
| १४२ | २३ | प्रतिति | प्रतीति |
| १४५ | २१ | अनुव्य ख्यानम् | अनुव्याख्यानम् |
| १४६ | २७ | ष्यप्रति | विशेष्यप्रति |
| १४८ | २५ | ख. | खं. |
| १५४ | ५ | इस्थस्य | इत्यस्य |
| १५४ | ११ | प्रतियोकि | प्रतियोगिक |
| १५५ | १५ | इदमुक्तं | इदमुक्तम् |
| १५५ | २३ | शुक्रः | शुक्लः |
| १५८ | २६ | व्याघ तात् | व्याघातात् |
| १६१ | २१ | व्याघात् | व्याघातः |
| १६२ | २१ | भाष- | भाव- |
| १६२ | २३ | तत्पक्षोक्तदोवाए | एतत्पक्षोक्तदोषा- |
| १६४ | २६ | १३ भ.– × | [ १३ भ.– × ] |
| १६५ | ७ | नन्निरस- | तन्निरस- |

| | | | |
|---|---|---|---|
| १६७ | ३ | वच्छेदका | वच्छेदका |
| १६८ | ७ | यन्त | यत्न |
| १७३ | १० | यस्यात् | यस्मात् |
| १७५ | १५ | भावप्रदेषु | भावप्रभेदेषु |
| १७५ | १७ | उक्तरात्य | उक्तरीत्या |
| १७६ | ११ | कण्डपाधि | क-उपाधि |
| १८२ | १२ | ननु | 'ननु |
| १८३ | १३ | कर्तव्यः' | कर्तव्यः' |
| १८९ | ६ | निषेधखण्डननिरा | निषेधनिरा |
| १९४ | २२ | उक्तोदोष | उक्तो दोष |
| १९७ | २३ | नास्तिति | नास्तीति |
| १९८ | २३ | परिहार | परिहार- |
| २०२ | २१ | उक्तावभागस्य | उक्तविभागस्य |
| २०३ | १५ | साम्भवितान् | सम्भावितान् |
| २०४ | २४ | सप्रयोजनम्, | सप्रयोजनम्, |
| २०४ | २६ | ससङ्गः | प्रसङ्गः' |
| २०६ | १२ | इस्यस्य | इत्यस्य |
| २०७ | १७ | धर्तभूतअभावात्, | धर्मभूत-अभावात् |
| २०८ | १२ | सम्बन्धा | सम्बन्धा |

द्वितीयभागे—

| | | | |
|---|---|---|---|
| ५ | ४ | वाक्यस्य | वाक्यस्य |
| ९ | २३ | परत्वे । | परत्वेन |
| १३ | ३ | निष्प्रति | निष्प्रति |
| १६ | २ | स्योत्तरत्वे | स्वोत्तरत्वे |
| ३० | १७ | प्रतियोगि प्रध्वंस | प्रतियोगिप्रध्वंस |
| ३१ | १८ | नधिकरण | नधिकरण |
| ३४ | ३ | प्राकू | प्राक् |
| ३८ | २१ | विषेधः | निषेधः |
| ३८ | २२ | निरूक्ति | निरुक्ति |
| ३९ | २७ | ...इति | ...'इति |
| ४० | ११ | विषयी।क्रियते | विषयीक्रियते |
| ४० | २१ | ध ात्यन्ता | घटात्यन्ता |

| | | | |
|---|---|---|---|
| ४४ | २९ | ह्णाय | वारणाय |
| ४५ | १७ | प्राक्काल | प्राक्काल |
| ४५ | ७ | द्वितिय | द्वितीय |
| ४५ | २३ | ग्युत्तर | म्युत्तर |
| ४५ | २४ | लानिष्ठाभावप्रतियोगि त्वाम् | कालनिष्ठाभावप्रतियोगित्वम् |
| ३७ | २२ | विभाविगे | विभागे |
| ५५ | २८ | कल्पनापास्त्य | कल्पनापस्त्या |
| ५६ | २ | त्रविध्य | त्रैविध्य |
| ५६ | ११ | कत्पा | कत्वा |
| ५९ | ८ | निर.वरेति | निराकरोति |
| ६१ | २१ | 'एवं | एवं |
| ६४ | ४ | पर वा | परत्वा |
| ६४ | ५ | ईश्वरादौ | ईश्वरादौ |
| ६४ | १० | तनेति | तेनेति |
| ६४ | २४ | कोशः | कोषः |
| ६८ | २१ | सर्वस्वापि | सर्वस्यापि |
| ६८ | २३ | अन्यत्र सत्त्वेन | अन्यत्रासत्त्वेन |
| ७० | १८ | निरूपत्वात् | निरूप्यत्वात् |
| ७३ | ७ | एवकारस्य | 'एव'कारस्य |
| ७५ | ५ | शेषोक्ति; | शेषोक्तिः |
| ७६ | ९ | प्रवि | प्रति |
| ७६ | २० | परतन्त्रे | परतन्त्रे |
| ७७ | १५ | पुन | पुनः |
| ७८ | ५ | अवतरणम् | अवतरणम्। पदार्थः |
| ७८ | २२ | इत्यर्थ | इत्यर्थः |
| ८१ | ४ | निरण ा | निराकरणा |
| ८२ | २७ | करणवं | करणत्वं |
| ८३ | ७ | दु.ख | दुःख |
| ८३ | १० | वत्त्वं | वस्त्वं |
| ८३ | १३ | पृ.१..६७ | १. पृ. ६७ |
| ८४ | १२ | साधारण अनिष्ट | साधारण-अनिष्ट |
| ८४ | १५ | दुःवार्थम् | दुःखार्थम् |

| | | | |
|---|---|---|---|
| ८५ | ६ | टीका [3] | टीका [3] |
| ८५ | ८ | विशेषणं [3] | विशेषण |
| ८९ | २६ | ब्र. | ९. ब्र. |
| ९१ | १७ | द्वैवि योक्तिः | द्वैविध्योक्तिः |
| ९२ | ६ | भावः । | भावः । |
| ९२ | १९ | इात | इति |
| ९३ | १४ | तन्निरास य | तन्निरासाय |
| ९४ | ३ | रिक्त अस्व | रिक्त-अस्व |
| ९४ | ५ | व्या रिक्त | व्यतिरिक्त |
| ९४ | ८ | दीन | दीनां |
| ९४ | १४ | निर्दःखो | निर्दुःखो |
| ९५ | ६ | तदस्यच्चेतनं | तदन्यच्चेतनं |
| ९५ | ६ | ब्रह्माण | ब्रह्माण्ड |
| ९६ | ६ | दु खम् | दुःखम् |
| ९६ | २४ | दुःखभ गिनः | दुःखभागिनः |
| ९७ | ८ | अ 'एके | अ) 'एके |
| ९७ | १२ | अनन्त | अनन्तः |
| ९८ | १९ | २५ | [ २५ |
| ९८ | २३ | इनि | इति |
| ९९ | १८ | दुःखःा | दुःखाः |
| ९९ | १९ | पदार्थ. | पदार्थः |
| १०१ | ११ | इत्यत्य | इत्यस्य |
| १०४ | १२ | दु ख | दुःख |
| १०५ | ११ | तुःखस्य | दुःखस्य |
| १०५ | १२ | दुःखाभाव' | 'दुःखाभाव' |
| १०६ | १० | दुःखस्पृष्टचेतने दुःखस्पृष्टचेतने | दुःखस्पृष्टचेतने |
| १०७ | २ | दुख...दुःख | दुःख...दुःख |
| १०७ | ७ | 'अत्रापि | अत्रापि |
| १०८ | ७ | तुःखसंम्थानां | दुःखसंस्थानां |
| १०८ | १८ | योाया ग्योग्य | योग्यायोग्य |
| १०८ | २३ | द्दत्यतः | इत्यतः |
| १०९ | १२ | तुःख | दुःख |

| | | | |
|---|---|---|---|
| १०९ | २४ | पदा | यदा |
| १०९ | २६ | एव विमुक्ति | एवं विमुक्ति |
| ११० | १० | इात | इति |
| १११ | १४ | अयोाया | अयोग्या: |
| ११२ | १६ | प्रयो नोक्ति | प्रयोजनोक्ति |
| ११२ | २० | अन्यय | अन्वय |
| ११४ | ५ | वस्य | त्वस्य |
| ११४ | ८ | अग्योय | अयोग्य |
| ११५ | ३ | तवदे | तदेव |
| ११७ | ५ | इत्यादौ | ईत्यादौ |
| ११९ | ९ | क्षि तपा | क्षितिपा |
| १२३ | १६ | इत्यत | इत्यत: |
| १२४ | ३ | तदपायत् | तदपायात् |
| १२५ | २४ | सिद्धच रणा | सिद्धचारणा |
| १२८ | २४ | १८ | २८ |
| १३० | २५ | वैवि य | त्रैविध्य |
| १३६ | २४ | विषय. | विषय: |
| १३६ | २५ | श्लो. | श्लो. ६½ |
| १३७ | १० | तय | तया |
| १३८ | २३ | अप्र | अप्र |
| १३८ | २७ | 'अतिप्रसिद्धत्वाभावात्' इतिपाठो युक्तो भाति । | |
| १४० | १६ | चतुर्वि ध्य | चातुर्विध्य |
| १४४,१४६ | ६ | प्राप्ता; | प्राप्ता: |
| १४८ | १७ | स ङ्कर्यम् | साङ्कर्यम् |
| १५२ | १७ | नित्य | नित्य– |
| १५५ | ३ | नित्य नित्य | नित्यानित्य |
| १५७ | ११ | त प्राय | तत्प्राय |
| १५९ | २३ | दर्शयिष्याग | दर्शयिष्याम |
| १६४ | १७ | 'वेण' पदेन वर्तादे: | 'वेद' पदेन वर्णादे: |
| १६५ | १५ | तयां | तया |
| १६६ | ७ | प्रध्वसे | प्रध्वंसे |
| १६९ | १४ | कटस्थ | कूटस्थ |

| | | | |
|---|---|---|---|
| १७० | ३ | प्र वंसयो: | प्रध्वंसयो: |
| १७१ | २ | अपू र्णि | अपूर्वाणि |
| १७२ | ६ | व्यवस्थ- | व्यवस्था |
| १७३ | ७ | ईश्वरा | ईश्वर- |
| १७५ | १६ | पञ्चात् | पञ्चाशत् |
| १७६ | १६ | ब्रम: | ब्रूम: |
| १७६ | २३,२५ | वाक्यत् | वाक्यम् |
| १७८ | १५ | कमस्य | क्रमस्य |
| १८१ | २० | स्थ ाने" | स्थाने " |
| १८६ | ८ | विवक्षितत् | विवक्षितम् |
| १८२ | १०,११ | कमस्य | क्रमस्य |
| १८३ | ६ | निष्ठता भ्रम | निष्ठताभ्रम |
| १८३ | १८ | नित्याविस्य | नित्यानित्य |
| १८३ | २३ | प्राक्यम् | वाक्यम् |
| १८६ | १० | स्पष्ट करणम् | स्पष्टीकरणम् |
| १८८ | ९ | नित्या नित्यतया | नित्यतया |
| १८९ | ९ | नित्यत्र्यै-वि ध्ये | नित्य त्र्यैविध्ये |
| १८९ | १८ | ाजज्ञ सा | जिज्ञासा |
| १९० | १८ | तयो– | तयो:– |
| १९१ | २८ | १· कानाकान्त | २· कानाक्रन्त |
| १९२ | ३ | देश्च | 'द्यैश्च' इति युक्तं भाति |
| १९२ | १६ | इति | इति; |
| १९२ | २४ | ई[1]त्यादिकम् | ई[2]त्यादिकम् |
| १९५ | १८ | तद्रपत्वम् | तद्रूपत्वम् |
| १९५ | २१ | वक्ष्यते | वक्ष्यते । |
| १९६ | १४ | पृथक | पृथक् |
| १९७ | १४ | स्वरूपत: उत्पत्तिविनाशौ:! | स्वरूपत: उत्पत्तिविनाशौ |
| १९७ | १८ | सान्य | सामान्य |
| १९७ | २३ | उत्पत्य | उत्पत्त्य |
| १९८ | ८ त: १३ | ननु···परिहृत: । | **ननु···परिहृत: ।** |
| १९९ | २४ | नित्यानित्यावधान्तरम् | नित्यानित्यविधान्तरम् |
| २०५ | २५ | उ प्रेक्षितुं | उत्प्रेक्षितुं |

| | | | |
|---|---|---|---|
| २०६ | २ | अहङ्काराशो | अहङ्कारांशो |
| २०६ | २२ | भूक्ष्मादि | सूक्ष्मादि |
| २०८ | २ | सगै | सर्गे |
| २१३ | ६ | पूर्वोक्त | 'पूर्व क्त |
| २१३ | १३ | २ | २) |
| २१५ | २ | पुराणानाले | पुराणानाम् |
| २१५ | ४ | काम् | काले |
| २१६ | २५,२६ | [ २८…निरूपणे– | × |
| २१९ | ९ | प्रथम व्याख्याने | प्रथमव्याख्याने |
| २१९ | २५ | आगम सम्मतम् | आगमसम्मतम् |
| २२२ | ४ | ससृष्टम् | संसृष्टम् |
| २३१ | ११ | चरणश्च | चरणश्च |
| २३१ | २५ | गीता १३.५. | गीता १३–५. |
| २३२ | १ | ३३२ | २३२ |
| २३५ | १६ | प्रकाशयो- | प्रकाशयोः |
| २३६ | ९ | समासः | 'समासः |
| २३७ | ५ | ईश्वरे | ईश्वरे |
| २३७ | ६ | ज्ञानमान | ज्ञायमान |
| २३८ | ५ | सृष्ट्य दि | सृष्ट्यादि |
| २३८ | २८ | क्रुप्रति | प्रकृति |
| २४३ | १९ | तत्तद्ध[illegible]ति | तत्तद्धस्त्विति |

# पूर्णप्रज्ञप्रकाशनम्

इत्यनया संस्थया सम्पादिताः प्रकाशिताश्च ग्रन्थाः-

१) बिल्वमङ्गलः साधुः- (सत्यपरायणतीर्थकृतव्याख्यासहितम्)

२) प्रमाणलक्षणम्- (पद्मनाभतीर्थकृतटीकासमेतम् । )

३) षट्प्रश्नोपनिषद्- (मध्वाचार्यकृतभाष्येण, टीकाचार्यकृतटीकया, केसरी केशवाचार्यकृत-पञ्जिकया, वरखेडी भीमसेनकृत-टीकाद्यर्थसङ्ग्रहेण, सङ्क्षेपेण तथा महाराष्ट्रभाषान्तरेण च समेता ।)

४) भावाभावस्वरूपे- (मध्वाचार्यकृततत्त्वसङ्ख्यानस्थांशस्य टीकाचार्यकृतटीकायाः गूढकर्तृका टिप्पणी आंग्ल-कन्नड-महाराष्ट्र-तात्पर्यसमेता । )

५) तत्त्वसङ्ख्यानम्- (टीकाचार्यकृतटीकया, अपूर्वषट्टिप्पणीभिश्च समेतम् ।)